# SARASVATĪ BHAVANA GRANTHAMĀLĀ

VOL. 31

*Part III*



**GENERAL EDITOR :—**

Kshetresachandra Chattopadhyaya

Director, Research Institute,

Varanaseya Sanskrit Vishvavidyalaya,

Varanasi.





# TANTRARATNA

*by*

**Pārthasārathi Miśra**


VARANASI

1963

सरस्वतीभवन-ग्रन्थमाला

( ३१ )

# तन्त्ररत्नम्

( टुप्टीकाव्याख्यानम् )

## पार्थसारथिमिश्रविरचितम्

( तृतीयो भागः )

सम्पादकः

शास्त्ररत्नाकर-पण्डितराज-पदवाक्यमाननिपुणादिविरुदभूषितः

श्री ति०वे०रामचन्द्रदीक्षितः ।




चौखम्भा विश्वभारती

चौक ( चित्रा सिनेमा के सामने )

वाराणसी-२२१००१

वाराणस्याम्

१८८५ तमे शकाब्दे

॥ श्रीः ॥

# विज्ञप्तिः

गङ्गानाथं शिवं नत्वा गोपीनाथं तथा हरिम् ।
मीमांसाग्रन्थरत्नस्य प्रकाशः क्रियतेऽधुना ॥

तन्त्ररत्नाभिधो ग्रन्थः पार्थसारथिनिर्मितः ।
व्याचक्षाणोऽपि टुप्टीकां भाष्यार्थस्यापि बोधकः ॥

प्रक्रान्तं गुरुवर्यैर्मे पूर्वमस्य प्रकाशनम् ।
श्रीगोपीनाथविद्वद्भिः कविराजसमाह्वयैः ॥

तत्रैव प्रथमो भागः श्रीगङ्गानाथशर्मभिः ।
गुरुभिः शोधितः सम्यक् सर्वशास्त्रधुरन्धरैः ॥

तदस्वास्थ्याद् द्वितीयस्य भागस्य शोधनं कृतम् ।
गोपालशास्त्रिभिर्नूनं बहुविद्याविचक्षणैः ॥

चिरान्निरुद्धे कार्येऽस्मिन् शिष्टांशस्य प्रकाशनम् ।
विश्वविद्यालयेऽस्माभिः पुनरेव प्रवर्तितम् ॥

मीमांसाशास्त्रविद्भिश्च श्रीरामचन्द्रदीक्षितैः ।
भागस्यास्य प्रकाशाय यत्नेन शोधनं कृतम् ॥

तृतीयेन च भागेन षष्ठाध्यायः समापितः ।
प्रार्थ्यते विदुषां तोषः क्षेत्रेशचन्द्रशर्मणा ॥

---

# आमुखम्

इह खलु "पदवाक्यप्रमाणपारावारपारीण" इत्यादिर्विद्वन्मूर्द्धन्यानां गुणानुवर्णन-प्रसङ्गे विशिष्टा संस्तुतिः प्रयुज्यमाना दरीदृश्यते। तत्र पदं नाम सर्वविद्यामूलभूतं व्याकरणशास्त्रं प्रसिद्धमेव। तथा प्रमाणमपि गौतमीयं न्यायशास्त्रम्, यत्सर्वशास्त्रोप-कारकं सर्वैरिष्यते। मध्ये च तयोर्मध्यमणिन्यायेन संग्रथितं वाक्यशास्त्रं तु पूर्वोत्तरभावेन द्वेधा व्यवस्थितं मीमांसाशास्त्रं नाम भण्यते, सागरप्रख्ये यस्मिन्नेवाय-तन्ते, तरङ्गभेदा इव, सर्वे वाक्यार्थनिर्णयानुकूला न्यायविशेषाः। तदिदं पूर्वतन्त्राख्यं महर्षिजैमिन्युपज्ञं मीमांसाशास्त्रं त्रयीगतकर्मकाण्डवाक्यविचारपरतया प्रवृत्तमपि वस्तुतस्तत्त्वदर्शनम्, क्रतुप्रयोगकल्पः, शाब्दन्यायविचारणम् इत्येवंविधा-स्तिस्रो मूर्तीर्बिभ्रत् समालक्ष्यते। अत एव शास्त्रतात्पर्यविदः **शबरस्वामिनः** स्वे भाष्ये तत्र तत्रेमानि त्रीणि रूपाणि, विशेषतस्तर्कपादे तत्त्वदर्शनात्मकं रूपं च बहुधा वितेनिरे। प्रसादगुणयुक्तमपि तद्भाष्यमतिगभीरार्थतया न सर्वेषां सुलभावगाहमिति पश्यन्तः **श्रीकुमारिलभट्टपादा**स्तदुपरि उक्तानुक्तदुरुक्तलक्षणलक्षितं वार्त्तिकाख्यं तत्तादृशं व्याख्यानं रचयाम्बभूवुः, यत्र न केवलं भाष्यनिगूढार्थाः प्रकाशं लम्भिताः, विषयाश्च बहवो भाष्यस्था निरनुक्रोशतया विमृष्टाः, यावद् भाष्यानुक्ता अपि नैक-विधा अर्था निरूपिताः स्वोपज्ञम्। किं बहुना, निरूप्यमाणसुभगंभावुकनानापदार्थ-निचिततया विसृत्वरप्रचारं वार्त्तिकमिदं भाष्यमप्यतिशयानमिव पूर्वमीमांसादर्शन-मूलस्तम्भायमानं विराजते। सर्वशास्त्रेषु च तदनन्तरप्रवृत्ता ग्रन्थकाराः स्वोक्तार्थ-प्रामाणिकतायै वार्त्तिकान्युदाहृत्यैव निर्वृता भवन्ति स्म।

तदिदं वार्त्तिकं शास्त्रस्य द्वादशस्वध्यायेष्वात्मानं त्रेधा विभज्य प्रतितिष्ठति। तत्राद्यस्तर्कपादाख्यस्य प्रथमाध्यायप्रथमपादस्य विस्तृतव्याख्यारूपः पद्यमयत्वात् **श्लोकवार्त्तिकम्** इति प्रख्यामुपगतः। ततो द्वितीयपादमारभ्य तृतीयाध्यायसमाप्ति-पर्यन्तस्य भाष्यस्य व्याख्या गद्यमयी बहुभिरान्तरश्लोकैः सङ्ग्रथिता **तन्त्रवार्त्तिकम्** इत्याख्यायते। तृतीयस्त्वतितमां संक्षिप्तरूपश्चतुर्थाध्यायप्रभृतेर्द्वादशाध्यायान्तस्य भाष्यस्य विरलव्याख्यारूपः सूत्रकल्पैर्वाक्यैः सन्दृब्धतया **टुप्टीका** इति व्यपदेश-भाजनं समस्ति।

तत्र प्रायः कुमारिलभट्टानां वचनशैल्यतिनिष्ठुरा दुरधिगमार्था च भवतीति तन्निगूढार्थसारोज्जिहीर्षया व्याख्यां **तन्त्ररत्नं** नाम रचयामासुर्महामहोपाध्याय-**श्रीपार्थसारथिमिश्राः**। तत्र तत्त्वदर्शनसङ्गतार्थविचारपरस्य श्लोकवार्त्तिकस्य व्याख्या **न्यायरत्नाकरो** नाम प्रसिद्धैव, यत्र मीमांसादर्शनानुगताः प्रक्रियाः कार्त्स्न्येन विशदीक्रियन्ते। तथा टुप्टीकाया उपरि तन्त्ररत्नाख्यं व्याख्यारत्नमुपकल्प्य बहूपकृतवद्भ्यो मिश्रवर्येभ्यो धारयत्येवासंशयं पण्डितलोकः। यतः प्रायोऽनिर्ज्ञात-परमार्थैव तन्त्ररत्नसहकारं विना टुप्टीकेत्यनुभवसिद्धमेतत्। एतां स्थितिमध्य-वसायैव महामहोपाध्यायैः **श्रीगङ्गानाथझा**महोदयैर्बहुभ्यो वत्सरेभ्यः पूर्वमेव १९३० ई० वत्सरेऽस्य ग्रन्थस्य चतुर्थाध्याये पादद्वयपर्यन्तो भागोऽत्रैव मुद्रयित्वा प्रकाशमुपनीतः। तत्र च प्रास्ताविके तैरित्थं स्वाशय आविष्कृतः—"इत ऊर्ध्वमस्य ग्रन्थस्य संशोधनादौ पर्याप्तमस्यां वार्धकदशायां शरीरदार्ढ्यं न संभावयामि। अत एतस्य ग्रन्थस्यावशिष्टं संशोधनकार्यं यद्येतद्विद्यालयस्थः कोऽपि पण्डितप्रवरोऽभ्युपपद्येत, तदा तन्मम महते प्रमोदाय कल्पेतेति। तदनन्तरं पण्डितप्रवर**श्रीगोपालशास्त्रिनेने**महोदयैरुपरितनो भागः पञ्चमाध्याय-द्वितीयपादीयदशमाधिकरणपर्यन्तो द्वितीयसंपुटात्मना १९३३ ई० वत्सरे प्रका-शितः। ततो बहुतिथे काले व्यतीते साम्प्रतमीदृशस्य पण्डितकुलात्यन्तोपयोगिनो ग्रन्थरत्नस्योपदेशविचारात्मकं षष्ठाध्यायपर्यन्तं भागं तृतीयसम्पुटं संशोध्य मुद्रयित्वा प्रकाशनायावकाशमुपकल्पितवद्भ्यः श्रीमदुपकुलपतिमहोदयेभ्यः, अनुसन्धान-विभागसंचालकेभ्यश्च हृदयपूर्वां कृतज्ञतां निवेदयामः।

एवं तावत् श्लोकवार्त्तिकं टुप्टीकां च वार्त्तिकस्य प्रथमतृतीयौ भागौ व्याच-क्षाणैः पार्थसारथिमिश्रैः, सम्भावयामः, तन्त्रवार्त्तिकं द्वितीयो भागोऽपि नियतं व्याख्यात एव भवेत्, यतोऽविशिष्टा महार्थभूयिष्ठता तन्त्रवार्त्तिकस्यापीतर-भागाभ्याम्; अविशिष्टा च तादृशी श्रद्धा मिश्राणामस्मिन्नपि ग्रन्थे। तदितः परमेव गवेषणया संप्रधार्यम्—यद्येषां तद्व्याख्यानाय पर्याप्तः समयो नावाप्तः, यदि वास्मदृष्टिगोचरमप्रतिपद्यमानेषु **श्रीसोमनाथशम्भुभट्टाभ्यां** तत्र तत्र निर्दिश्यमानेषु **मीमांसाप्रकाशा**दिष्वन्यतमोऽयं ग्रन्थः स्यात्। सर्वथा-ऽपि तु **न्यायरत्नमाला-शास्त्रदीपिका-न्यायरत्नाकर-तन्त्ररत्नै**श्चतुर्भिर्ग्रन्थरत्नैः सर्वोपादेयं मीमांसाशास्त्रस्य कौमारिलं प्रस्थानं पार्थसारथिमिश्रा एव प्रत्यतिष्ठिपन्नित्यविप्रतिपन्नं सर्वेषाम्। यद्यपि **श्रीभट्टोम्वेक-सुचरितमिश्र-**

प्रभृतिभिः श्लोकवार्त्तिकव्याख्याविरचनेन, तथा **श्रीवेङ्कटशमखिभिर्वार्त्तिकाभरणाख्यव्याख्याप्रणयनेन** च भाट्टप्रस्थानं बहुधा परिष्कृतम्, तथापि नैतेषु ग्रन्थेषु भाट्टप्रक्रियानुगताः सर्वेऽर्था युक्तिभिस्तथोपपादिताः, यथा पार्थसारथिमिश्रैः । **श्रीखण्डदेवस्तु** अधिकरणरचनासाहस्यामपि भाट्टप्रक्रियामेव सर्वथा व्युत्पादयाम्बभूव । परन्तु तस्य नव्यमार्ग एव भूयान् समादरो लक्ष्यते । तथा च तत्र तत्र वार्त्तिकोक्तानर्थानपि व्युत्थापयत्येव । एवं स्थितेऽपि खण्डदेवस्यास्ति पार्थसारथिमिश्रापेक्षया कश्चिदतिशयो भाट्टमतसम्बन्धिशाब्दबोधप्रक्रियाव्युत्पादने । तथाहि भारतीयानां शास्त्रेषु शाब्दबोधप्रक्रियाव्युत्पादनं नाम मुख्योऽवयवः, येन विरहितं तत् शास्त्रं सम्पूर्णमेव न भवति । तद्यथा व्याकरणशास्त्रे शाब्दबोधैकताना **वैयाकरणभूषणसारः, मञ्जूषा** इत्येवमादयो ग्रन्थाः, तथा न्यायशास्त्रेऽपि **विभक्त्यर्थनिर्णय-व्युत्पत्तिवादप्रभृतयः** । मीमांसाशास्त्रं तु तादृशबोधग्रन्थरूपावयववैकल्येनापूर्णं सद् **भाट्टरहस्यग्रन्थनिर्माणेन** खण्डदेवः पूर्णतां प्रापितवान् । यद्यपि च धात्वर्थः, आख्यातार्थः, कारकार्थः, एषामन्वयक्रम इत्येवमाद्यर्थजातं मिश्रपादैरपि स्वीयग्रन्थेषु सुनिरूपितं चकास्ति, तथापि बोधप्रधानो ग्रन्थो न तैर्व्यरचीति खण्डदेवस्य तत्रासाधारण्यं बोध्यम् ।

अस्त्वेतत् । भाट्टमतप्रक्रियामुपपिपादयिषन्तः पार्थसारथिमिश्रास्तदुपपादनं द्वाभ्यां प्रकाराभ्यां समपीपदन्, स्वपक्षसाधनेन परपक्षनिराकरणेन च । तथाहि— भाट्टमतप्रचारेण समकालमेव प्रभाकरगुरुः स्वकं विलक्षणं किञ्चिन्मतमुत्थापयति स्म, यत्खलु गुरुमतं प्रभाकरमतमिति च प्रख्यां प्रतिलभ्य परस्तात् **शालिकनाथ-भवनाथाभ्यां** बहुधा वितानितम् । तद्यदि सहोद्यत् सर्वेषु प्रक्रियांशेषु प्रतिपक्षाचरणं विदधच्च तन्मतमुपेक्ष्येत, तदा नूनं सुप्रतिष्ठितमपि भाट्टमतं शिथिलीभवेदिति शङ्कमान इव मिश्रः सति प्रसङ्गे, तत्र तत्र स्वयं च प्रसङ्गमुत्पाद्य पदात्पदं प्रभाकरप्रक्रियां तिलशो विभज्य समूलकाषं कषति स्म । एवं स्वजीवितपरमोद्देश्यभूताय भाट्टमतप्रतिष्ठापनाय मिश्रैरवतारितेषु ग्रन्थविशेषेषु सर्वप्रधानभूतं साक्षाद्वार्त्तिकव्याख्यानरूपं च **तन्त्ररत्नम्** अधिकतरमाश्चर्यमस्माकं चेतस्यावहति यदेतावता कालेन न प्रकाशमलभत । अत एवास्य पण्डितलोकचिरप्रेप्सितस्य बहिरवतारणेऽस्मदनुसन्धानविभागस्यायं त्वरातिशयो येन विलम्बासहतया तृतीयसम्पुटमात्रं साम्प्रतं प्रकाश्यते । भविष्यत्येव समनन्तरमेवावशिष्टयोश्चतुर्थपञ्चमसम्पुटयोरपि प्रकाशनम् ।

तदिहावसरप्राप्तं यदीशवीयैकादशशतकात् पूर्वमिति गवेषकैर्निर्णीतस्य पार्थसारथिमिश्रजन्मसमयस्य बाह्यैरान्तरैश्च लिङ्गैः समीक्षणम् , तदभिजन-देश-तच्चरितादिविषयं च वक्तव्यम्, यच्च मीमांसाशास्त्राभिवृद्धिक्रमे कतमत्स्थानमधिरोहति मिश्रपादः, न्यायरत्नमालादीनां यथानिर्दिष्टतदीयग्रन्थानां कः पौर्वापर्यक्रमः, तथा तद्ग्रन्थप्रतिपादितेषु विषयेषु कीदृशस्तरतमभाव इत्येवंजातीयकं सर्वमर्थजातमचिरादेव पञ्चमसम्पुटप्रकाशनावसरे यथायथं सविस्तरमाविश्चिकीर्षामः ।

अस्य तन्त्ररत्नस्य संशोधनं वाराणसेयसंस्कृतविश्वविद्यालयीयसरस्वतीभवनस्थमातृकात्रयावलम्बनेन व्यधायि । तत्र प्रथमा २९१६३ संख्याङ्किता कसंज्ञिता नातिशुद्धा । द्वितीयापि २९००७ संख्याङ्किता खसंज्ञिताऽशुद्धा । तृतीया तु शुद्धैव २९५५७ संख्याङ्किता गसंज्ञिता । आसाञ्च तिसृणां मातृकाणां बहुत्र पाठभेदबाहुल्यदर्शनेन गम्यते यथेमास्तिस्रो मातृका भिन्नभिन्नस्रोतोभ्यः प्रतिलब्धा इति ।

अस्मिंश्च संस्करणे रीतिरियमादृता—कोशेषु ये पाठभेदा लक्ष्यन्ते तेषु सुश्लिष्टः पाठ उपरि ग्रन्थशरीर एव स्थापितः । अतादृशस्तु पाठो देवनागरीलिप्यङ्कनिर्देशेनाधस्तान्निवेशितः । यत्र नास्त्यर्थभेदः स्वारस्यातिशयो वा स पाठभेदो न प्रदर्शितः । वाक्येषु यः पुनरुक्तोऽधिको वा भागः प्रतिभाति स्म सः ( ) इति चिह्नेन कुण्डलितोऽस्ति । यत्र च विचारणया पाठभेदः शुद्धतया संभावितः स [ ] इति चिह्नेन संदश्य यथावस्थितपाठमध्ये निवेशितोऽस्ति । अयं चास्मिन् संस्करणे विशेषो यद् विषमस्थलेषु पदार्थं वाक्ययोजनां भावविशेषं चाविष्कुर्वती रत्नशिखा नाम टिप्पणी यथास्वमतिवैभवं प्रबध्य संयोजिता, आङ्गलाङ्कयोजनेन चाधस्तान्निवेशिता; यस्यां प्रसङ्गात्तन्त्ररत्नोपरि श्रीखण्डदेवमिश्रैः शम्भुभट्टैश्च प्रसञ्जितानि दूषणानि परीक्ष्यन्ते, मीमांसाप्रक्रियागतास्चार्थविशेषा आविष्कृताः सन्ति ।

अयमपरो विशेषोऽप्यत्रावधेयः—पूर्वमुद्रितयोर्भागयोस्तन्त्ररत्ने व्याख्यानायोपात्तानां टुप्टीकापदानां भाष्यस्थपदानां च स्थलविज्ञानाय यथाक्रमं बनारससंस्कृतसिरीज-प्रकाशितटुप्टीकायाः, एशियाटिकसोसाइटी-प्रकाशितशाबरभाष्यस्य च पृष्ठपङ्क्तिसंख्या दर्शिताः । तयोर्ग्रन्थयोः साम्प्रतं दुरवापतया तं मार्गं परित्यज्यात्र प्रकारान्तरमादृतम् । व्याख्यानोपात्तानि मूलपदानि स्थूलाक्षरमयानि मुद्रितानि । प्रायस्तन्त्र त्ने मूलस्थानि सर्वाण्यपि पदान्युपादाय स्वीयैर्व्याख्यापदैः साकं योजनाया दर्शितत्वात् पृथगत्र टुप्टीकाग्रन्थदर्शनापेक्षा नैव भवति, क्वचिदपेक्षायामप्यधिकरणसूत्रसंख्यानिर्देशेनैव तानि स्थलानि सुज्ञातानि भविष्यन्तीत्यतो हेतोः पृष्ठसंख्यादिनिर्देशो नापेक्षित इति ।

संस्कृतग्रन्थेषु मुद्राप्यमाणेषु प्रायो बहवोऽशुद्धयोऽनिवार्यतया समापतन्ति। ततश्च सर्वग्रन्थेषु शुद्धाशुद्धपत्रिकामन्ते निवेश्यमानामभिलक्षयामः, येन प्रेक्षावतां वैरस्यं महत्सम्भवतीति च। तद्यथायं दोषः संस्करणेऽस्मिन्न प्रादुष्ष्यात् तथारम्भत एव समधिकतरावधानेन पूर्वरूप (Proof) पत्रं निध्यातव्यम्, शुद्धिपत्रिका च न संश्लेपणीयेति सुदृढं सङ्कल्प्यैव शोधनकार्यं विहितम्, तथापि मुद्रणयन्त्रारोपणसमये वर्णपङ्क्तिकायां पृष्ठसं० ५२८ अन्तिमायां पङ्क्तौ 'कर्तरि स्प' इति चत्वार्यक्षराणि श्लथानि भूत्वा मषीसंयोगं न प्रापुः। तानि स्थले संयोजनीयानि, येन पाठसौविध्यं भवेदिति विद्वांसो निवेद्यन्ते।

मातृकातः प्रतिलिपिकरणे कोशेषु पाठभेदानां संकलने च पूर्णं सहयोगं ददतः प्रकाशनविभागस्थाः सर्वे पण्डिता अस्माकं धन्यवादानर्हन्ति, विशेषतश्च यः खलु पूर्वरूप( Proof )निरीक्षणेन पाठभेदानामविपर्ययं तत्तत्स्थलनिवेशनेन चास्य ग्रन्थस्याशुद्धिदोषासंस्पृष्टतया सम्मुद्रणे मुख्यं निदानमभूत्, तस्मै प्रकाशनसहायकाय श्रीव्रजवल्लभद्विवेदिने, सूत्र-अधिकरण-उद्धारस्थल-सूचीनिबन्धने साहाय्यमाचरितवते पण्डितवरश्री ए० एम०रामनाथदीक्षिताय च बहून् धन्यवादान् आशिषश्च सामोदं वितरामः।

बहून् वारान् पूर्वरूपपत्रनिरीक्षणादिना समधिकप्रयत्नेन संशोधितेऽपि ग्रन्थेऽस्मिन्नस्मदीयबुद्धिमान्द्येन वा मनुजमात्रसुलभेनानवधानेन वा समापतितान् दोषान् 'गच्छतः स्खलन'न्यायेनाविगणय्य परमकारुणिकतयाऽशुद्धीरेनाः संसूच्य चास्माननुगृह्णन्त्विति विद्वत्प्रवरान् सविनयमभ्यर्थयामहे।

भैरवाष्टमी, २०२० वै.
२९-११-६३.

इत्थं विदुषामनुचरः—
ति. वे. रामचन्द्रदीक्षितः

# तन्त्ररत्ने

## चतुर्थपञ्चमषष्ठाध्यायानां विषयसूची

### चतुर्थोध्यायः

## पञ्चमोऽध्यायः

### प्रथमः पादः

द्वितीयः पादः



तृतीयः पादः

चतुर्थः पादः



## षष्ठोऽध्यायः

प्रथमः पादः

द्वितीयः पादः



तृतीयः पादः

चतुर्थः पादः



पञ्चमः पादः

षष्ठः पादः



सप्तमः पादः

अष्टमः पादः

[ १०–विदेवनादीनामभिषेकपूर्वकालत्वाधिकरणम् ]

**कृतदेशात्तु पूर्वेषां स देशः स्यात् तेन प्रत्यक्षसंयोगात् न्यायमात्रमितरत् ॥ २१ ॥ सि०**

अपवाद आरभ्यते । [1]राजसूयावयवभूताद**भिषेचनीयात्** सोमयागादूर्ध्वं **प्राग्** दशपेयात् '**पष्ठौहीं दीव्यति' इत्येवमादयो**ऽभिषेकान्ताः पदार्थाः क्रमेण **पठ्यन्ते ।** अभिषेकश्चाभिषेचनीयाङ्गभूतमाहेन्द्रस्तोत्रकालेऽपकृष्यते—"माहेन्द्रं स्तोत्रं प्रत्यभिषिच्यते" इति । **तत्र संशयः–किमभिषेकोऽपकृष्यमाण इत-रान्** विदेवनादीनप्य**पकर्षति उत नेति** । तत्र पूर्वपक्षभाष्यं सोपस्कारं पठति–**केवलोऽ**भिषेको**ऽपकृष्यते** तावन्मात्रापकर्षश्रवणात् । विदेवनादीनां तु **"अन्ते तु बादरायणः" इत्यन्ते** प्रयोगः कर्त्तव्य इति । तदनेन भाष्येण 'राजसूये श्रूयते' इत्युपक्रम्याभिधानाद्राजसूयान्ते प्रयोग उक्त इति कस्यचिदाशङ्का स्यात् । तद्व्यावृत्त्यर्थमाह–**राजसूयान्त इत्याशङ्कैव नास्ति** । नह्यभिषेचनीयदशपेय-मध्यपठितानां राजसूयान्ते प्रयोगः शक्यते शङ्कितुम् । **अतोऽभिषेचनीयान्त**[1] **इत्येव** भाष्यार्थः ।

कथं पुनरन्ते प्रयोगो यावता "तदन्तमपकर्षे स्यात्" इत्यनेन न्यायेन प्रयाजापकर्ष इवाघारादीनामभिषेकापकर्षादेव विदेवनादीनामपकर्षान्माहेन्द्रस्तोत्र-काल एव प्रयोगो युक्तोऽत आह—**तत्राभिषेकमात्रस्यापकर्षः । यथामा-वास्यायां वेदिमात्रस्यापकर्षो** न तु ततः प्राचाम्, **"तथापूर्वम्"**इति न्यायात्,

---

अथ तन्त्ररत्नशिखा ।

वेदाचलेश्वरं नत्वा नत्वा श्रीपार्थसारथिम् ।
टिप्पणं तन्त्ररत्नस्य शिखा नाम निबध्यते ॥

1. राजसूयावयवभूतादिति । इष्टि-पशुयाग-सोमयागसमुदायात्मको राजसूयः । समुदायान्तर्निविष्टः समुदायी इहावयवशब्देन विवक्षितः ।

१. 'नीयात्परतः पाठादभिषेचनीयान्त' इति पाठः–ख० ।

तद्वि[द्व]दिहापि। तमेव न्यायं दर्शयति—**प्रयाजानुयाजानां** हि **प्रकृतौ सम्बन्धस्य** पौर्वापर्यरूपस्या**वगतत्वात्** तद्बाधार्थं **विकृतावेकोत्कर्षापकर्षाभ्यामेवाश्रुतानामपि** ततः प्राचां प्रतीचां **चोत्कर्षापकर्षौ युज्येते**। **इह** त्वपूर्वपदार्थापकर्षे वेद्यपकर्षव**दनवगतत्वात् सम्बन्धस्य** क्रमरूपस्य वाचनिकापकर्षोत्तरकालमेव क्रमकल्पनादश्रुतानामपकर्षवाक्ये विदेवनादीनां [1]**नापकर्षो युक्त इति**।

**एवं प्राप्ते ब्रूमः—अत्रापि** विदेवनादीनामभिषेकात्पूर्व**पाठस्य प्रत्यक्षत्वात् पूर्वैः पदार्थै**रभिषेकस्या**स्ति सम्बन्धः**। अयमभिसन्धिः—यद्यपि क्लृप्तः क्रमो नैव, किन्तु कल्प्यः; तथापि किमभिषेकात् प्राक् पठितानां विदेवनादीनामभिषेकात् पूर्वभावित्वं कल्प्यतामुताभिषेचनीयादूर्ध्वं पठितत्वात्तदीयप्राकृताङ्गपरभावः कल्प्यतामिति चिन्तायाम्, अभिषेकात्प्राग्भावित्वमेव कल्पयितुं युक्तम्, तस्य प्रत्यक्षपाठनिमित्तत्वात्। प्राकृताङ्गपश्चाद्भाविता त्वानुमानिकपाठनिमित्ता। नहि विकृतिविधिवाक्ये प्राकृतानां प्रत्यक्षः पाठः समस्ति। तदिदमुक्तम्—"न्यायमात्रमितरत्" इति। न्यायोऽनुमानम्। तच्च दुर्बलं प्रत्यक्षात्। अतः प्रत्यक्षपाठपरिकल्पिताभिषेकप्राग्भावानुरोधाय क्लृप्तदेशानां विदेवनादीनामप्यपकर्ष इति।

किञ्च, **नायं पाठोऽन्यत्र[2] कृतार्थो यथा पौर्णमास्यां**[१] **वेदे**र्हविरभिवासनोत्तरकालपाठः। **अतः** [3]**सर्वेषामपकर्षः**। एतदेव हेत्वन्तरेणोपपादयितुं पृच्छति—**नन्वभिषेचनीयपरत्वेऽपि पाठोऽस्ति**। सोऽपि हि नान्यत्र कृतार्थ इति। **उच्यते—अभिषेचनीये साङ्गे विहिते तत एतेऽङ्गस्य[4] परा**

---

1. 'नापकर्षो युक्तः' इत्यस्य स्थाने 'अपकर्षोऽयुक्तः' इति पूनामुद्रितमूलपाठः।
2. मूले 'अत्र' इति पू. मुद्रितः पाठोऽशुद्धः।
3. 'पूर्वेषाम्' इति पू० मु० मूलपाठः।
4. 'अङ्गस्य' इदं पदं पु० मु० मूले नास्ति।

१. स्यां कृतार्थो—ख०।

**भवन्ति**। नह्यभिषेचनीयाङ्गं विदेवनादयः, किन्तु साङ्गस्याभिषेचनीयस्य समाप्ते विधौ पश्चादेते विदेवनादयो राजसूयाङ्गत्वेनोक्ताः। केवलमभिषेचनीयाङ्गस्य परे विहिता भवन्ति। विधिरेव केवलमेषां पश्चाद्भवति, नानुष्ठानमित्यर्थः। किमिति पुनः पश्चाद्विहितानां पश्चादनुष्ठानं न भवति ? अत आह—तस्मादभि[**तस्याभि**]-षेचनीयाङ्गस्य प्राकृतस्य, **एतेषां च** राजसूयाङ्गानां विदेवनादीनां **भिन्नप्रयोग-वचनपरिग्रहात् पाठ एव** क्रमकल्पको **नास्ति**। नहि भिन्नप्रयोगवचन-परिगृहीतानां पाठः क्रमकल्पनाय पर्याप्नोति। वक्ष्यति हि "अङ्गवत् क्रतूनामानु-पूर्व्यम्", "न वासम्बन्धात्" इति। अभिषेकेण तु विदेवनादीनामेकप्रयोगवचनपरि-गृहीतत्वात् प्रत्यक्षपाठाचास्ति क्रमकल्पना। अतस्तद्बलेन तदपकर्षे तेषामप्यप-कर्ष इति ॥ २१ ॥

[ ११—सावित्रहोमादीनां दीक्षणीयापूर्वकालत्वाधिकरणम् ]

## प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥ सि०

अयमपि—"अन्ते तु बादरायणः" इत्यस्यैवापवादः। तत्र दीक्षणीयाया गुणविधानार्थं पुनः श्रवणम्। नानेन दीक्षणीयायाः **क्रमं**[1] कल्पयितुं शक्यते। नहि गुणानुरोधि प्रधानम्। अतो यत्र गुणी तत्रानेन गुणो विधीयत इति यत्र प्रयोग-चोदनया दीक्षणीयानुष्ठानं प्राप्तं तत्रैव साऽनुष्ठेया। उखासंभरणादीनां त्वन्ते प्रयोग इति पूर्वः पक्षः।

सिद्धान्तमाह—**सावित्रहोमाः उखासंभरणमि**त्येवमादि **विधाय** तद-नन्तरं **दीक्षणीयागुणवाक्यानि श्रूयमाणानि तत्स्थानमेव गुणिनमव-बोधयन्ति। अतोऽस्य पाठस्य प्रत्यक्षत्वात्** पूर्वाधिकरणवत् **प्रथमं सावित्र-होमास्ततो दीक्षणीया**। यद्यप्यत्र गुणो विधीयते, तथाप्यस्य पाठस्य प्रत्यक्ष-त्वेनानुमानाद् बलीयस्त्वाद् गुणगुणिनोश्चैकस्थानत्वाद् दीक्षणीयायाः सावित्रादि-परभाव इति। एतेन यत्केनचिदुक्तम्—चोदकप्राप्तानां पदार्थानां विकृतिषु श्रुति-वशादेव क्रमो न पाठवशादिति, तदनादरणीयमिति दर्शितम् ॥ २२ ॥

---

१. क्रमः—ख०।

[ १२–दीक्षितसंस्काराणां रुक्मप्रतिमोचनादिपूर्वभाविताधिकरणम् ]

## सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥ सि०

यथैव दीक्षणीयायाः सावित्रादिभिः पूर्वपठितैः सह क्रमकल्पना, तथा पश्चात् पठितैरपि [1]रुक्मप्रतिमोचनादिभिः, पाठाविशेषात्। अतो दीक्षणीयानन्तरं रुक्मप्रतिमोचनादयोऽनुष्ठेयाः, पश्चाद्दीक्षितसंस्कारा इति प्राप्ते सिद्धान्तमाह– **दीक्षणीयानन्तरं प्रकृतौ दीक्षितसंस्कारा** उपदेशेन कृताः। ते चात्रापि **चोदकेन तथैव** दीक्षणीयानन्तरं कर्तव्याः **प्राप्नुवन्ति। ननु रुक्मप्रतिमोचनादयो दीक्षणीयायाः परे श्रूयन्ते?** सत्यं श्रूयन्ते, किन्तु **तेषां चोदकप्राप्त**दीक्षितसंस्कार**ानुष्ठानव्यवहितानामपि परत्वं नैव बाध्यते।** तदबाधे च न चोदकप्राप्तः क्रमो निराकर्तुं शक्यते। विदेवनादिषु सावित्रहोमादिषु च वैकृतपाठविरोधाद् युक्तः "अन्ते बादरायणः" इत्यस्य बाधः। इह तु नास्ति विरोधः, अनन्तरपाठो ह्यवश्यपठितव्यतयाप्युपपन्नत्वान्न चोदकबाधेनानन्तर्यं रुक्मप्रतिमोचनादीनां कल्पयितुमर्हति। तस्माद्दीक्षितसंस्काराः[१] पूर्वमनुष्ठेयास्ततो रुक्मप्रतिमोचनादय इति सिद्धम् ॥ २३ ॥

इति पार्थसारथिमिश्रविरचिते तन्त्ररत्ने पञ्चमाध्यायस्य

॥ द्वितीयः पादः ॥



---

1. रुक्मप्रतिमोचनेति। उखां शिक्य आसज्य कण्ठे धारयति यजमानः। तदा उख्याग्निनोरःप्रदेशे संतापवारणाय व्यवधायकतया सौवर्णस्याभरणविशेषस्य वक्षसि स्थापनं रुक्मप्रतिमोकः।

१. 'दीक्षित' इत्यारभ्य उत्तरपादस्थे 'विवृद्धिः' इति सूत्रे 'तस्य' इत्यन्तः पाठः ख.पुस्तके नास्ति।

# अथ पञ्चमाध्याये तृतीयः पादः ।

[ १–प्रयाजादिगतैकादशत्वादिसंख्यायाः सर्वसंपाद्यत्वाधिकरणम् ]

**विवृद्धिः कर्मभेदात् पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥ पू०**

"एकादश प्रयाजान् यजति" इति संख्यात्र प्रयाजानामङ्गत्वेन विधीयते। तेषां च प्रयाजानामुद्दिश्यमानत्वात् तेषां साहित्यमविवक्षितम्। अत एकैक एव प्रयाज एकादशसंख्यया सम्बध्यते। तथानुयाजा उपसदश्च ॥ १ ॥

**अपि वा सर्वसंख्यत्वात्तद्विकारः प्रतीयेत ॥ २ ॥ सि०**

[1]पृथक्त्वनिवेशिनी हि संख्या। तत्र द्रव्याणां पृथङ्निष्पन्नरूपाणां घटपटादीनामेकया नयनादिक्रियया सम्बध्यमानानां तेनैवावच्छेदेन युज्यते संख्या दश घटा आनीयन्तामिति। इह तु प्रयाजादीनां क्रियारूपाणां द्रव्यवत् पृथङ्निष्पत्तेरभावाद् येयमेकादशसंख्या निष्पत्तिव्यतिरिक्तक्रियावच्छेदनिबन्धना सा न युज्यते। कुतः? उत्पत्त्यपेक्षा हि कर्मणां संख्या भवति। भवति चोत्पत्त्यपेक्षा संख्या यथा दश घटाः कर्तव्या इति। भवत्वेवम्, तथापि किमित्याह–उत्पत्तौ चावच्छेदकत्वेनापेक्ष्यमाणायां यदि प्रयाजस्वरूपे संख्या विधीयेत ततो द्विधापि, यद्येकैकस्मिन् अथ समस्तेषु, उभयथाप्येकादशसंख्या न युज्यते। तथा हि–यदि तावदेकस्मिन् स्यात्ततस्तत्र साक्षादयुज्यमानत्वात्[2] तल्लक्षितेन प्रयोगेण युज्यते। नह्येकः सन् एकादशीकर्तुं शक्यते। शक्यते तु तावत्कृत्वः प्रयोक्तुम्। अतः प्रयोगेणैव युज्यते। भवत्विति चेत्तत्राह—एवं चेद्यत्र[3] प्रयाजस्वरूपे श्रुता विहिता संख्या तत्र न कृता, अश्रुते च प्रयोगे कृता स्यात्। तत्र विधिबाधप्रसङ्गः।

---

१. 'पृथङ्निवेशिनी' पू. मु.

२. 'त्वाद् विकारः' इति पूनापाठः।

३. 'यत्र' नास्ति–क० ।

किञ्चाश्रुतं च पञ्चपञ्चाशत्संख्यान्तरमुपजातम्, एकैकस्यैकादशसंख्यासम्बन्धात्। यावांश्च श्रुतस्योत्सर्गे दोषस्तावानश्रुतस्य कल्पनायाम्, अतो न तावत् प्रत्येकं सम्बन्धः। **समस्तैरपि न शक्या** संख्या **योजयितुम्**। कथमस्मिन्नपि पक्षे **प्रयाजैरेकादशसंख्यैकदेशः** पञ्चत्वं **सम्बध्येत**। ततः किम्? अत आह—**अन्यस्यसंख्यैकदेशस्य** प्रयाजस्वरूपेणा**सम्बध्यमानस्य सम्पत्तये प्रयाजाः प्रयोगं** लक्षयेरन्। **तेन** लक्षितेन प्रयोगे**णासौ** संख्यैकदेशः **सम्बध्यते**। **तत्र** को दोषः? अत आह—**तत्र प्रयाजाः संख्या चोभयमपि बाध्येत**। तथा हि—**संख्या तावत्** प्रयाजेषु श्रुता सती **प्रयोगे कृता** बाधिता स्यात्। प्रयाजोऽपि संख्यासम्बन्धी श्रुतः संख्यैकदेशेन योजितो बाधित एव।

किञ्च, **अन्यश्च** प्रयाजस्वरूपासम्बद्धः **संख्यैकदेशः प्रयाजलक्षितेन प्रयोगेण युक्तः**। ततः किमित्याह–**तत्र प्रयाजोऽन्यार्थः** संख्यासम्बन्धार्थः **श्रुतोऽन्यार्थं**[1] प्रयोगलक्ष**णार्थमुच्चरितः**[2] स्यात्। न च तद्युक्तम्, नह्यन्यार्थात् सन्निहितादप्यन्यत् सम्पादयितुं शक्यते। यथा भार्या राज्ञः पुरुषो देवदत्तस्येति न भार्याविशेषणार्थमुच्चरितेन राज्ञा पुरुषो विशेष्यते। **किञ्चा**त्रायमपरो दोषः **सकृदुच्चरितः** प्रयाजशब्दः श्रुतिवृत्तः **संख्यया** च **सम्बध्येत, प्रयोगं** च **लक्षयेत्**। न च युगपत् श्रुतिलक्षणावृत्तिसम्भवः। तेन **द्वयोरप्यन**योः पक्षयो**रश्रुतकल्पना** अशब्दार्थकल्पना स्यात्। नह्यन्यार्थात् शब्दाद् अन्यदाश्रीयमाणं शाब्दं भवति, नापि श्रुतिवृत्ताल्लाक्षणिकार्थपरिग्रहः शाब्दः। **तस्मात्** श्रुतिवृत्तयोः संख्याप्रयाजयोरन्वयायोगा**दन्यः प्रकार आश्रीयते**। यदि **वा प्रयाजशब्दः प्रयोगं लक्षयेदथवा संख्या लक्षणावृत्ता** पञ्चत्वलक्षणार्था। **तत्र प्राथम्यादविरोधात्** प्रथमश्रुतत्वेनासञ्जातविरोधि(त)त्वाद् **मुख्यवृत्ता संख्या**। **यदि च लक्षणावृत्ता** संख्या **स्यात्, ततस्तया पञ्चत्वे लक्ष्यमाणे** प्रकृतित एव पञ्चत्वस्य प्राप्तत्वाद**प्रवृत्तिविशेषकरं वाक्यं स्यात्**। **तस्मा**त्पारिशेष्या**त् प्रयाजाः प्रयोगं**

---

१. न्यार्थः–ख०।

२. णार्थः–ख०।

लक्षयन्ति। भवत्वेवम्, प्रकृते तु किमायातमित्याह–**ते**[1] **च लक्षयन्त इतरेतरसव्यपेक्षा लक्षयन्ति**। कुतः? **संख्याया हीदमेव स्वाभाव्यं** स्वभावः, स्वार्थिकः ष्यञ्, **यदुत भिन्नेष्वितरेतरयुक्तेषु प्रवर्त्तते**।

एतदुक्तं भवति–सत्यमुद्देश्यसाहित्यमविवक्षितम्; न त्विह प्रयाजा उद्दिश्यन्ते, यतः प्रतिप्रयाजं संख्या स्यात्। किन्तु प्रयाजोपलक्षितं प्रयोगमुद्दिश्य संख्या विधीयते। तत्रापि च न प्रत्येकं प्रयाजाः प्रयोगं लक्षयन्ति, किन्त्वितरेतरसापेक्षाः। संख्या हि भिन्नानामितरेतरसापेक्षाणां तन्त्रेणैकेनोपकर्तुं शक्नोति। तत्र किमिति समस्तैरेकशब्दाभिहितैः प्रयाजैः प्रयोगोपलक्षणे सम्भवति प्रत्येकं प्रयोगो लक्ष्यते[1]। पृथक्त्वनिवेशिसंख्यासम्बन्धार्थं यावन्ति पृथग्भूतानि ततोऽधिकान्येव लक्षणया गमयितव्यानि। तस्मात् सहितैः प्रयोगलक्षणेति[2]।

यत्तु पूर्वपक्षे पृषदाज्यवदित्युक्तम्, तत्राह–**योऽन्यो गुणः** पृषदाज्यादिः **स इतरेतरनिरपेक्षैरेव सम्बध्यते**। तत्र हि श्रुतैरेवानुयाजैः पृषदाज्यान्वयसम्भवान्न प्रयोगो लक्ष्यते। श्रुताश्च बहवोऽनुयाजाः, तेषां चोद्दिश्यमानानामविवक्षितसाहित्यत्वात् प्रत्येकमेव पृषदाज्यं सम्बध्यते। किञ्च, **एकैकेन**[2] **च प्रधानेन**

1. 'प्रत्येकं प्रयोगा लक्ष्यन्ते' इति प्रभावल्यां श्रीशम्भुभट्टधृतः पाठः।
2. अत्र प्रयाजपदेन पञ्चप्रयाजानामेकः प्रयोगो लक्ष्यत इति ग्रन्थकर्तुर्मतम्। तत्र च प्रयोगैक्यं परस्परसापेक्षनानाप्रयोगविशेष्यक-एकत्वप्रकारकापेक्षाबुद्धिविशेषविषयत्वरूपं विवक्षितम्। अतः प्रयाजानां प्रयोगैक्ये प्रमाणं नास्तीति श्रीशम्भुभट्टस्य दूषणप्रयासोऽलग्नकः। इह च प्रयोगलक्षणेत्युपक्रममात्रम्। प्रयुज्यमानत्ववेषेण प्रयाजानां लक्ष्यत्व एव पर्यवसानं बोध्यम्। द्वित्वादिसंख्यायाः परस्परसहितनानावस्तुवृत्तित्वस्वाभाव्यात् प्रयाजानां प्रधानत्वेऽपि न प्रत्येकमेकादशत्वान्वयः; किन्तु सहितेष्वेवेति नानुपपत्तिः काचिदिति।

१. 'ते च' इत्यादितः 'एतदु' इत्यन्तः पाठो नास्ति–ख०।
२. एकेन–ख०।

**परस्परनिरपेक्षेणैव वशीक्रियते**। नह्यसौ संख्यावदनेकवृत्तिस्वभावः, यत्तन्त्रेण सर्वेषामुपकुर्यात्। संख्यायामेतदुभयमपि नास्ति। नहि सा कर्मस्वरूपेण सम्बन्धुं समर्था। न चान्यनिरपेक्षैकत्र वर्तते। **अतोऽयं गुणोऽपि सन्** प्रयाजाद्युपलक्षितेन प्रयोगेण सम्बन्धादनेकवृत्तिस्वभावत्वेन च समस्तोपलक्षितैकप्रयोगद्वारेणापि तन्त्रेण सर्वेषामुपकर्तुं क्षमत्वादन्य**गुणविसदृशः** सर्वसम्पाद्यः। तदिदमुक्तं सूत्रकारेण "सर्वसंख्यत्वात्" इति। सर्वलक्षितप्रयोगसम्पाद्यत्वादित्यर्थः। यद्वा सर्वेषां समुदितानामेकसंख्यान्वयसम्भवादित्यर्थः।

व्याख्यानान्तरमाह—**प्राकृतसंख्योपमर्देन चास्याः** संख्याया **निवेशः**। **प्रकृतौ च** पञ्च प्रयाजा इति श्रुतं **पञ्चत्वं समुच्चितानां न त्वेकैकस्य**। **इहापि** तदुपमर्देनैव निविशमाना समुच्चितानामे**वैकादशसंख्या**। **ननु** "समिधो यजति" इत्यादिभिः **पृथग्विहितानां** प्रयाजानामर्थ**लभ्यत्वात्** पञ्चत्वस्य तत्र प्रकृताविदमनूद्यते—"पञ्च प्रयाजा इज्यन्ते" इति, न त्वनेन "तिस्र आहुतीः" इतिवत् संख्यायुक्तानि कर्माणि विधीयन्ते। अतः कथं पञ्चत्वपरिच्छिन्नाः प्रयाजाः। **उच्यते—अर्थात् शब्दाद्वा प्रकृतौ** समुदितप्रया**जेयत्ता** तावत्**पञ्चसंख्यापरिच्छिन्ना** शब्दे कीर्त्तिता "पञ्च प्रयाजा इज्यन्ते" इति। तेने**हापि प्रयाजसम्बन्धेन** प्रकृतिलिङ्गेन **एकादशसंख्या** समुदितानामेव **परिच्छेदिका भवितुमर्हतीति**। सर्वसंख्यत्वादिति च प्रकृतौ समुदितानां संख्यासम्बन्धादिहाप्येकादशसंख्या तद्विकार एव युक्त इति सूत्रार्थः।

लक्षणसङ्गतिमधिकरणस्य दर्शयति—**सर्वसम्पादनेऽन्यादृशः क्रमोऽन्यादृश इतरत्र**। प्रत्येकसम्बन्धपक्षे हि प्रथमामुपसदं द्विरुपेत्य पुनः सोपेतव्या। सिद्धान्ते तु प्रथमां द्विरुपेत्य तदनन्तरं द्वितीयोपेतव्येति क्रमविशेषादस्ति सङ्गतिः। किञ्चोत्तराधिकरणस्य **चोपोद्घात इदमधिकरणम्**। **स्थिते ह्येतस्मिन्** समुदायसम्बन्धे **दण्डकलितवदावृत्तिः**[1] **स्वस्थानविवृद्धिर्वेति चिन्ता-**

---

1. दण्डकलितवदावृत्तिरिति। क्षेत्रमानस्थले मानसाधनं दण्डं कृत्स्नं कुत्रचिन्निवेश्य पुनस्तत आरभ्य दण्डो निवेश्यते। इदं दण्डकलितं मानमुच्यते। तद्वदुपसदामावृत्तिरित्यर्थः।

वतरति । प्रत्येकसम्बन्धे तु स्वस्थानविवृद्धिरेवेति निश्चयान्न चिन्ता स्यात् । अतोऽपि नासङ्गतमिति ॥ २ ॥

[ २—स्वस्थानविवृध्योपसत्संख्यासंपत्त्यधिकरणम् ]

## स्वस्थानात्तु विवृध्येरन् कृतानुपूर्व्यत्वात् ॥ ३ ॥ सि०

भाष्यकारः पूर्वाधिकरणे प्रयाजानुयाजोपसद[1] उदाहृत्य 'उपसत्सु सन्देहः' इति इह वदन् प्रयाजानुयाजा नेहोदाहरणमिति दर्शयति । तथा हि—प्रयाजेषु तावत् पाशुकादेव प्रैषपाठादाप्रीपाठाच्च चतुर्थान्तिमयोरेव चतुश्चतुरभ्यासो न त्वाद्यानां त्रयाणाम् । तत्र हि चतुर्थोत्तमप्रयाजाङ्गभूतयोः प्रैषयोः "होतायक्षद्बर्हिः सुष्टरीमा", "होतायक्षदग्निं स्वाहा" इत्यनयोर्मध्ये "होतायक्षद् दुरो दिशः"[2] इत्येवमाद्याः षडप्राकृतदेवत्याः प्रैषाः पठ्यन्ते । तथा "प्राचीनं बर्हिः", "सद्यो जातः" इत्यनयोश्चतुर्थोत्तमयाज्ययोर्मध्ये "व्यचस्वतीरुर्विया विश्रयन्ताम्" इत्याद्याः षड् याज्याः । ते चावश्यमागन्तूनामङ्गमभ्युपेयाः, इतरेषां प्राकृतदेवत्यानां लिङ्गादेव पञ्चसु प्रयाजेषु व्यवस्थितत्वात् । तत्र यद्याद्यानामप्यभ्यासः कल्प्येत, ततः पश्चात्पठितानां मन्त्राणामपकर्षः स्यात् । तत्र प्रत्यक्षस्य मन्त्रपाठक्रमस्य बाधप्रसङ्गः । तस्माच्चतुर्थोत्तमयोरेव षडागन्तवोऽभ्यासा मध्यपठिताः संविभज्यन्त इति तयोरेवाभ्याससम्भवः । तदेतद्दशमे सूत्रभाष्यकाराभ्यामपि वक्ष्यते । तथानुयाजेष्वपि प्रत्यक्षादेव मन्त्रपाठात् प्रथमस्याद्याश्चत्वारोऽभ्यासा दशमश्च । द्वितीयस्य तु पञ्चमप्रभृत्याष्टमात् । नवमैकादशौ त्वभ्यासौ तृतीयविकाराविति सिद्धान्तितत्वान्न चिन्तावसरः ।

उपसत्स्वेव तु चिन्ता—किं दण्डकलितवदावृत्तिरुत स्वस्थानविवृद्धिरिति । तत्रावृत्तिन्यायानां लोके "त्रिरनुवाकः पठ्यताम्" इत्यादिषु दण्डकलितवदावृत्तिदर्शनादिहापि तथैवावृत्तिर्युक्तेति प्राप्ते सिद्धान्तमाह—**यथा प्रथमोपसत्परि-**

---

1. 'नुयाजो' इत्यारभ्य 'प्रैषपाठा' इत्यन्तः पाठो नास्ति—ख० ।
2. विश्वाः—ख० ।

समाप्यमाना द्वितीयामुपस्थापयति, द्वितीया तृतीयाम् ; एवं तृतीयापि कर्मान्तरं यत्प्रकृतौ स्वानन्तरानुष्ठेयत्वेन विज्ञातं तदुपस्थापयति । ततः किमित्याह–तत्र दण्डकलितवदावृत्तावाश्रीयमाणायां तृतीययानुपस्थापिता प्रथमा तदनन्तरं क्रियेत । स्वस्थानविवृद्धौ तु नैष दोषो भवति । कथं पुनरयं न दोष इत्याह—चोदको ह्यमुमेवार्थं प्रापयति यदुत प्रथमद्वितीये तृतीयस्याः पूर्वमेव कर्तव्ये । तृतीयोपसदनन्तरं प्रवर्ग्योद्वासनादि कर्तव्यमिति । दण्डकलितवदावृत्तौ तद्बाधः स्यात् । तस्मात् प्राकृतक्रमानुग्रहाय स्वस्थानविवृद्धिरेव युक्ता ॥ ३ ॥

[ ३–धाय्याशब्दितानामेव समिद्ध्यमानवतीसमिद्धवत्योरन्तरालनिवेशाधिकरणम् ]

**समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावा-पृथिव्योरन्तराले समर्हणात् ॥ ४ ॥ पू०**

किं सर्वा आगन्तवः सामिधेन्यः प्राकृतीनामन्ते स्युरुत सर्वाः समिध्यमानवतीं समिद्धवतीं[1] चान्तरा, किं वा यासु वेदे धाय्याशब्दो दृश्यते तास्तयोर्मध्येऽन्यास्त्वागन्तवोऽन्ते इति चिन्त्यते । तत्र "इयं वै समिध्यमानवती" इत्यादिवचनं विध्यश्रवणादर्थवादमात्रत्वेन यथाकथञ्चिन्नीत्वा "अन्ते तु बादरायणः" इति न्यायाद् अन्ते स्युरिति प्रथमः पक्षः । अनन्यार्थत्वात्तु वचनस्य स्तुतेश्च विधिकल्पकत्वाद्विधायकमेवेदं वचनं धाय्यानां समिध्यमानवतीसमिद्धवत्योर्मध्यस्य । सर्वाश्चागन्तवो धीयमानतया धाय्याशब्दाभिधेया इति सर्वा एवानयोर्मध्ये स्युरिति द्वितीयः पक्षः ॥ ४ ॥

**तच्छब्दा[१] वा ॥ ५ ॥ सि०**

इति सिद्धान्तः । या एव वेदे धाय्याशब्देनोक्तास्ता एव तयोर्मध्ये, अन्या-

---

1. 'समिध्यमानो अध्वरे' इत्यस्यामृचि समिध्यमानपदमस्तीति सा समिध्यमानवती । 'समिद्धो अग्ने' इत्यत्र समिद्धपदमस्तीति सा समिद्धवती इत्युच्यते ।

१. च्छब्दो–पू० मु० पाठः ।

स्त्वन्ते, धाय्यानामेवान्तरालत्वेन स्तवनात्तासामेव विधिकल्पनात्। न च धीयमानमात्राभिधायी धाय्याशब्दः, तन्मात्रे प्रयोगाभावात्। नहि स्तोत्रशस्त्राद्यर्थत्वेनागम्यमानास्वृक्षु धीयमानास्वपि धाय्याशब्दो भवति। [1]न च पाणिनिवाक्यात् सामिधेनीमात्रवाची धाय्याशब्दः, "इयं वै समिध्यमानवती असौ समिद्धवती यदन्तरालं तद् धाय्या" इति विशेषणात् सामिधेनीभेदवाचितावगमात्। तस्माद्धाय्याशब्दोक्ता एव तन्मध्ये, अन्यास्त्वागन्तवोऽन्ते स्युः, बादरायणमतात्। तथा च धाय्याविज्ञाता "अग्ने त्री ते वाजिना" इत्येषा ऋगन्तराले [ अन्त एव ] [१]दृश्यते, "त्रिष्टुभा परिदधाति" इति। तस्माद्धाय्याशब्दवत्यः समिध्यमानसमिद्धवत्योर्मध्ये, अन्यास्त्वागन्तवोऽन्ते इति ॥ ५ ॥

[ ४—बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ]

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥ पू०**

विवृद्धस्तोमकेषु क्रतुष्वागमेन संख्यापूरणम्, आगमश्च पवमानेषु। तत्राप्युत्तरयोः पवमानयोः प्राकृतीष्वेव ऋक्षु साम्नामागमः, बहिष्पवमाने तु ऋगागमः सामैकत्वादिति स्थिते सत्यागन्तूनां देशविशेषश्चिन्त्यते। तत्र पूर्वपक्षमाह—**बहिष्पवमानस्यान्त्यात्तृचात् प्रागागन्तवः स्युर्नान्ते। कुतः? ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचा अभूवन् स्तोत्रीयोऽनुरूपः पर्यासश्चेत्येवंसंज्ञकाः। द्वाद-**

1. पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु (३।१।१२८) इति पाणिनिसूत्रे सामिधेनीपर्यायतया धाय्याशब्दो निपातितः। तत् कथमस्यान्तरालगतसामिधेनीविशेषपरत्वमित्याशङ्क्य, संमिध्यमानवतीम्' इति वचनाद् धाय्याशब्दस्य सामिधेनीमन्त्रविशेष एव रूढिः कल्प्यते। सूत्रे सामिधेनीशब्दः सामिधेनीविशेषार्थक एवेति परिहरति—न चेत्यादिना। न चेति धाय्याशब्द इत्यनेनान्वितम्। शङ्कायां मात्रशब्दः सामान्यार्थकः। परिहारे भेदशब्दो विशेषपर इति द्रष्टव्यम्।

१. न दृश्यते—ख०।

**शाहस्य षाडहिके द्वितीयेऽहनि** द्वादशाहावयवभूतस्य पृष्ठ्यषडहस्य द्वितीयेऽहनि **स्तोत्रीयानुरूपौ तृचौ** प्राकृतौ **पठित्वा** ततः परेऽपूर्वा अन्ये वृषण्वन्तस्तृचाः **पठ्यन्ते**। तत उत्तरः प्राकृत एव **पर्यासः पठितः**। **तस्माद्** द्वादशाहे प्रत्यक्षमन्त्रपाठात् **पर्यासात् पूर्वमेव** तेषामागन्तूनां **निवेशो दृष्टः**। **इहापि** [1]**विवृद्धस्तोमकेषु** क्रत्वन्तरेष्वपि **तथैव भवितुमर्हति**, क्रियात्वात् द्वादशाहवदिति सामान्यतोदृष्टमात्रात् पूर्वपक्षः। भाष्ये च "स्तोत्रीयानुरूपौ[2] तृचौ भवतो वृषण्वन्तस्तृचा भवन्ति तृच उत्तमः पर्यासः" इति मन्त्रपाठप्राप्तानुवादकं वचनमर्थप्रदर्शनार्थमुपन्यस्तम्, न त्विदं विधायकम्, पाठादेव प्राप्तत्वात्। इतश्च प्राक् पर्यासादित्याह—**पर्यास इति चान्त उच्यते**। यथोक्तं भाष्यकारेण—"पर्यासशब्दोऽन्तवचनो लोके दृश्यते यथा क्षेत्रपर्यासो नदीपर्यासः" इति। ये तु क्रतुसम्बन्ध्यन्तवचनमेव पर्यासशब्दं मन्यन्ते, तेऽनेनैव भाष्येणोपेक्षणीयाः कृताः। किमतो यद्यन्तवचनः पर्यासशब्दः? अत आह—**तस्य** पर्यासस्योपरि **यद्यागन्तवोऽन्ये क्रियेरन् ततस्तस्यान्तता व्याहन्येत**। तत्र पर्याससमाख्याबाधः, तस्मात् समाख्यानादपि प्राक् पर्यासादागन्तवः स्युः। तदाह भाष्यकारः—"एवं पर्यासोऽन्ते कृतो भविष्यति" इति ॥ ७ ॥

## अन्ते वा तदुक्तम् ॥ ९ ॥ सि०

"अन्ते तु बादरायणः" इति **न्यायाद् अन्त एवैषां निवेशः**। कथं तर्हि द्वादशाहे? अत आह—**द्वादशाहे तु प्रत्यक्षपाठाद् वृषण्वतां मध्ये निवेशः**। द्वादशाहप्रकृतिकेषु तर्हि सर्व एवागन्तवः प्राक् पर्यासात् स्युश्चोदकसामर्थ्यादिति चेत्, तत्राह—**द्वादशाहप्रकृतिकेष्वपि** सत्राहीनेषु **विशिष्टानामेव** वृषण्वतामेव **तृचानां** चोदकवचनाद् **मध्ये निवेशः**, नान्येषाम्। सामान्यतोदृष्टं चाप्रयोजकमित्याह—**न त्वयमपूर्वाणामृचां धर्मोपचयः**

---

१. विवृद्धि—क०।

२. 'प्राकृतौ' अधिकः पाठः—ख०।

स्यात् , क्रियात्वात् कारणात् । द्वादशाहव्यतिरिक्तास्वपि क्रियास्वपूर्णानां पर्यासात् प्राग्भावित्वं धर्मोपचयो धर्माधिक्यं न, क्रियात्वस्याप्रयोजकत्वादिति ।

तद्वृषण्वन्त एव स्युः पर्यासात् पूर्वभाविनः ।
अन्ये त्वागन्तवोऽन्ते स्युर्बादरायणदर्शनात् ॥ ॥ ९ ॥

[ ५—माध्यन्दिनार्भवपवमानयोरागन्तूनां साम्नां गायत्र्यादिष्वेव निवेशाधिकरणम् ]

## अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥ पू०

उत्तरयोरपि माध्यन्दिनार्भवपवमानयोः साम्नामानीयमानानामन्त एव निवेशः स्यात् । यथा ऋचां बहिष्पवमान इति चेन्नैवम् । वचनं हि भवति—"त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति" इति । तच्चानारभ्याधीतं[1] सामर्थ्यात् सर्वेषु [2]विवृद्धस्तोमकेषु हीनस्तोमकेषु च क्रतुषु गायत्रीबृहत्यनुष्टुप्स्वेवावापं ताभ्य एवोद्वापं विधत्ते । तस्मान्नान्ते निवेश इति । बहिष्पवमानविशेषणप्रत्युदाहरणमात्रार्थ[3]मधिकरणम्, न सर्वेषु पवमानेष्वागन्तवोऽन्ते, किन्तु बहिष्पवमान एव । उत्तरयोस्तु पवमानयोर्वचनाद् गायत्र्यादिष्वेव निवेशो नान्त इति । तेन नात्र पूर्वे पक्षेऽभिनिवेष्टव्यम् ।

ये तु पूर्वपक्षलिप्सया द्वादशाहिकमिदं वचनं परिकल्पयन्ति, ते सिद्धान्तमपहारयन्ति । द्वादशाहप्रकरणाधीतं हि वचनं प्रकरणाद् द्वादशाहमेव सामान्यवचनेनापि यज्ञशब्देन निर्दिश्य तदीयावेवावापोद्वापौ गायत्रीबृहत्यनुष्टुप्सु नियच्छेत्, त्रीणि द्वादशाहस्योदराणि गायत्र्यादीनि, एतेष्वेव ह्यस्मिन् क्रतौ आवापमावाप्यानामुद्वापमुद्वाप्यानां च कुर्वन्ति । तस्माद्द्वादशाहेऽहीनस्तोमके[4] षाडहिके प्रथमेऽहनि त्रिवृति साम्नामुद्वापं विवृद्धस्तोमकेषु द्वादशाहावयवभूतेषु एकविंशा-

---

१. 'सत्' अधिकः पाठः—ख० ।

२. विवृद्धि—क० ।

३. 'र्थमधि' इत्यादितः 'नात्र' इत्यन्तः पाठो नास्ति—ख० ।

४. द्वादशाहीन—क० ।

दिषु चावापं गायत्र्यादिष्वेव कुर्यादिति, न तु प्रकरणमुल्लङ्घ्य वचनमिदं गच्छेदिति दुर्लभः सिद्धान्तः स्यात्। तस्माद्यथाभाष्यमेवाधिकरणमिति ॥ १३ ॥

[ ६—अनारभ्याधीतग्रहेष्टकयोः क्रत्वग्निशेषताधिकरणम् ]

## ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥ पू०

प्राकरणिका ग्रहा इष्टकाश्च यथासवनं यथाचिति च व्यवस्थिताः, न तेषु चिन्तया प्रयोजनमस्ति । यदि क्रत्वग्निशेषाः, यदि वा चितिसवनशेषाः, उभयथापि तादृगेवानुष्ठानम् । औपानुवाक्यकाण्डपठिताः स्युः [स्तु] चितिसवनशेषत्वे सति विशेषप्रमाणाभावात् प्रतिचिति प्रतिसवनं[1] चानुष्ठेयाः स्युः, क्रत्वग्निशेषत्वे तु सकृदनुष्ठानमिति तेषु चिन्ता ।

पूर्वपक्षमाह—**ग्रहैः सवनानि प्रत्यक्षमारभ्यमाणानि दृश्यन्ते । इष्टकाभिश्चितयश्च** प्रत्यक्षमेवारभ्यन्ते । **तस्मा**च्चितिसवनो**पकारकत्वादेतेषां** तद्द्वारेणापि च यागाग्न्युपकारकत्वोपपत्तेः प्रयोजनलाभा**त्तदर्थता । इतरस्तु** सिद्धान्तवाद्याह—**अग्नियागयोः फलवत्त्वा**च्चितिसवनयोरपि तदर्थत्वात्, स्वयं निष्फलत्वात्, गुणानां च परार्थत्वान्मिथः सम्बन्धाभावात्, प्रत्यक्षोपकारस्याग्नियागयोरपि तुल्यत्वात्, "इष्टकाभिरग्निं चिनुते", "अदाभ्यं गृहीत्वा यजते" इति चाग्नियागार्थतया श्रवणात्, अंशोश्च तैत्तिरीयाम्नातेन प्राकरणिकेन [1]वाक्येन प्रकृतयागार्थत्वावगमात्, **तदर्थमग्नियागार्थं ग्रहेष्टकम्**, न चितिसवनार्थम् । का पुनरत्राङ्गाङ्गिचिन्तायाः सङ्गतिः ? तामाह—**औपोद्घातिकं चेदमधिकरणम् । स्थिते ह्येतस्मिन्** सकृदनुष्ठाने किं मध्यमायामुतोत्तमायामित्यादिः **क्रमविचार** उपनिपतति, नान्यथेति ॥ १५ ॥

---

1. "यस्यैवं विदुषोंऽशुर्गृह्यत ऋध्नोत्येव" (तैत्तिरीयसं. का. ६ प्र. ६ अनु. १०) इदमेव वाक्यं प्रकरणगतम् ।

१. प्रतिचितिसवनं—क० ।

[ ७–चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ]

## अन्ते स्युरव्यवायात् ॥ १७ ॥ पू०

सर्वासामिष्टकानां पठितेन कल्पितेन वा ब्राह्मणेन ब्राह्मणवत्त्वादितरथा-वैदिकत्वेनानादरणीयत्वात् "यां वै काञ्चिद् ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यात्" इत्यनेन वाक्येन न काश्चिदिष्टका विशेषतः प्रति-पाद्यन्ते। न च सर्वासां मध्यमायां चितावुपधानं शक्यम्। तथा हि सति चित्यन्त-राभावे[1] न मध्यमात्वानुपपत्तेः स्वयमपि तु स्थिता स्यात्। तस्माद्यासां मध्यमाया-मुपधानं प्राप्तं तदनुवादमात्रमिदं वचनम्। अतोऽनारभ्याधीता इष्टकाः क्लृप्त-क्रमाणां प्राकरणिकीनामव्यवायार्थमुत्तमायां चितौ स्युरिति।

अत्राभिधीयते–मध्यमायामेव वचनाद्ब्राह्मणवत्यः स्युः। यद्यपि च सर्वा ब्राह्मण-वत्यस्तथाप्यत्र 'अभिजानीयात्' इत्याभिमुख्यार्थेनाभिनोपसृष्टो जानातिः प्रत्यक्षज्ञाने वर्तते। न च लिङ्गक्रमसमाख्याकल्पितश्रुतिविनियोज्यानां ब्राह्मणवत्त्वं प्रत्यक्षमिति तद्व्युदासेन "चित्रिणीरुपदधाति" इत्यादिप्रत्यक्षश्रुतिविनियुक्तानामनेन मध्यम-[१] चितिराश्रयत्वेन विधीयते। एवं चार्थवद्वचनं भवति। इतरथानुवादमात्रमनर्थकं स्यात्। तस्मान्मध्यमायां चिताविति ॥ १७ ॥

[ ८–प्राग्लोकंपृणायाश्चित्रिण्याद्युपधानाधिकरणम् ]

## प्राग्लोकंपृणायास्तस्याः सम्पूरणार्थत्वात् ॥ २० ॥ सि०

स्थिते मध्यमायां चितावुपधाने देशविशेषश्चिन्त्यते। तत्र लोकंपृणायाः पूरणार्थत्वं सामान्येन विहितं चित्यन्तरेष्वपि सावकाशमिति नानेन मध्यमैक-चितिविषयाणामागन्तूनां न्यायप्राप्तोऽन्तनिवेशो बाधितुं शक्यते। ननु लोकं-पृणापि मध्यमचितिविषयैव। ब्राह्मणवती हि सा, "यदेवास्योनम्" इत्यादिना

---

1. चित्यन्तराभावे न इति पृथक्पदम्। स्वयमपि तु न स्थिता स्यादिति नञ उत्तरेणान्वयः कार्यः।

१. मध्यमा–ख०।

प्रत्यक्षवाक्येन विनियुक्तत्वात्। अतोऽस्याः पूरणार्थत्वं तस्यामेव, चित्यन्तरे न सावकाशम्। उच्यते—नेदमिष्टकाविनियोजकं वचनम्, "लोकं पृण छिद्रं पृण" इति मन्त्रस्येदं पूरणार्थतया विधानम्। तत्कल्पितस्त्विष्टकायास्तादर्थ्येन विनियोगः। चित्रिण्यादिशब्दास्तु मन्त्रयोगनिमित्ता इष्टकानामेव वक्तार इति तादृक्शब्दविनियुक्ता एव ब्राह्मणवत्यः, लोकंपृणा तु नैवंविधेति सामान्यविषयैवेयम्। अतश्चित्यन्तरतां नीत्वा चित्रिण्यादीनां मध्यमायां चितावन्ते कर्तव्यमुपधानमिति मन्यते। सिद्धान्तवादी तु सङ्कोचोऽपि वचनस्य बाध एव। न च न्यायमात्रेण वचनमेव बाधितुं शक्यम्। अतः सामान्यविहितं लोकंपृणायाः पूरणार्थत्वं मध्यमायामपि चितौ प्राप्तं मा बाधीति ततः प्रागेवागन्तूनां चित्रिण्यादीनां निवेश इति सिद्धान्तितवान्॥ २०॥

[ ९–पवमानेष्ट्युत्तरकालमग्निहोत्राद्यनुष्ठानाधिकरणम् ]

## संस्कृते कर्म संस्काराणां तदर्थत्वात्॥ २१॥ सि०

"यः सोमेनायक्ष्यमाणोऽग्निमादधीत स पुरा संवत्सराद् हवींषि निर्वपेद् यत् सद्य एतानि हवींषि निर्वपेद् रुद्राय पशूनपिदध्याद् द्वादशसु रात्रिष्वनुनिर्वपेत्" इत्यादिवचनैः पवमानहवींष्याधानाद्विप्रकृष्यन्ते। तत्र किमाधानानन्तरमेवाग्निहोत्रादीनि प्रवर्तन्ते किं [ किं वा ] पवमानहविःषु कृतेष्विति चिन्त्यते। पूर्वपक्षमाह—**प्रागाधानात् कर्मस्वयोग्यः** पुरुषो मा नाम तानि कार्षीत्, **कृते त्वाधानेऽग्नीनां विद्यमानत्वात् सर्वकर्म**भियोग्यत्वा**दधिक्रियते** उपरि क्रियते। तान्यस्य फलस्य साधनानि भवन्तीत्यर्थः। आधानं हि वाक्येन निरपेक्षेण केवलमेवाग्न्यर्थमवगतम्। अतस्तस्मिन् कृते निष्पन्नत्वादग्नीनां कर्तव्यान्येव कर्माणि, नि[अनि]ष्पन्नेष्वपि चाग्निषु वचनप्रामाण्यात् पवमानहवींषि क्रियन्ते। **किञ्च, "अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्ति"** इति प्रागेवेष्टिभ्योऽग्निमाधानमात्रेणोत्पाद्याग्निहोत्रेणानुद्रवन्ना[नुद्रववचनमा]धानानन्तरमेवाग्निहोत्रहोमं दर्शयति। तस्मादाहितमात्रे स्युः। अत्रैव निदर्शनमाह—

"आहिताग्निर्न क्लिन्नं दार्वभ्यादधीत" इत्यनन्तरमेवैते यथा प्राप्नुवन्ति, एवं कर्माण्यपीति।

एवं प्राप्ते ब्रूमः—पवमानेष्ट्यादिभिः सर्वैः समुच्चितैराहवनीयादय उत्पद्यन्ते, उत्पन्नाश्च सन्तो यागाङ्गतां प्रतिपत्तुं शक्नुवन्ति नानुत्पन्नाः। अतोऽकृतेषु हविःषु अग्न्यभावादभावः कर्मणाम्। यत्तु निरपेक्षमाधानमग्नीनामुत्पादकमिति, तत्र भाष्यकारपक्षे तावदेवं परिहारः—यद्यप्याधानमग्न्यर्थतया निरपेक्षेण वाक्येन विहितम्; तथापि हवींष्यपि प्राकरणिकेन "यदाहवनीये जुह्वति" इति वाक्येनाग्न्यर्थतयैव विनियुज्यन्त इत्युक्तं तृतीये। अतश्चैतेष्वकृतेषु नाग्न्युत्पत्तिसम्भवः। यत्तु वचनप्रामाण्यादिति। सत्यं वचनप्रामाण्यात् क्रियन्ते, क्रियमाणानां तु तेषामग्निरेव कार्यं नान्यत्। विकल्पस्तु तेषामनाशङ्कनीय एव, वचनैः समुच्चयावगमात्। आधानप्रकरणे हि हवींषि विधाय तेषामाधानमपेक्ष्य काला विधीयन्ते "सद्यो वा निर्वपेत्, द्वादशसु रात्रिषु निर्वपेत्, [1]सोमेनायक्ष्यमाणः पुरा संवत्सरान्निर्वपेत्" इत्यादिभिः। विकल्पे हि कथमाधानात् पश्चाद् द्वादशाहादिषु निरुप्येरन्। अतो विधीयमानान्येव हवींषि समुच्चीयमानानि विधीयन्त इति न विकल्पसम्भवः। तेनोभयोः समुच्चयावगमादुभयजन्यसंस्कारद्वयनिमित्ता आहवनीयादिशब्दा नैकस्मिन्नप्यकृते प्रवर्तन्त इत्याहवनीयाभावादकृतेषु हविःषु कर्मणामप्रवृत्तिः।

वार्त्तिककारमते तु हविषामाधानाङ्गत्वाद् अनङ्गेन च करणेन कार्यानिष्पत्तेः कृतेष्वेव तेष्वाहवनीयनिष्पत्तिः। तेन पूर्वमाधानेनोत्पत्त्यपूर्वस्थानीयमाहवनीयोत्पत्त्यनुगुणमग्निगतं किञ्चिददृष्टं जायते। न च तेषां विकल्पशङ्का, नह्यङ्गं प्रधानेन विकल्पते। तस्मादकृतेषु तेष्वप्रवृत्तिः कर्मणाम्।

यत्तु निदर्शनमुक्तं तत्राह—"न क्लिन्नं दार्वभ्यादधीत" इति पुरुषसंयोगेन श्रवणादाहिताग्नित्वेन निमित्तेनानन्तरमेव भवन्ति। आहिताग्नित्वेन निमित्तेन पुरुषसंयोगेन श्रवणादिति सम्बन्धः। कुत इत्याह—निमित्तस्य

---

1. न य—क०ग०।

२

**विद्यमानत्वात्**। आहिताग्नित्वं हि निमित्तं न त्वाहवनीयनिष्पत्तिः। स चाधानमात्रे कृते भवत्याहिताग्निः। तस्माद्भवितव्यं व्रतैः, न भवितव्यं कर्मभिराहवनीयानिष्पत्तेरिति वैषम्यम्। यत्तु लिङ्गमुक्तं तत्राह—**अग्निहोत्रेणानुद्रवन्तीति। तूष्णींहोमस्तुतिरियमिति** परेण सम्बन्धः। कथं तस्य स्तुतिः? तदेकवाक्यत्वात्। तद्दर्शयति–"**यद्यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात्**" इति। एतदेव वाक्यं व्याचष्टे—**पवमानेष्ट्यनन्तरं** तदुत्तरकालमेवा**हुतीनां करणात्** कर्तुं योग्यत्वा**त्ततः**[1] पूर्व**माधाना**[2]नन्तरमेव क्रियमाणास्ता **अयथापूर्वमेव कृताः स्युः**। "यन्न जुहुयादग्निः परापतेत्" इत्येतदर्थतो दर्शयति— यदि हविर्भ्यः **पूर्व**माहुतयो **न क्रियेरन्** ततोऽ**ग्निरुद्वायेत्**। तस्मात् "तूष्णीं होतव्यम्" इति विधीयमान**तूष्णींहोमस्तुतिरियम्**। अग्निहोत्रशब्दोऽप्यस्मिन् एवापूर्वहोमे प्रयुज्यते, न त्वनेन नैमित्तिकस्याग्निहोत्रस्याकृतेषु हविःषु प्रवृत्तिः प्रदर्श्यते, येन लिङ्गं स्यात्। नन्वपूर्वस्य होमस्य कथमसत्याहवनीये प्रवृत्तिरत आह— **स च** तूष्णींहोमोऽ**ग्न्यर्थः**[1], प्रयोजनवदग्निसंयोगात्, स्वयं निष्फलत्वात्, "यन्न जुहुयादग्निः परापतेत्" इति वाक्यशेषात्। अतः पवमानहविर्वदसत्याहवनीये प्रवर्तते।

अत्र प्रासङ्गिकं किञ्चिन्निरूपयति—**किमस्मिन्** तूष्णींहोमेऽ**ग्निहोत्रधर्माः प्राप्यन्ते न वेति। केचिदाहुः–अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते यथा कौण्डपायिनामयने** "मासमग्निहोत्रं जुह्वति" इत्यस्मिन् होम इति। तद-

---

1. अग्न्यर्थ इति। अनेन तूष्णींहोमस्याग्न्यङ्गत्वं भाष्यकारवार्त्तिककारयोरविप्रतिपन्नमिति गम्यते। "यन्न जुहुयादग्निः परापतेत्" इति वाक्यशेषात्, आधानप्रकरणस्थस्याप्यस्याग्न्यर्थत्वावगमात्। नव्यैस्तु प्रकरणादाधानाङ्गत्वमेवास्योरीकृतमिति विशेषः।

१. न ततः–ख०।

२. माधानमात्रा–ख०।

युक्तम्। कुतः? तूष्णीं होतव्यमित्यनेनात्र कर्म विधीयते। तस्मिंश्च कर्मविधिवाक्येऽग्निहोत्रशब्दो नास्ति, येन धर्मातिदेशको भवेत्। अर्थवादस्थत्वादग्निहोत्रशब्दस्य स्तुतिमात्रोपक्षीणत्वान्नातिदेशकत्वसम्भवः। यथा चार्थवादस्थं नामधेयं न धर्मातिदेशकं तथाष्टमे वक्ष्यामः। इतश्च न धर्मातिदेशक इत्याह—तूष्णींहोमोऽग्निसन्धुक्षणार्थं[र्थः] क्रियते, अग्नेर्बलवत्त्वार्थः,[1] तत्संस्कारार्थ इति यावत्। ततः किमित्याह—एतदतो भवति। अग्न्यर्थो होम इत्यवगते सति योऽग्निहोत्रशब्दोऽत्र वाक्येऽर्थवादत्वेन प्रवृत्तः, स योगेन प्रवर्त्तते-अग्नये होत्रमस्मिन्निति। तथापि किमित्याह—अतो योगस्य विद्यमानत्वान्नास्ति नामधेयम्। नहि यौगिकानि दण्ड्यादिपदानि नामधेयमित्युच्यन्ते। नामधेयाभावाच्च धर्मातिदेशो नास्ति। नहि यौगिकानि प्रायणीयादिपदानि धर्मातिदेशायालमिति सप्तमे वक्ष्यामः ॥२१-२५॥

[ १०—अग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ]

**सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥ पू०**

[2]यथाहिताग्निव्रतानि आधानानन्तरमेव भवन्ति, तथाग्निचिद्व्रतान्यपि चयनानन्तरमेव भवितुमर्हन्ति, धात्वर्थस्यैवोभयत्र भूतस्य निमित्तत्वादिति पूर्वः पक्षः ॥ २६ ॥

सिद्धान्तमाह—

**क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥ सि०**

योऽग्निं चितवान् सोऽग्निचित्। स चाग्निः चितिकर्मभूत ईप्सितः। चयनं तदर्थम्। तस्माच्चयनेनाग्नेः स्वकार्यं कुर्वत उपकर्तव्यम्। तच्च

---

1. बलवत्त्वार्थ इति। अनेन प्रतिपदव्याख्यानेन मूले 'संधुक्षणार्थम्' इति स्थाने 'संधुक्षणार्थः' इति पाठोऽनुमीयते।

2. यथेति। अनेनास्य पूर्वाधिकरणेन दृष्टान्तसंगतिरिति दर्शितं भवति।

चयनमग्नेः स्थलद्वारेणाधारतां प्रतिपद्यमान[1]मग्न्यर्थं भवति। न चयनमात्रम्। तस्मात् साङ्गक्रतुपरिसमाप्त्युत्तरकालं चयनं निमित्ततां प्रतिपद्यते। तस्मात् साङ्गे कृते यागेऽग्निचिदुच्यते।

एतदुक्तं भवति—कर्मणि, भूते इति चानुवर्तमाने "अग्नौ चेः" इति चिनोतेः क्विप् विहितः। कर्मणश्चेप्सिततमत्वात् तदर्थं चयनम्। तादर्थ्यं च तदुपकारकत्वात्, तदुपकारकत्वं च नाधानवज्जनकतया; किन्तु स्वकार्यं कुर्वतः साहाय्यकरणात्। साङ्गक्रतुनिर्वृत्तिश्च तत्कार्यम्। साहाय्यमपि तदाधारत्वम्। तेन यावत्क्रतुसमाप्तिस्तावद्धारणमनेनाग्नेरुपकारः। तस्य च भूतस्य निमित्तभूतत्वात् क्रत्वन्तेऽग्निचिद्व्रतानि। आधानकार्यं त्वग्निगतमदृष्टं कृतमात्र एव तस्मिन्निष्पन्नम्, यदि परं पवमानेष्टीनामकृतत्वादाहवनीयो न निष्पन्नः। नह्यत्राहवनीयनिर्वृत्तिर्निमित्तम्; किन्तु आहिताग्नित्वम्। कृतमात्र एवाधानेऽग्निगतस्यादृष्टस्य[2] निर्वृत्तत्वाद् भवत्येवाहिताग्निः। चयनकार्यं त्वग्निधारणमाक्रतुसमाप्तेर्न निर्वृत्तमित्युक्तो विशेषः। तस्मात्[3] क्रत्वन्त एवाग्निचिद्व्रतानीति सिद्धम्॥ २७-२८॥

[ ११—दीक्षणीयान्ते दीक्षितस्य स्वधर्मानुष्ठानाधिकरणम् ]

## परेणावेदनाद्दीक्षितः[4] स्यात्सर्वैर्दीक्षाभिसम्बन्धात्॥२९॥

"दण्डेन दीक्षयति" इति। दण्डेन दीक्षां निर्वर्तयतीति तृतीयाविभक्ति[5]श्रुत्यैव दीक्षार्थो दण्डः। आग्नावैष्णवोऽपि वाक्येन दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षार्थः। तस्मात् सर्वान्ते दीक्षितः। यदि ह्याग्ना-

---

१. "मुपकरोति। अग्निश्चाङ्गप्रधानार्थः। अतो यावदङ्गप्रधानानि निर्वर्तयति तावच्चयनमाधारतां प्रतिपद्यमान"—ख०। पूनामुद्रितमूलपाठोऽप्येवमेव।

२. 'स्याधानजन्य' अधिकः पाठः—ख०।

३. 'तस्मात्' नास्ति—क०।

४. परेणावेदनाद्दीक्षिष्यमाणपदसमभिसम्बन्धात्—ख०।

५. 'निर्देशात्' अधिकः पाठः—ख०।

वैष्णवेन दीक्षितः स्यात्, ततो दण्डेन दीक्षयतीति नोच्येत। तस्मान्न स तावन्मात्रेण दीक्षितः, किन्तु सर्वान्ते। तदिदमुक्तम्—"परेणावेदनाद्दीक्षितः स्यात्"[1] इति। आवेदनादिति पञ्चमीसिद्धौ यत्नः कर्त्तव्यः, सकलशब्दार्थतत्त्वज्ञाननिधिना भगवता महर्षिणा प्रयुक्तत्वात्। तस्माद्नया[१] [ देनपा ] द्वितीयेत्यत्र पञ्चम्यपि दृश्यत इति वक्तव्यमिति।

नन्वाग्नावैष्णवादीनां दीक्षाकारणानां विकल्पात् कथं सर्वान्ते दीक्षितः, अत आह—न च विकल्पः। कुतः? दीक्षितत्वं नामादृष्टम्। तत्र यावत्साधनमाम्नायते तावता दीक्षितो भवति नैकदेशेन। आह—करणविभक्तिनिर्देशादितरेतरनिरपेक्षाणां दीक्षाकारणतावगम्यते। यथा "व्रीहिभिर्यजेत" इति व्रीहीणां यवनिरपेक्षाणाम्। अतश्च तद्वदेव विकल्प इति। तेषां व्रीहीणां दृष्टोपकारित्वान्निरपेक्षाणामपि च तद्दर्शनाद्विकल्प इति चेत्, तन्न। व्रीहियवसमुच्चयेनापि शक्यते पुरोडाशो निर्वर्तयितुम्। तेन दर्शनस्योभयथाप्यविरोधान्न तावन्मात्रं विकल्पकारणमिति। किं तर्हि कारणमित्याह—करणविभक्तिस्तु यवनिरपेक्षाणां व्रीहीणां पुरोडाशप्रकृतित्वं प्रतिपादयति। सा बाध्यते समुच्चये सतीति विकल्पः। एवमिहापि दण्डादीनां प्रत्येकं करणविभक्तिनिर्देशाद्विकल्पः स्यादिति। उच्यते—विषम उपन्यासः। तत्र हि पुरोडाशप्रकृतिद्रव्यत्वेन नैकं [त्वेनैकं] द्रव्यमाकाङ्क्षितम्, तस्य व्रीहिभिरिति करणविभक्त्या नियतता कृता। तेन तत्र विकल्पः। नियमविधिर्ह्ययम्। स च यथाप्राप्ति भवति। पुरोडाशप्रकृतितया च सर्वेषां व्रीह्यादीनामनियमेन प्राप्तिर्न तु तदेकदेशप्रकृतितया। शक्यते च सकलः पुरोडाश एकैकेन निर्वर्त्तयितुमिति तन्निर्वर्त्तकत्वेन निरपेक्षाणामेवानियमेन प्राप्तानां द्रव्याणां

---

1. "त्वं वै दीक्षितोऽसि" इत्यावेद्यतेऽध्वर्युणा यजमानः। एतस्यावेदनस्यानन्तरमेव दीक्षासिद्धिरिति पूर्वपक्षाभिप्रायः।

१. देयनया—ख०।

व्रीहयो नियम्यमाना निरपेक्षा एव साधनं भवन्ति । ततश्च द्रव्यान्तरनिवृत्तिः । एवं यवा अपि तस्मिन्नेवांशे नियम्यन्त इति द्वयोरप्येकेनैव प्रकारेण साधनत्वाद्विकल्पः । यथोक्तम्—

नियमार्थे ह्युभे शास्त्रे यवव्रीह्योर्विधातृणी ।
प्राप्तेश्चान्यनिवृत्त्यंशः फलमर्थात् प्रतीयते ॥
व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम् ।
यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते ॥ इति[1] ।

**दण्डादीनां त्वनवगतं तादर्थ्यम्; करणविभक्त्या तु तदानीमपूर्वं क्रियते । तच्च तादर्थ्यमदृष्टविषयमिति सर्वैः क्रियते ।** [2]यदि दृष्टविषयमेषां तादर्थ्यं स्यात्, तच्च निरपेक्षै[क्षैरे]व क्रियमाणं गम्येत; ततो निरपेक्षाणामेवानियमेन प्राप्तानां नियमाद्विकल्पः स्यान्न त्वेतदस्तीति । तथापि कथं समुच्चय इत्याह—**अतः प्रयोगवचनेन सर्व उपसंह्रियन्ते** समुच्चिताः ।

अयमभिसन्धिः—सर्वेषां दीक्षासाधनत्वं विज्ञायते । तत्र यदि समुच्चये प्रमाणं न स्यात्, ततो भिन्नवाक्यचोदितत्वान्निरपेक्षा एव स्युः । अस्ति तु तत् । सर्वे ह्येते प्रयोगवचनेनैकेनोपसंह्रियन्ते । तत्र यदि निरपेक्षता स्यात्, तत एकः प्रयोगवचन एषां परिग्रहं परित्यागं वा व्यवस्थया कुर्वन्नष्टविधदोषभाजनं स्यात् । तत्परिहारार्थं प्रकारभेदेनैषां साधनत्वमाग्नेयादिवत् स्थाल्यादिवच्च परिकल्प्य समुच्चयोऽभ्युपगन्तव्यः । तदुक्तं भाष्यकारेण—"भिन्नेष्वपि दीक्षावाक्येषु प्रयोगवचनेन सहैकवाक्यतेति आवेदनकाले दीक्षितः स्यात्" इति । क्रत्वन्तराणां त्वेकफलसाधनानामदृष्टसाधनानामपि प्रयोगवचनभेदात् फलकामे पुरुषे विकल्पः । आधानपवमानहविषां [3]चासत्यप्येकप्रयोगवचनपरिग्रहे वचनात् समुच्चय इत्युक्तम् । तस्मात् सर्वान्ते दीक्षित इति ॥ २९ ॥

---

१. 'इति' नास्ति-क० ।

२. 'यदि' इत्यारभ्य 'तदस्तीति' इत्यन्तं नास्ति-ख० ।

३. चासत्ये-क० ।

**इष्यन्ते वा तदर्था ह्यविशेषार्थसंयोगात्**[1] ॥ ३० ॥ सि०

**दीक्षितत्वं नाम संस्कारः । संस्कारश्च क्रियाजन्यः**, द्रव्यस्योदासीनस्य कार्यजनकत्वायोगात् ; क्रिया तु जन्मनैव कार्यं साधयतीत्युक्तम्—"तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते" इति । **न च दण्डादीनां क्रियात्वम् । अथोच्येत–क्रियां साधयन्तो दण्डादयः संस्कारार्था** भवन्तु, मा भूवन्नुदासीना इति । उत्तरम्–एवमप्यर्पणादिकायाः क्रियाया **अश्रवणान्न ज्ञायते कां क्रियां साधयन्तः संस्कारार्थतां प्रतिपद्यन्ते** दण्डादय इति । **अतोऽरूपत्वात्**[1] क्रियारूपाज्ञानाद**नध्यवसानमेव** वाक्यार्थस्य **स्यात्** । अदृष्टो हि दीक्षासंस्कारः । तं च दण्डेन निर्वर्त्तयेदित्युक्ते क्रियाविशेषे चानुक्ते किमत्र प्रतिपत्तव्यम् । तस्मान्न दीक्षासाधनत्वं तेषाम् । दण्डेन दीक्षयतीत्यस्य तु दण्डेन दीक्षितं सम्पादयति संयुनक्तीत्यर्थः[2] । किञ्च **दीक्षिष्यमाण इति यो दीक्षामाप्तुमिच्छति स उच्यते । तस्य च दीक्षणीयोपायत्वेन विधीयते । यदि च तया दीक्षितत्वं तस्य जायते, ततः सोपायत्वेन विधीयते** नान्यथा । **यथा स्वर्गस्याग्निहोत्रम्** । न चास्याः सापेक्षत्वं कल्पयितुं शक्यम्, दण्डादिवाक्यानां सम्पादकत्वेनाप्युपपत्तेः ॥ ३० ॥

---

1. 'न ज्ञायते कां क्रियां साधयन्तः' इति पूर्ववाक्ये क्रियाज्ञानाभावस्यैव कथनात्, अनध्यवसानमेवेति निश्चयाभावस्यैवोपसंहाराच्च 'अरूपत्वात्' इति मूलस्थपदस्य 'क्रियारूपाज्ञानात्' इत्येवार्थः करणीय इति भावः । एतद्विवरणानुरोधाच्च टीकायां 'अरूपत्वात्' इत्येव पाठः समञ्जसः, 'द्रव्यरूपत्वात्' इति पूनामुद्रितपाठस्य मूलं नोपलभ्यते ।

2. दण्डेन दीक्षयतीत्यस्य पूर्वपक्षे दण्डेन दीक्षां निर्वर्तयतीत्यर्थः । सिद्धान्ते तु दण्डेन दीक्षितं संपादयति संयुनक्तीत्यर्थः । शास्त्रदीपिकायां तु दण्डेन दीक्षामभिव्यञ्जयतीत्यर्थ उक्तः ।

१. सम्बन्धात्–पू० पा० ।

## समाख्यानं च तद्वत् ॥ ३१ ॥ सि०

इति सूत्रस्यार्थमाह—**यदि चानयैव दीक्षा क्रियते, ततोऽस्याः समाख्या** घटते दीक्षणीयेति, नान्यथा। **तस्मान्निरपेक्षवाक्यसंयोगात्** समाख्यानाच्च **दीक्षणीययैव दीक्षितत्वं जन्यते**। लक्षणसम्बन्धं चिन्ताया दर्शयति—**इष्यन्तेऽग्निहोत्रादीनि न कार्याणीत्ययं क्रमलक्षणसम्बन्धः**। दीक्षितस्य हि होमादीनां क्रत्वर्थः "दीक्षितो न ददाति न जुहोति न पचते" इति निषेधः। स च निषेधः पूर्वपक्षे पश्चादावेदनाद् भवति, सिद्धान्ते त्विष्टयनन्तरमेवेति ॥ ३१ ॥

[ १२—काम्यानामनुष्ठाने पाठक्रमस्यानियामकत्वाधिकरणम् ]

## अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ पू०

यथैव[१] स्वाध्यायविधिविहितपाठक्रमार्थवत्त्वायाङ्गेषु समिदादिषु क्रमनियमः, तथा क्रत्वन्तरेष्वपि। तद्वाक्यानामपि हि विवक्षितक्रममेवाध्ययनं स्वाध्यायविधिना विधीयते। तस्य च प्रयोजनान्तरं[२] नास्ति, अतः[अन्यत्] क्रमानुष्ठानात्। तस्मात् क्रत्वन्तराणामपि यथापाठमनुष्ठानमिति पूर्वपक्षः ॥ ३२ ॥

सिद्धान्तमाह—

## न वाऽसम्बन्धात् ॥ ३३ ॥ सि०

**अनियमेन कामा उत्पद्यन्ते। तेषां नास्ति क्रमः**। नहि ते वाक्यक्रमेण नियन्तुं शक्यन्ते, वस्तुस्वभावस्य निरङ्कुशत्वात्। ततः किमित्याह—**कामेन च निमित्तेन कर्म कर्त्तव्यम्। तस्मान्नैमित्तिकेन[1] प्रयोगेण स्वाध्यायक्रमो बाध्यते**। काम्यमानफलसाधनत्वेन विहितानि कर्माणि कामोत्पत्तौ सत्यां कर्त्तव्यानि भवन्तीति कामानां निमित्तत्वमुच्यते, न तु भेदना-

---

1. 'नैमित्तिकेन क्रमेण प्रयोगे (न) स्वाध्यायः' इति पूनामूलपाठोऽस्वरसः।

१. 'यथैव' इत्यारभ्य 'विव' इत्यन्तः पाठो नास्ति—ख०।

२. जनान्यतः—ख०।

दिवन्निमित्ततया वाक्येनान्वयात्। ते चानियतक्रमाः कामाः कर्मणामप्यनियमं प्रतिपादयन्तीति तद्बलेन [1]पाठक्रमस्य बाधः।

एवं तावत् पाठक्रमस्य प्रामाण्यमङ्गीकृत्य बाधः प्रदर्शितः। सम्प्रत्यस्मिन् विषये प्रामाण्यमेव तस्य नास्तीति व्युत्पादयति—**अनङ्गत्वाच्चैषामेकप्रयोगवचनाभावाच्च नास्ति क्रमः**। यदि हि क्रतवः परस्परस्याङ्गं भवेयुः, यदि वा सर्व एतेऽन्यस्य कस्यचित् समिदादिवदङ्गं स्युः, यदि वा असत्यप्यङ्गत्वे आग्नेयादिवद् एकप्रयोगवचनपरिगृहीताः स्युः, सर्वेषां सहानुष्ठानं बोधयन् प्रयोगविधिः क्रमनियममन्यतोऽपेक्षमाणः पाठं नियामकत्वेन गृह्णीयात्, न त्वेतदस्ति। न च पाठः स्वयमेव क्रमस्य विधायकः, अविधायकत्वात्। स्वाध्यायविधिरपि यावच्छक्यते कर्तुं तत्रैव नियुङ्क्ते, पाठक्रमश्च प्रयोगवचनाकाङ्क्षितक्रमनियममात्रं शक्नोति कर्तुं न क्रमं विधातुम्। तस्माद्भिन्नप्रयोगवचनपरिगृहीतानां न पाठतो नियम इति ॥ ३२-३६॥

[ १३—अग्निष्टोमस्य प्राथम्याधिकरणम् ]

## य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥ सि०

[2]एतेनेत्यस्यार्थेऽवगते तदपेक्षप्रवृत्तस्यान्यशब्दस्यार्थो निरूपयितुं शक्यत इति तदुपोद्घातोऽयम्। तत्र ज्योतिष्टोमस्य पूर्वनिर्दिष्टत्वात् तस्य च सर्वसंस्थास्वविशेषात् सर्वसंस्थस्यैवैतच्छब्देन वाद इति पूर्वः पक्षः।

सिद्धान्तमाह—**य एतेनानिष्ट्वेति सर्वनाम्ना प्रकृतः परामृश्यते। प्रकृतश्च ज्योतिष्टोमः। तस्य चाविनाभूताग्निष्टोमसंस्था यदा ज्योतिष्टोमाभ्यासस्तदावश्यंभाविनी**। **उकथ्यादयः काम्यास्ते** चागन्तवोऽनित्याः। अतो **नित्यत्वादग्निष्टोमः परामृश्यते** ॥ ३७-३८॥

---

१. 'पाठ' नास्ति—क०।

२. य एते—ख०।

[ १४–अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालत्वाधिकरणम् ]

## अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥ पू०

योऽयम् 'अथान्येन' इत्यनेनाग्निष्टोमापेक्षया पश्चाद्भावः क्रमो विधीयते, स किं संस्थानामेवोत संस्थानामन्येषां चैकाहाहीनसत्राणामिति । पूर्वपक्षमाह— **पूर्वप्रकृताद्यदितरत्सन्निहितं तदभिधीयते**ऽन्येनेति **सर्वनाम्ना** । अग्निष्टोमश्च पूर्वप्रकृतः, य एतेनेति तदभिधानात् । **अग्निष्टोमस्य चोक्थ्यादयः सन्निहिताः**, न तु क्रत्वन्तराणि । **तस्मादग्निष्टोमसंस्थं ज्योतिष्टोमं कृत्वा पश्चादुक्थ्यादयः कर्त्तव्याः । गवादीनां त्वनियमः** पूर्वं वा पश्चाद्वेति ॥३९॥

## तत्प्रकृतेर्वापत्तिविहारौ हि न तुल्येषूपपद्येते ॥४०॥ सि०

**अन्यशब्दः प्रकृतादन्यवाचकः** । [1]नित्यसापेक्षत्वादन्यशब्दस्य प्रकृतशब्दसापेक्षस्यापि सामर्थ्याविघातात् समासः । "कर्तरि च" इति तु समासप्रतिषेधोऽनित्यः "जनिकर्तुः प्रकृतिः" इति, "दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्" इत्यादिबहुप्रयोगदर्शनात् । **तस्य** चान्यस्य **विशेषो न गम्यते** । **किमुक्थ्यादय उक्ता उत गवादय** इति सर्वेषामन्यत्वाविशेषात् । **अतो विशेषानवगमात् सर्वानभिधत्ते** । विशिष्यतेऽन्यशब्दो ज्योतिष्टोमशब्देनेति चेत्, तत्राह—**विशिष्यमाणो वा ज्योतिष्टोमेनान्येनोक्थ्यादिनेति विशेष्येत** । **तत्रायं** ज्योतिष्टोमशब्दः **"य एतेन" इत्यस्मिन्निराकाङ्क्षीभूतः कृतप्रयोजनः किमर्थमन्यशब्दसम्बन्धार्थमुच्चार्यते** । तदिदम्—"नैवं सम्बन्धः क्रियते" इत्यादिना "नहि वाक्येन श्रुतिर्बाध्यते" इत्येवमन्तेन भाष्येणोक्तम् । सामान्यवृत्ति हि पदं पदान्तरसमभिव्याहारात्मकेन वाक्येन विशेषे

---

1. अन्यशब्दबोध्यस्य भेदस्य प्रकृतरूपप्रतियोगिसापेक्षतया सामर्थ्याभावेन कथमन्यवाचक इति समास इत्याशङ्क्य नित्यसापेक्षतया गमकत्वेन भवत्येव समासः, देवदत्तस्य गुरुकुलमितिवदित्याह–नित्येति ।

स्थाप्यमानं बाधितं भवति । [1]तथा चाङ्गीक्रियेत यदि पदान्तरं तेनासम्बध्यमानमनर्थकं स्यात् । इह तु न तदस्तीति । तच्चैतदरुणाधिकरणेऽपि "सर्वत्र बाधिते पदार्थे वाक्यार्थः" इत्यादिना भाष्येणोक्तम् । अथ "ज्योतिष्टोमादन्येनेत्यभिसम्बध्यते न तरां संस्थावादः" इति भाष्यार्थमाह—**यद्यपि च** ज्योतिष्टोमशब्दोऽन्यशब्द**विशेषणत्वेनोच्चार्येत, तथापि ज्योतिष्टोमादन्येनेत्यन्यशब्दयोगे पञ्चमी स्यात्** । पञ्चमी स्यादित्यत्र हेतुरन्ययोग इति । अन्येन कुतोऽन्येनेत्यपेक्षा स्यात् । तत्र प्रकृतो ज्योतिष्टोमशब्दो ज्योतिष्टोमादन्येनेत्येवं सम्बध्यते, न तु ज्योतिष्टोमेनान्येनेति । भवत्विति चेत्तत्राह—**ज्योतिष्टोमाच्चान्ये गवादय** इति तेषां ग्रहणं स्यात् । यदि तु ज्योतिष्टोमादग्निष्टोमसंस्थादन्येनेत्युच्येत, ततो वाक्यं भिद्येत ज्योतिष्टोमादन्येन, तच्चान्यदग्निष्टोमसंस्थादिति । अन्यशब्दार्थोद्देशेन ह्यत्राग्निष्टोमात् पश्चाद्भावो विधीयते । न चोद्देश्यस्य विशेषणं विवक्षितुं शक्यम् । तथापि तु प्रतियोग्यपेक्षत्वादन्यशब्दस्य केनचिदेकेन ज्योतिष्टोमेनाग्निष्टोमेन वा हविष्वार्तिर्विशेष्येत, द्वाभ्यां तु विशेषणे उभयपदवद्वाक्यं भिद्येत ।

अथ प्रकरणादेवोभयलाभान्नास्ति वाक्यभेदः । प्रकृतो हि ज्योतिष्टोमोऽग्निष्टोमसंस्थ इति; तत्राह—**अतो** विशेषणात् । यद्यपीदं विशेषणमङ्गीक्रियते, **तथाप्युक्थ्यादयो गवादयश्चा**विशेषादन्य**शब्दाभिधेयाः स्युः**, ज्योतिष्टोमादग्निष्टोमसंस्थादन्येनेत्येवं विशेष्यमाणेऽपि सर्वेषामभिधानं स्यात् सर्वेषां ततोऽन्यत्वादित्यर्थः । न तु सन्निधानात् संस्थानामेवाभिधानम्, यज्ञशब्देन सर्वेषां सन्निहितत्वात् । अयं हि वाक्यार्थः—यज्ञानामग्निष्टोमोक्थ्यषोडश्यतिरात्रासप्तर्यामैकाद्वा-

---

1. ननु सर्वत्र गामानयतीत्यादिवाक्ये गोशब्दः श्रुत्या गोसामान्यमभिधत्ते । पदान्तरसमभिव्याहाररूपवाक्येन तु आनयतिकर्मभूतो गोविशेषः । ततश्च वाक्यस्यैव प्राबल्यं प्राप्तमित्याशङ्क्य "आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इति न्यायेन पदान्तरसमभिव्याहाररूपवाक्यस्यानर्थक्यप्राप्तौ युक्तमेव प्राबल्यमित्यभिप्रेत्याह–तथा चाङ्गीक्रियेतेति ।

हीनसत्राणां मध्ये एष एव प्रथमं प्रयोज्यः, तस्मात्तेनेष्ट्वान्येन यज्ञेन यजेतेति। तस्मात्सर्वाभिधानमिति।

एवमधिकरणद्वयेन "य एतेनानिष्ट्वाथान्येन यजेत" इति द्वावपीमावेतत्पदस्यान्यपदस्य चार्थौ विचारितौ। इदानीं वाक्यार्थो विचार्यते—किमनेन वाक्येनाग्निष्टोमस्य यज्ञान्तरापेक्षया प्राथम्यं नाम धर्मोऽङ्गं विधीयते, उतेतरेषां प्राथम्यस्य प्रतिषेधः, अथवान्यः प्रकार इति। किं तावत्प्राप्तम्? ज्योतिष्टोमस्य प्राथम्यमङ्गं विधीयते प्रकरणात्। नेतरेषां प्राथम्यप्रतिषेधः, प्रकरणबाधप्रसङ्गादिति कश्चित्। तन्न युक्तम्। कुतः? एवं हि सति ज्योतिष्टोमस्य द्वितीयादौ प्रयोगे गवादिभ्यः पाश्चात्त्ये प्रयोगे प्राथम्याभावादफलता प्रसज्येत। गवादीनां च प्रथममपि प्रयुज्यमानानामवैगुण्यं स्यात्। तच्चानिष्टम्। नाप्यन्येषां प्राथम्यप्रतिषेधः, तद्वाचकस्य प्रतिषेधवाचकस्य शब्दस्याभावात्। तस्मादन्यः प्रकारः। कः पुनरसौ प्रकारः? उत्तरम्—य एतेनानिष्ट्वेति क्त्वाशब्दस्य पूर्वकालतावाचित्वात् पूर्वमग्निष्टोमस्य कर्त्तव्यतामाह पश्चाद् गवादीनाम्। तेन तत्प्राथम्यम्। सोऽग्निष्टोमः प्रथमो येषां ते तथोक्ताः। तद्भावस्तत्त्वम्। तद् गवादीनामङ्गमनेन वाक्येन चोद्यते, वाक्यान्तरेण स्वर्गः फलं तेषां कथ्यते। अतस्तेषां ज्योतिष्टोमापेक्षया द्वितीयादौ प्रयोगे फलं भविष्यतीत्यदोषः।

नन्वयं दोषः—प्रकरणं बाध्यते? बाध्यताम्। वाक्यमस्य बाधकम्। ननु वाक्यमपि प्रकृतस्यैव ज्योतिष्टोमस्य प्राथम्यं विधत्ते। तत्रानिष्टापत्तिरुक्ता। नानिष्टापत्तिमात्रादर्थस्य दूषणं भवति। तदभिधीयते—अन्येन यजेतेत्यनेन विधिनाग्निष्टोमस्य प्राथम्ये विधीयमानेऽत्यन्तं वाक्यं स्यात्। अन्येषां तु तदुत्तरकालविधौ धात्वर्थेऽन्यविधानात् श्रुत्यनुग्रहः, तस्मात्तेषामेवाऽग्निष्टोमोत्तरकालत्वविधिः। नन्वविपरिवर्तमानानां क्रत्वन्तराणां न कालो विधातुं शक्यते, "प्रकरणान्तरे प्रयोजनान्यत्वम्" इति न्यायात्। सत्यम्; इह तु "एष वाव प्रथमो यज्ञो यज्ञानाम्" इति यज्ञशब्देन विपरिवर्तमानानां यज्ञानामग्निष्टोमोत्तरकालो विधीयत इत्यदोषः॥ ४०-४२॥

[ १५–अग्निष्टोमविकाराणां सर्वेषामेव तदुत्तरकालताधिकरणम् ]

## एकस्तोमे वा क्रतुसंयोगात् ॥ ४३ ॥ पू०

एकस्तोमानां वाक्यशेषे सङ्कीर्त्तनात्तेषामेवान्यशब्देनाभिधानम्। भवति हि वाक्यशेषात् सामान्यप्रवृत्तस्य शब्दस्य विशेषे व्यवस्थापनम्, अक्ताः शर्करा घृतेनेतिवत्। तस्मात्तेषामेव वाद इति। उच्यते। नात्र विशेषे व्यवस्थापनं सम्भवति, अन्यमात्रवचनत्वेऽप्यर्थवादस्योपपन्नत्वात्। ज्योतिष्टोमे प्रथममनुष्ठिते सति तत्राभ्यस्तास्त्रिवृदादयः क्रत्वन्तरे पश्चात् क्रियमाणास्तं दीपयन्ति। असति तु ज्योतिष्टोमस्य प्राथम्येऽनभ्यस्तैस्त्रिवृदादिभिः कृच्छ्रेणानुष्ठीयमानैर्न क्रत्वन्तराणां दीप्तिः स्यात्। तस्मादिष्ट्वैव ज्योतिष्टोमेन क्रत्वन्तरैर्यजेतेति। त्रिवृदादिसत्तामात्रेणानेकस्तोमेष्वपि स्तुत्युपपत्तेर्न वाक्यशेषात् त्रिवृदाद्येकस्तोमकानां ग्रहणम्; किन्तु सर्वेषामविशेषादिति सिद्धम् ॥ ४३-४४ ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने पञ्चमस्य

॥ तृतीयः पादः ॥

---

[ १–पाठक्रमापेक्षया श्रुत्यर्थक्रमयोर्बलीयस्त्वाधिकरणम् ]

## क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥ सि०

प्रामाण्याविशेषात् श्रुत्यर्थपाठानाम् अन्यस्य विशेषस्यानभिहितत्वाच्च तुल्यबलतां मन्दधियो मंस्यन्त इति बलाबलमुच्यते। तत्र "आश्विनो दशमो गृह्यते", "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" [1]इति, "वेदं कृत्वा वेदीं कुर्यात्" इत्यादिभिर्वचनैरेव क्रमस्य विहितस्यानतिक्रमणीयत्वान्न तद्विरुद्धः काल्पनिकः पाठक्रमोऽङ्गीकर्तुं शक्यते। तथा "यवाग्वाऽग्निहोत्रं जुहोति", "यवागूं पचति" इत्यत्रापि पाकस्य द्वितीयाश्रुत्या लिङ्गेन च होमोपयोगियवागूत्पत्त्यर्थ-

1. इतिपदमधिकम्।

त्वावगमात् पश्चादनुष्ठाने च तद्विरोधादङ्गाङ्गानुरोधेन च [1]प्रधानबाधायोगात्, पाकाङ्गभूतपाठक्रमानुरोधेन पाकप्रयोजनहोमबाधानुपपत्तेः, पश्चात् पठितस्यापि पाकस्य पूर्वमेवानुष्ठानम्। ''अर्थाच्च'' इत्यत्रार्थाख्यं प्रमाणं व्युत्पादितम् ; न तु बलाबलं चिन्तितमिति न पौनरुक्त्यमाशङ्कितव्यम्।

[1]श्रुत्यर्थयोर्विरोधस्तु नैव क्वचन सम्भवी।
यथाश्रुत्येव हि न्याय्यमर्थस्य परिकल्पनम्॥
हुत्वाग्निहोत्रं पक्तव्या यवागूरिति हि [2]श्रुतेः[ति]।
पाकोऽदृष्टार्थ एव स्यादनुष्ठानं च पश्चिमम्॥ ॥ १ ॥

[ २–प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य बलीयस्त्वाधिकरणम् ]

**अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥२॥ पू०**

सूत्रभाष्ययोरवदानाभिघारणग्रहणं प्रधानचतुरवत्तावयवभूतावदानाभिघारणविषयं मा विज्ञायीत्याह—**स्विष्टकृदवदानम्, प्रयाजशेषाभिघारणम्, बर्हिषि हवींष्यासादयतीत्युदाहरणानि**। तत्र **प्रावृत्तिकक्रममुख्यक्रमयोः कतरो बलीयानिति विचारः**। यदि प्रवृत्तिर्बलीयसी ततो दध्नः पूर्वं कार्याणि, मुख्यबलीयस्त्वे त्वाग्नेयस्य। पूर्वपक्षमाह—**दध्नः प्रथमं तत्र धर्माः प्रक्रान्ताः। यदि तथैव प्रवृत्त्या तस्यैवासादनादीनि प्रथमं क्रियन्ते, ततो भवत्यङ्गानां प्रधानासत्तिः**[2]। प्रधानप्रयोगवचनविहिताङ्गानां परस्परप्रत्यासत्तिरित्यर्थः। **इतरथा** मुख्यक्रमेण क्रियमाणे सति। **अन्यस्य** दध्नः प्रक्रान्ता अन्यस्याग्नेयस्य

---

1. श्रुत्यर्थपाठादिषु क्रमप्रमाणेषु बलाबलविचारे श्रुत्यर्थयोर्विरोधे तन्न विचारितं सूत्रेषु। तत्र कारणं कथयति–श्रुत्यर्थयोरिति।
2. 'अङ्गानां प्रधानासत्तिः' इत्यत्र अङ्गानामित्यस्यासत्तिरित्यनेनान्वयात् 'अङ्गानां परस्परप्रत्यासत्तिः' इति लभ्यते। आसत्तेर्विशेषणं 'प्रधाना' इति। प्रधानप्रयोगवचनविहितेति तदर्थं इत्यभिसंधिना व्याचष्टे–प्रधानेति।

१. 'प्रधान' नास्ति–क०।
२. श्रूयते–क०। 'श्रुतिः' इति प्रसिद्धः पाठः।

**प्रथमं क्रियेरन्**। तत्र दधिधर्माणां पूर्वप्रक्रान्तानां पश्चात् क्रियमाणानां च मिथोऽत्यन्तव्यव**धानात् प्रधानप्रत्यासत्तिर्बाध्येत**। परस्परप्रत्यासत्तिरित्यर्थः। तदेव दर्शयति—**प्रयोगवचनेन साहित्यात्** प्रयोगवचनेन "अमावास्यायाममावास्यया यजेत" इत्यनेन त्रिकस्यापि साहित्याद्विहितादनुपपत्त्या **यावद्भिः क्षणैर्व्यवधानमङ्गा**नाम**नुज्ञातं** ततो**ऽभ्यधिकैरपि** व्यवधानं **कृतं स्यात्**। तच्चायुक्तम्। तस्माद्दध्नः प्रथमं कार्याणीति ॥ २ ॥

**यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ सि०**

सत्यं **दध्नः पाठात्**[1] केचन धर्माः **पूर्वं क्रियन्ते**। **अपरेद्युस्तु पाठक्रमादेवाग्नेयस्य** निर्वापादयः **पूर्वं** भवन्ति। **एतावति विषये मुख्यप्रावृत्तिकौ** क्रमौ **नैवावतरतः**। कुतः? **पाठस्य प्रत्यक्षत्वात्**। मुख्यप्रवृत्तिभ्यां बलीयस्त्वादित्युक्तम्—"प्रकृतौ तु स्वशब्दत्वात्" इत्यत्र। **वेद्यासादने तु नास्ति** पाठक्रमः **कस्य पूर्वमासादनमिति**। **तत्र यदि दध्नः पूर्वं प्रवृत्ता इति कृत्वा तस्यैवासादनं** प्रथमं **क्रियते, तथा सति प्रधानक्रमेण** प्रमाणेना**ग्नेयस्य** पूर्वमासादनं **कृत्वा** पश्चादन्येषां **कर्त्तव्य**मित्येतन्ना**नुगृह्येत**। **कुतः** पुनर्मुख्यक्रमः? [2]**अत आह**—पाठाद्धि **प्रथममाग्नेयः, ततो दधि, ततः पय इति** हेतोरस्ति मुख्यक्रमः। यद्यप्य**येकैकमेव** प्रधानमेषामाग्नेयादीनां स्वीयां **स्वसन्निहितामितिकर्त्तव्यतामभिलषति,** तथापि **तु सहत्वयोगात्**। वाचनिकं ह्याग्नेयादित्रयाणां सहत्वम्। तद्वशाद्[3] **द्विक्षणव्यवहितमा**त्मीयम**ङ्गमेकैकं** प्रधानमभिलषति। ततः किमित्याह—**प्रत्यक्षपाठात्त्वा**ग्नेयादीनां **पूर्वं पूर्वस्य धर्माः**। आग्नेयादीनां प्रत्यक्षपाठादेवावगतः

---

१. पूर्वेद्युः केचन–ख०।

२. तमाह–क०।

३. "ततः पश्चादनुष्ठीयमानस्य पूर्वानुष्ठितेन खाङ्गेनात्यन्तविप्रकर्षप्रसङ्गात्" अधिकः पाठः–ख०।

क्रमः। तेषां चैकैकस्यैव स्वीया धर्माः क्षणद्वयव्यवहिताः कर्त्तव्या इति पूर्वस्य धर्माः पूर्वमनुष्ठेया इति। **ततो द्वितीयतृतीययोः**। तदेतन्मुख्यक्रमाधिकरणे वर्णितम्। **तत्र यदि दध्नः** पश्चादनुष्ठीयमानस्य **पूर्वं धर्माः क्रियेरन्, तथा सति** तस्मादपि **पूर्वमाग्नेयेन स्वासादनमनुभवितव्यमिति योऽवगतः प्रधानेन सहाङ्गानां क्रमो** द्विक्षणव्यवधानात्मकः **स बाध्येत**, दध्नः पश्चादनुष्ठीयमानस्य पूर्वानुष्ठितेन स्वाङ्गेनात्यन्तविप्रकर्षात्।

ननु प्रवृत्तिक्रमबलेनायं क्रमो बाध्यताम्, तत्राह—**एतस्मिंश्च मुख्यक्रमे बाध्यमाने** बहूनामङ्गानां प्रधानविप्रकर्षः स्यात्, प्रवृत्तिक्रमबाधे त्वल्पीयसाम्। किञ्च साङ्गे प्रधाने चोद्यमाने प्रधानसाहित्यमङ्गानां प्रतीयते, परस्परसाहित्यं तु तद्द्वारेण, अतः प्रधानप्रत्यासत्तिः परस्परप्रत्यासत्तितो बलीयसीति। तस्मान्मुख्यक्रमबलीयस्त्वात् **प्रावृत्तिकः क्रमो बाध्यते**। अत्र भाष्यम्—प्रधानो[ प्रदानो ]पक्रमा एते न पृथक्पदार्था इत्युक्तमिति। तदनुभाष्याक्षिपति—**अग्रन्थोऽयम्**। न ह्येतेषामपृथक्पदार्थत्वं क्वचिदप्युक्तम्। अथ प्रधानावदानाभिघारणाभिप्रायमिदं भाष्यम्। तदयुक्तम्, तस्यानुदाहरणत्वात्। न च तदेवोदाहरणमिति शक्यं वक्तुम्, पूर्वमेवावदानादेः प्रदानान्तरस्यैकपदार्थत्वप्रसाधनात्; प्रदानेन पृथग्भवितुमक्षमत्वादेवावदानाभिघारणयोस्तदीयक्रमसिद्धेरधिकरणान्तरस्य तद्गोचरस्य वैयर्थ्यादनारम्भणीयत्वात्। किञ्चासादनस्य सामिधेन्यनुवचनादिव्यवहितस्य प्रदानोपक्रमत्वमत्यन्ताशक्यं वक्तुम्। तस्मात् स्विष्टकृदवदानादिविषयमेव यथाकथञ्चिद्भाष्यं व्याख्येयम्। प्रदानोपक्रमा एते न पृथक्पदार्था इति। प्रदानाङ्गभूता एते न तु तदसम्बद्धाः स्वतन्त्राः पदार्थाः, फलकल्पनाप्रसङ्गात्। क्रत्वर्थत्वे तु प्रकृतक्रत्वर्थत्वात् तत्रापि दृष्टोपकारकत्वान्नास्ति फलकल्पना। तस्मात् प्रदानाङ्गत्वादेतेषां तदीय एवैषु क्रमः समाश्रयितव्य इति ॥ ३ ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥ सि०

इति सूत्रार्थमाह—**लिङ्गदर्शनं चेममेव न्यायं दर्शयति। यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं** हेतुवन्निगदेनार्थवादेन। **ततस्तुल्य-**

न्यायत्वादितरेष्वपि तथा भवितुमर्हति। तस्मान्मुख्यक्रमेण नियम इति ॥४॥

[ ३—इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पाधिकरणम् ]

**वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ पू०**

भिन्न[1]प्रयोगवचनपरिगृहीतानामपि वाचनिकः पूर्वापरभावश्चिन्त्यते। यथा "दर्शपूर्णमासाविष्ट्वा सोमेन यजेत" इति वचनेन सोमस्येष्टिपूर्वत्वं साक्षादुक्तम्, नैवमिष्टेः सोमपूर्वत्वं साक्षात् केनचिदुच्यते, "सोमेन यक्ष्यमाणोऽग्निमादधीत" इत्येतस्य श्रुत्याधानविधानपरत्वात्। तस्मादिष्टिपूर्वत्वमेवेति ॥ ५ ॥

सिद्धान्तमाह—

**सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् [2]तदर्थेनानर्थकं हि स्यात् ॥ ६ ॥ सि०**

प्रागपि दर्शपूर्णमासाभ्यां कर्त्तव्यः सोमः। कथम्? सोमेन यक्ष्यमाणोऽग्निमादधीत" इति ह्याधानोत्तरकाले सोमः श्रूयते। नात्राधानं विधीयते, वसन्तादिवचनैरेव प्राप्तत्वात्। तस्मात् सोमेन यक्ष्यमाण इत्ययं सोमस्याधानात् परभावोऽत्र विधीयते। स च सोमस्य कर्मान्तरेभ्योऽसाधारण्ये[1] सत्युपपद्यते[3], अन्यथा "सोमेन यक्ष्यमाणः" इति विशेषणानुपपत्तेः। यदि ह्याधानोत्तरकालं प्रागेव दर्शपौर्णमासाभ्यां सोमेन यजेत न दर्शपूर्णमासोत्तरकालम्, एवं सत्यसाधारणः सम्बन्धः स्यादितरथा यदि सोमस्य दर्शपूर्णमासप्राक्त्वं नाश्रीयते, किन्तु तेन यक्ष्यमाणत्वमात्रं ततः सोमस्य, दर्शपूर्णमासपशुबन्धादिभिः सर्वैरेव पुरुषो यक्ष्यते, तत्र—"सोमेन

---

1. असाधारण इति पूनामुद्रितो मूलपाठो न स्वरसः।

१. 'प्रयोग' नास्ति—क०।

२. तदन्तेन—पू० मु० पाठः।

३. उत्पद्यते—क० ख० ग०।

**यक्ष्यमाणः" इति विशेषणं नावकल्पेत**। न चायक्ष्यमाणव्युदासेन विशेषणं तदभावादित्याह--**नैवंविधः पुरुषोऽस्ति यः सोमेन नैव** [१]**यक्ष्यते,** यदपेक्षया[1] सोमेन यक्ष्यमाण इति **विशेषणं भवेत्**। **नित्यो हि सोमः**। तस्मात् सोमेनाधानानन्तरं यक्ष्यमाणोऽग्निमादधीत इति वाक्यार्थः। यक्ष्यमाण इति च दीक्षिष्यमाण इतिवत् क्रियार्थायां क्रियायामुपपदे लट्प्रत्ययः, सोमेन यष्टुमित्यर्थः। अयं चार्थो भाष्यकारेणोत्तरसूत्रे--"तदर्थवचनाच्च" इत्यत्र वाक्यान्तरं "यः सोमेन यजेत [यक्ष्यमाणः] सोऽग्नीनादधीत" इत्येतदुदाहृत्य वक्ष्यमाणोऽनागतावेक्षणेनात्रापि वाक्ये तुल्य इति मत्वा[2] दर्शितः [न दर्शितः]।

सम्प्रत्येतस्य सूत्रस्यार्थमाह—**ऋतुनक्षत्रप्रतिषेधश्च सोमाधानानन्तर्य एव घटते** नान्यथा। कथमित्याह—[२]सोमस्य **हि कालो** विहितः 'वसन्ते ज्योतिष्टोमेन यजेत' इति। **स यदि प्रतिषिध्यते किमर्थं तस्य विधानम्**। अनर्थकं हि स्यात्। **यदि त्वाधानोत्तरकालस्य सोमस्य** सोमेन यक्ष्यमाणोऽग्निमादधीत" इत्यनन्तरं[ र ]वाक्यविहितस्य "नर्तुं पृच्छेत्" इति **कालप्रतिषेधः, ततो दर्शपूर्णमासोत्तरकाले** सोमे "दर्शपूर्णमासाविष्ट्वा सोमेन यजेत" इति विहिते **वसन्तकालविधानं कृतार्थं** भवति। तदिदमुक्तम्–

---

1. **येन तदपेक्षया–पूनामुद्रितो मूलपाठः।**
2. **'तुल्य इति मत्वा' इति ग्रन्थस्वारस्यात् 'न दर्शितः' इति मूलपाठोऽनुमीयते। उत्तरसूत्रभाष्यस्थो यक्ष्यमाणपदस्यार्थोऽत्रापि सुग्रह एव सर्वेषामिति मत्वा वार्त्तिककारेण न दर्शित इत्यर्थः।**

१. **'यक्ष्यते यदपेक्षया सोमेन' इत्यारभ्य 'वाक्यार्थः' इत्यन्तः पाठो नास्ति–ख०।**

२. **'सोमस्य' इत्यारभ्य 'कालस्य' इत्यन्तः पाठो नास्ति–ख०।**

अग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनादिति । [1]अग्न्याधेयस्येति नर्तुनक्षत्रातिक्रमव्यतिरेकजनिता[2] षष्ठी, किन्त्वग्न्याधेयस्य प्रकरणे सोमस्यर्तुनक्षत्रातिक्रमवचनादित्यर्थः। सोमकालबाधोऽयं नाधानकालबाध इत्युत्तराधिकरणे स्थास्यति । भाष्यकारस्त्वाधानस्यापि[3] कालबाधेन प्रस्तुताधिकरणसिद्धिं मन्यमानोऽनादरादाधानकालबाधमेव दर्शितवान्—"न प्रतीक्षेत नक्षत्रं नाप्यृतुम्, तावत्येवादधीत" इति । न तु पारमार्थिकमाधानकालबाधाभिधानं वक्ष्यमाणविरोधादिति । उपसंहरति—**तस्मात् सोमस्य द्वौ कालौ प्राग् दर्शपूर्णमासयोरूर्ध्वं च ।**

एवं स्थितेऽधिकरणे किमाधानानन्तरमन्यत्[1] किञ्चिदकृत्वा सोम एव कर्त्तव्यः, उतान्तरापि किञ्चित् भवत्येवेति संशये, न किञ्चित् कर्त्तव्यमानन्तर्यावगमात् सोमाधानयोरिति प्राप्ते, [4]पक्षान्तरमाह—**न चाधानानन्तरमन्यन्न[5] किञ्चिदनुष्ठेयम्, सोम एव कर्त्तव्य** इति मन्तव्यम् ; किं तर्हि? **पवमानेष्टिव्रात्यपश्वग्निहोत्राणि कृत्वाऽपि सोमो दर्शपूर्णमासयोः प्राक् कर्त्तव्य इत्येतदपेक्षया सोमेन यक्ष्यमाण इत्यसाधारण्यमुपपद्यत एव ।** विशेषणस्य ह्यसाधारण्यसिद्ध्यर्थं सोमाधानानन्तर्यमिष्यते । तच्च "दर्शपूर्णमासाविष्ट्वा सोमेन यजेत" इति विहितदर्शपूर्णमासोत्तरकालव्युदासेन ततः प्राक् **सोमेन यक्ष्यमाण** इत्येवमप्युपपन्नमेवेति न कर्मान्तराणामन्तरानुष्ठानं विरुणद्धि । तदिदमनुपपन्नमिति भाष्यकारो न मृष्यतीत्याह—**यथा तु भाष्यकारेणोक्तं तथा व्रात्यपशुः**

---

1. सूत्रावयवस्य विवक्षितोऽर्थोऽयमेवेत्याह—अग्न्याधेयस्येतीति ।
2. 'व्यतिरेकजनिता' इत्येव कोशेषु पाठः । व्यतिकरजनिता इति तु पाठ उन्नीयते । सम्बन्धजनिता इत्यर्थः ।
3. 'न प्रतीक्षेत' इत्याधानकालस्यैव प्रतिषेध इत्येव याज्ञिकमतम् ।
4. अन्तरशब्दोऽत्र विशेषपर्यायः । यद्वा भाष्यपक्षादन्यपक्ष इत्यर्थः ।
5. 'अन्यत् किञ्चित्' इति नञ्रहित एव कोशेषु पाठः । तथापि नञा युक्तः पूनामुद्रित एव मूलपाठो युक्त इति स एव निवेशितः ।

१. 'न' अधिकं—क० ।

**सोमाङ्गत्वाद्भवति, पवमानेष्ट्योऽप्यग्निसंस्कारार्थत्वाद्भवन्त्येव, अग्निहोत्रं तु नास्ति।** भाष्यकारेण ह्येवमुक्तम्—अद्यतनप्रत्ययोऽयं यक्ष्यमाण इति। स सोमस्याद्यतनत्वादानन्तर्यं प्रतिपादयति। कर्मान्तराव्यवायश्चानन्तर्यम्, अतोऽस्मिन् पक्षेऽग्निहोत्रमन्तरा होतुं न शक्यते। यद्यपि नायमद्यतनः प्रत्ययः, तथापि सोमेन यक्ष्यमाण इति विशेषणस्यासाधारण्यं न दर्शपूर्णमासमात्रापेक्षमिति प्रमाणमस्तीति कर्ममात्रं नान्तरा कर्तुं शक्यम्। प्रायश्चित्तपशुस्तु फलान्तराश्रवणाद् रात्रिसत्रन्यायेन[1] "उपैतु सोमम्" इति वाक्यशेषात् सोमाधिकारसिद्ध्यर्थ इति तेनान्तरा क्रियमाणेनापि न व्यवधीयते सोमः। तथा पवमानेष्टिभिरप्याहवनीयसिद्ध्यर्थमपेक्षिताभिरव्यवायः। नहि तदर्थमेव क्रियमाणं तस्य व्यवधायकं भवति। तस्माद् द्वयमेव कर्त्तव्यम्, कर्मान्तरं तु न किञ्चिदपि सोमपूर्वत्वपक्षेऽन्तरा कर्त्तव्यमिति। ये त्विष्टिपूर्वपक्ष एव व्रात्यपशुं मन्यन्ते तेषां किं मूलमिति न विद्मः ॥६-९॥

[ ४—ब्राह्मणस्यापि सोमपूर्वत्वेष्टिपूर्वत्वरूपकल्पद्वयाधिकरणम् ]

## उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् ॥ १० ॥ पू०

सिद्धे कल्पद्वये चिन्त्यते—किं क्षत्रियवैश्ययोरेवेदं कल्पद्वयम्, ब्राह्मणस्य तु सोमपूर्वत्वमेव, उत त्रयाणामपि वर्णानां कल्पद्वयमिति। तत्सिद्ध्यर्थमिदं चिन्त्यते—किम् "आग्नेयो वै ब्राह्मणो देवतया" इत्यादिना वचनेन ब्राह्मणस्य कृत्स्नयोर्दर्शपूर्णमासयोरुत्कर्षो विधीयते, किं वा तदेकदेशस्य पौर्णमासीमात्रस्य, उत तत्राप्येकस्यैव हविषः, किं वानेन न कस्यचिदुत्कर्षो विधीयते, किन्तु कर्मान्तरमिदमूर्ध्वं सोमाद् ब्राह्मणस्य विधीयत इति। कृत्स्नोत्कर्षे ब्राह्मणस्य सोमपूर्वत्वमेव, इतरेषु तु पक्षेषु तस्याप्युभौ कल्पौ। तत्र कृत्स्नोत्कर्षः, सोमपूर्वत्वमेव ब्राह्मणस्येति पूर्वः पक्षः। पौर्णमासीमात्रोत्कर्षः, कर्मान्तरविधिः, ब्राह्मणस्याप्युभौ कल्पाविति सिद्धान्त्येकदेशिपक्षौ, एकस्यैव हविष उत्कर्षो ब्राह्मणस्याप्युभौ पक्षाविति सिद्धान्तः। तत्र यद्यप्येकदेशमात्रस्य वाक्येनोत्कर्षः, तथापि सर्वसम्पाद्यत्वात् फलस्यैकदेशा-

---

१. नोचैनं—क०।

पायेऽप्युत्पत्त्ययोगादफलस्य चोक्तस्याप्यननुष्ठानात् समस्तस्यैव प्राक् सोमादकरणमिति सोमपूर्वत्वमेव ब्राह्मणस्येति पूर्वः पक्षः ॥ १० ॥

एकदेशी त्वाह—

**पौर्णमासी वा श्रुतिसंयोगात् ॥११॥ ए०**

इति। "यदेवादः पौर्णमासं हविः" इति तन्मात्रश्रवणान्न कृत्स्नस्योत्कर्ष इति ॥११॥

**सर्वस्य वैककर्म्यात् ॥१२॥ पू०**

इति सर्वपक्षाभिप्रायविवरणं भाष्य एव व्याख्यातम् ॥१२॥

एवं स्थिते सत्येकदेश्यन्तरमाह—

**स्याद्वा विधिस्तदर्थेन ॥१३॥ ए०**

तत्पठित्वा व्याचष्टे—**यदि केवला पूर्णमास्युत्कृष्येत** यथा "पौर्णमासी वा श्रुतिसंयोगात्" इति ब्रुवन्नेकदेशी मन्यते, तथा सत्यवशिष्टात् **फलं न स्यात्** । **अथ दर्शोऽप्युत्कृष्येत** यथा पूर्वपक्षवादी मन्यते, तथा **सत्यश्रुतस्तस्योत्कर्षः** [1]प्रमाणमन्तरेण कल्पितः स्यात् । **तस्मादुभयपरिहाराय सोमोत्तरकालं** पौर्णमासीसंज्ञकं **कर्म विधीयते,** नैयमिकात् पौर्णमासा**दन्यत्** । **युक्तं चैतत्** । **एवं च कर्मविधानात् श्रुतिः** । **इतरथा** प्रसिद्धस्य **पौर्णमासीकर्मणः सोमोत्तरकालता विधीयेत** । **तत्र वाक्यं स्यात्, यागस्याविधानात्** । **तस्माद्यागस्य विधानात्**[2] **पौर्णमासीसंज्ञकं** प्रसिद्धात् कर्मणः **कर्मान्तरं** विधीयते । ननु पौर्णमासशब्दः प्रसिद्धस्यैव वाचकोऽत आह—[3]**अथवोभयोः** [4]प्रसिद्धविधीयमानयोः **कर्मणोः साधारणीयं** पौर्णमासी**संज्ञा,** उभयत्रापि

---

१. प्रमाणान्तरेण–क० ।

२. 'तस्माद्यागस्याविधानात्' अधिकः पाठः–क० ख० ।

३. अनयोः–क० ।

४. प्रसिद्धयोः–ख० ।

सामानाधिकरण्याविशेषादिति भावः। धर्मातिदेशको वायम्, कौण्डपायिनामयनाग्निहोत्रशब्दवत्। तस्मादनुत्कर्षाद् ब्राह्मणस्याप्युभौ कल्पावप्रतिहताविति ॥१३॥

## प्रकरणात्तु कालः स्यात् ॥१४॥ सि०

पुनः पूर्वपक्षवाद्याह—दर्शपूर्णमासयोः[1] प्रकरणे श्रुतमशक्यं कर्मान्तरं कल्पयितुम्, तस्यैव प्रत्यभिज्ञानात्। अतो निर्ज्ञातस्य यागस्य कालमुपदिश्य[2] कृतार्थं वाक्यमशक्तं कर्मान्तरविधौ। किञ्च, बह्वदृष्टप्रसङ्गाच्च। अशक्तमित्यनुषङ्गः। किञ्च, पौर्णमासीशब्देन गौण्या वृत्त्या धर्मातिदेशोऽप्ययुक्तः, श्रुत्यर्थपरिग्रहेणापि सत्यां गतौ। तथा साधारणशब्दताप्ययुक्ता, अन्यायश्चानेकार्थत्वमिति न्यायात्। तस्मात् पौर्णमास्युत्कर्षः। अतश्च तत्सम्बन्धेन फलस्या[लस्य] चोदितत्वाद्दर्शोऽप्युत्कृष्येतेति ॥१४॥

अतः परं सहान्तराविचारेणावशिष्टमधिकरणमुपरितनं चाधिकरणद्वयं निगदव्याख्यातम्। तथाप्यस्माभिः किञ्चिदुच्यते—

[ ५—सोमपूर्वत्वकल्पे सोमस्य विहितकालबाधाधिकरणम् ]

## स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥ पू०

अपर्यवसिते पूर्वाधिकरणे पूर्वोपपत्तिबलेन पूर्वपक्षं वक्तुम् अन्तरा किञ्चिद्विचार्यते। यथैव प्रकरणात् "आग्नेयो वै ब्राह्मणः" इत्यनेन वाक्येन पौर्णमास्यां कालविधिः, तथा "नर्तुं प्रतीक्षेत्" इत्यादिनाप्याधानप्रकरणात्तस्यैव कालः प्रतिषिध्यते, न सोमस्याप्रकृतत्वात्। एवं चाङ्गगुणन्यायस्याविप्रतिषेधो भविष्यति। सोमाङ्गं ह्यग्नयः, तेषामप्यङ्गमाधानमिति तस्यैव कालबाधो युक्तः, न प्रधानस्य सोमस्य। अतः स्वकाल एव वसन्तादिके सोमपूर्वत्वपक्षेऽपि सोमः स्यादिति ॥१५॥

---

१. 'प्रकरणे' नास्ति—क०।

२. उद्दिश्य—क० ख० ग०।

स्यादेवं यद्याधानस्य वचनान्तरेणास्यामेव शाखायां सर्वकालत्वं न प्रतिपादितं स्यात्। तत्तु "यदहरेवैनम्" इत्यनेन वचनेन [1]प्रतिपादितम्। अतस्तस्य [तस्य न] कालप्रतिषेधः। यद्यपि सोमकालोऽपि–"अपहतपाप्मानो वा ऋतवः" इत्युपक्रम्य "यदेवैनं श्रद्धोपनमेदथादधीताथ यजेत" इति शतपथे प्रतिषिद्धः, तथाप्यस्यां शाखायां[1] तत्प्रतिषेधाभावात् तदर्थमेवेदं वचनम्। तस्मात् सोमेन प्रागेव दर्शपूर्णमासाभ्यां यक्ष्यमाणोऽग्निमादधीत इत्येवं कुर्वन् न सोमकालं वसन्तादिकमृतुं नक्षत्रं च ज्योतिःशास्त्रप्रसिद्धं सम्पत्क्षेमादिकं च वेदे "तेषु कुर्वीत यत्कारी स्यात्"[2] इति विहितं देवनक्षत्रं [तं च] नाद्रियेतेति वाक्यार्थः ॥ १६ ॥

[ ४–अपर्यवसितस्य चतुर्थाधिकरणस्यानुवर्तनम् ]

## पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात् ॥१७॥ पू०

[3]स्थितादुत्तरम्। पुनरेकदेश्याह—न कृत्स्नोत्कर्षः, पौर्णमासीमात्रश्रवणात्। ननु तस्मिन्नुत्कृष्टेऽवशिष्टमफलमिति तदपि न कर्त्तव्यम्? उच्यते—वचनात् तावन्मात्रोत्कर्षावगमात्, अवशिष्टस्य प्रागपि कर्त्तव्यत्वावधारणात्, फलवाक्येन च षण्णामुपादानात्, सर्वोपपत्त्यर्थं समुदायादेवैवंविहितात् फलमिति कल्प्यत इति न दोषः। तस्माद्ब्राह्मणस्याप्युभौ कल्पौ ॥ १७ ॥

---

1. अस्यां शाखायामिति तैत्तिरीयशाखोच्यते।

2. "यान्येव देवनक्षत्राणि। तेषु कुर्वीत यत्कारी स्यात्। पुण्याह एव तत् कुरुते" इति तैत्तिरीयब्राह्मणे प्रथमाष्टकपञ्चमप्रपाठकद्वितीयानुवाकस्थं वचनम्। अस्यार्थः—यत् कर्म करोतीति यत्कारी पुरुषः स्यात्, स यान्येव कृत्तिकाप्रभृतीनि चतुर्दश देवनक्षत्राण्युक्तानि तेष्वेव लौकिकं वैदिकं च कर्म कुर्यादिति।

3. पूर्वस्मिन् चतुर्थाधिकरणे यदपर्यवसितमेव स्थितम्, तस्मादुत्तरमुपरितनं वक्तव्यमुच्यत इत्यर्थः।

१. 'पादित' इत्यारभ्य 'यजेतेति' इत्यन्तः पाठो नास्ति–ख०।

## एकं वा शब्दसामर्थ्यात् प्राक्कृत्स्नविधानात् ॥ १८ ॥ सि०

इति सिद्धान्तसूत्रम्। तस्यार्थः—न सर्वा पौर्णमास्युत्कृष्यते; किन्तु "यदेवादः पौर्णमासं हविः" इति श्रवणादेकहविर्मात्रम्। तस्माद् ब्राह्मणस्याप्युभौ कल्पौ। यस्तु तस्यैव कल्पद्वयमितरयोस्त्विष्टिपूर्वत्वमेवेति वदति, स वक्तव्यः—किमत्र प्रमाणमिति। स चेद् ब्रूयात्—अपेक्षितविधित्वलाभ इति। ब्राह्मणस्य खल्विष्टिपूर्वत्वपक्षेऽग्नीषोमीयोत्कर्षाद् न्यूनदर्शपूर्णमासप्रयोगापत्तेरियमपेक्षा जायते—केन प्रकारेण प्रथममेव समस्तो दर्शपूर्णमासप्रयोगः स्यादिति। तस्यामपेक्षायां सोमपूर्वत्वपक्षे तस्य विधीयमानेऽपेक्षितार्थविधानं भवति, अन्यथा सर्वेषां सोमपूर्वत्वमनपेक्षितं विहितं स्यात्। तच्चायुक्तम्। तस्मात् सोमाधानं तस्यैवेति। प्रतिब्रूयादेनं कस्येयमपेक्षेति। न तावद्विधेः कस्यचिदियमपेक्षास्ति। यदि पर[परं]पुरुषस्येयमपेक्षा स्यात्—प्रथममेव सम्पूर्णः प्रयोगो मे भूयादिति। न च पुरुषेच्छा[1]धीनो विधिरिति युक्तम्। अपि चैतावत्यपेक्षेतरयोरपि[2] शक्यते दर्शयितुम्। तावपि ह्यपेक्षेते कथं नामानन्तरमेव ज्योतिष्टोमाभ्युदयः प्राप्येतेति। तस्मादविशेषात् त्रयाणामपि वर्णानां कल्पद्वयमप्रतिहतं स्थितम् ॥ १८ ॥

[ ६—उपांशुयागस्य सोमोत्तरमनुत्कर्षाधिकरणम् ]

## पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥ सि०

एकस्य हविष उत्कर्ष इत्युक्तम्। तदेव तु न ज्ञायते विशेषानिर्देशात्। अतः पुनरपि सर्वपौर्णमास्युत्कर्षः प्राप्त इत्याशङ्क्य विशेषोऽभिधीयते। हेतुवशाद्व्यवस्थासिद्धिः। यस्मात् सोमादूर्ध्वं ब्राह्मणस्याग्नीषोमीयत्वम्, अग्नीषोमीयहविस्त्यागार्हत्वम्, 'तस्मादेतद्धविस्तदैव निर्वपेत्' इत्युक्तेऽग्नीषोमीयमेव प्रतीयते। एतावदेव हि पुरुषस्याग्नीषोमीयत्वं यत्तद्दैवतहविः[3]प्रदातृत्वम्। तदिदमुक्तम्—तद्युक्ते देवता-

---

१. पुरुषेष्ट्यनुवर्ती—ख०।

२. 'तरयोरपि' इत्यादितः 'कल्पद्वयम्' इत्यन्तः पाठो नास्ति—ख०।

३. 'प्रदातृत्वम्' नास्ति—क०।

भावात्" इति। हविर्युक्ते हि पुरुषे देवता भवति, न तु [1]तन्निरपेक्षस्यास्ति देवतासम्बन्धः। तस्मात् पुरोडाशनिर्देशः। नन्वाज्यमप्यग्नीषोमीयम्। सत्यम्—तथापि नोत्कृष्यते। तद्धि प्राजापत्यं वैष्णवमग्नीषोमीयं च। तद्यद्यपि प्राक् सोमाद् अग्निषोमौ न यष्टुमर्हति पुरुषस्तथापि विष्ण्वादियागसम्भवान्नोत्कृष्यत आज्यमिति ॥ १९–२१ ॥

[ ७–विकृतीनामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ]

**विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ सि०**

यथा प्रकृतौ "पौर्णमास्यां पौर्णमास्या यजेत" इति सत्यपि वचने "पूर्वेद्युरग्निं गृह्णातिरुत्तरायां[ ति उत्तरमहः ] देवता यजति" इति वचनान्तरात् प्रयोगैकदेशः पौर्णमास्यां योजितो न सकलः प्रयोगः। तथा विकृतावपि "य इष्ट्या पशुना सोमेन वा यक्ष्यमाणः [यजेत स] पौर्णमास्याममावास्यायां वा यजेत" इति वचने सत्यपि चोदकप्राप्तद्व्यहकालानुग्रहाय प्रयोगैकदेश एव पर्वणि स्यात्, न तु सकलः प्रयोगः। किमर्थं तर्ह्येतद् वचनम्—"य इष्ट्या पशुना" इति प्रकृतित एवास्यार्थस्य प्राप्तत्वात्? सोमकालविधानार्थम्; द्रष्टान्तत्वेन त्विष्टिपशुग्रहणम्। यथेष्ट्या पशुना च पर्वणीज्यते तथा सोमेनापि तस्मिन्नेव यजेतेति। यद्वा व्यवस्थानिवृत्त्यर्थम्। प्रकृतितो हि पौर्णमासीविकाराणां पौर्णमासीकालत्वम्, अमावास्याविकाराणां च तत्कालत्वं व्यवस्थितं प्राप्नोतीति तन्निवर्तनेन सर्वेष्टिपशुबन्धानां कालद्वयविध्यर्थमिदं वचनमिति द्व्यहकाला एव विकृतय इति प्राप्तेऽभिधीयते—

वचनादेककाला विकृतय इति। पौर्णमास्यादिकालं प्रति हि साङ्गं कर्मोपादीयमानं तस्मिन्नेव सर्वं कर्त्तव्यमवगम्यमानं न चोदकेन बाधितुं शक्यते। प्रकृतौ तु वाचनिकत्वाद् द्व्यहकालत्वस्य, युक्तम्—यत् पौर्णमासीसंयोगस्य कृत्स्नप्रयोगगोचरत्वं बाध्यते। इह त्वानुमानिकेन चोदकेन न प्रत्यक्षवचनबाधो युक्त इति सकलाङ्गोपेता

---

१. 'पुरुष' अधिकं—ख०।

विकृतिर्दर्शपूर्णमासयोरेव[1] कर्त्तव्या। व्यवस्थानिवृत्तिश्चास्मत्पक्षेऽप्यवकल्पते, सर्वेष्टीनां पशूनां चाविशेषेण कालद्वयं प्रत्युपादीयमानत्वात्। तेन द्व्यहकालत्वनिवृत्त्यर्थं व्यवस्थानिवृत्त्यर्थं[2] वैतद्[चैतद्] वचनम्, न त्वन्यतरार्थम्। नन्वन्यतरार्थत्वेनाप्युपपत्तेरुभयत्राधनं न युक्तम्? न, उभयत्राधावगमात् विशेषाग्रहणात्[3]।

नन्वशक्यं सकलाङ्गोपेतं कर्म पौर्णमास्यां कर्तुम्, पौर्णमासीशब्दो हि यस्मिन क्षणे चन्द्रः संपूर्णो भवति तस्य वाचकः। स चाल्पः पञ्चदश्यास्तिथेरन्तिमः क्षणः। तदा हि सूर्याचन्द्रमसोरत्यन्तविप्रकर्षः। तेन तदा पूर्णो भवति चन्द्रमाः। न च क्षणे कर्म कर्तुं शक्यम्, अत्यन्तस्वल्पत्वाद् दुर्ज्ञानत्वाच्च। एवममावास्याशब्दोऽपि यदा चन्द्रस्य सूर्येणात्यन्तसन्निकर्षादात्यन्तिकः क्षयो भवति तस्य क्षणस्य वाचकः, अमाशब्दस्य साहित्यवाचित्वात्। अतः कथं साङ्गं पौर्णमास्याममावास्यायां वा कुर्वीतेति भाष्यकारेणोक्तम्। नैष दोषः। न क्षणमात्राभिधायिनावेतौ शब्दौ, तिथिविशेषवाचित्वेन लोके वेदे च प्रसिद्धत्वात्। लोकप्रसिद्धिरविवादा। वेदेऽपि—"सोमस्य वै राज्ञोऽर्द्धमासस्य रात्रयः पत्नय आसन्, तासाममावास्यां च पौर्णमासीं च नोपैत्" इत्यर्द्धमासरात्रीणामेवान्यतमस्या[वान्तिमयोर]भिधायिनौ शब्दावेतौ गम्येते। अर्द्धमासरात्रयश्च तिथय इति तिथिवाचित्वं स्पष्टम्। यद्यपि च अमा वसतोऽस्मिन् सूर्याचन्द्रमसावित्यमावास्याशब्दव्युत्पत्तिः। अमावसनं चान्तिम एव क्षणे। तथा पौर्णमासीशब्दस्यापि चन्द्रपूर्तिर्निमित्तम्। सा चान्त्य एव क्षणे। तथाप्येकदेशवर्तिनावपि चन्द्रपूरणसहवासौ निमित्तीकृत्यैकदेशिनमेव तिथिविशेषं पञ्चदश्याख्यं पौर्णमास्यमावास्याशब्दावभिदधाते, तत्रैव लोकपुराणादिषु प्रसिद्धत्वात्। भवति चैकदेशवर्तिनापि निमित्तेन एकदेशिनोऽभिधानम्, यथा कर्णवर्तिना कुण्डलेन कुण्डली देवदत्त इति देव-

१. 'तिर्दर्श' इत्यादितः 'द्व्यहकाल' इत्यन्तः पाठो नास्ति—ख०।

२. 'व्यवस्थानिवृत्त्यर्थं' नास्ति—क०।

३. विशेष—ख०।

दत्तस्याभिधानम्। युक्तं[1] चैतत्। यदेकदेशे वर्तते[2] वर्तत एव तदेकदेशिन्यपि, यथा द्विपदे स्थितोऽपवरके गृहे ग्रामे जनपदे च स्थितो भवति। तस्मात्तिथिवाचित्वादनयोः पञ्चदश्यामेव विकृतयः साङ्गाः कर्त्तव्याः। एवं च यद् धूर्तस्वाम्यादिभिरुच्यते—"प्रागावर्तनात् पर्वावर्तने प्रतिपत्पञ्चदशीसन्धौ सति कृत्वा प्रकृतिं प्रतिपदि विकृतिः कर्तव्या" इति, तदन्याय्यमनभिमतं भगवतो भाष्यकारस्येत्यास्तां तावत् ॥ २२ ॥

[ ८—सान्नाय्याग्नीषोमीयविकाराणां सोमोत्तरकालताधिकरणम् ]

## सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ॥२५॥ सि०

भाष्यकारेणामिक्षा पशुरिति सान्नाय्यविकारोदाहरणं दत्तम्। तत्र पशूदाहरणं दूषयति—**अनुदाहरणमग्नीषोमीयः** पशुः। तेन यदि तावदग्नीषोमीयाभिप्रायं पशुग्रहणम्, तत्तावदयुक्तम्। कुत इत्याह—**तस्य हि वचनेन चोदकप्राप्तः सोमोत्तरकालो बाध्यते**। ज्योतिष्टोमाङ्गस्य हि तस्य तत्प्रयोगान्तर्भूतत्वान्न[3] तदुत्तरकालत्वं सिद्धान्तयितुं शक्यते। अस्ति च वचनम्—"स एष उपवसथीयेऽहनि द्विदेवत्यः पशुरालभ्यते" इति। अथ निरूढपश्वभिप्रायम्, तत्राह—**तद्विकारा** अग्नीषोमीयविकाराश्च निरूढपशवोऽ**नुदाहरणम्**। कुतः ? **न हि तेषां प्रकृत्या**ऽग्नीषोमीयेन **सोमा[4]दूर्ध्वकालोऽनुभूतः**, कथं प्रकृतावविद्यमानमङ्गं चोदकेन विकृतिं गच्छेत्। अतः पशोरनुदाहरणत्वात् **केवला** याऽऽमिक्षा सैव सान्नाय्यविकार **इहोदाहरणम्**। तत्राविशेषवचनात् प्रागूर्ध्वं च कर्त्तव्यतां मन्वानस्योत्तरं प्रकृतितः सोमोत्तरकालत्वं विकृतीनां प्राप्नोतीत्यूर्ध्वमेव कर्त्तव्या-

---

१. व्यक्तम्—क०।

२. 'वर्तत' नास्ति—क०।

३. तत्वादिति न—ख०।

४. दूर्ध्वं—क०।

मिक्षेति । पूर्वाधिकरणे [1]विकृतिकालनिरूपणस्य प्रस्तुतत्वात् सान्नाय्यादिविकृतीनां कालविशेषं दर्शयितुमिदं सूत्रमिति नात्र पूर्वपक्षे यतितव्यम् ॥ २५ ॥

[ ९–सोमविकाराणां दर्शपूर्णमासोत्तरकालताधिकरणम् ]

## तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥२६॥ सि०

आक्षिपति–**दर्शपूर्णमासोत्तरकालं सोमस्य काले चोद्यमाने विकृतीनामपि तदूर्ध्वकालता** पूर्ववत् **प्राप्नोत्येव । तस्मात् पूर्वाधिकरणेन सिद्धत्वान्नैवा**धिकरणान्तर**मारभ्यम्** । समाधत्ते—**प्रागपि दर्शपूर्णमासाभ्यां सोमः श्रूयते**—"सोमेन यक्ष्यमाणोऽग्निमादधीत" इति । **अनेन विशेषेण** पुनः **प्रस्तावो**ऽत्र कृतः । ननु पूर्वत्रापि "तदु समेव नयेत्" इत्यस्त्येव सान्नाय्यस्य प्रागपि सोमाद्वचनम् । सत्यम्, तत्रा[न्ना]स्तीति कृत्वा चिन्तितम् । **अत्र** तु सत्यपि प्रकृतेरुभयकालत्वे **किं गवादयो** विकृतयो दर्शपूर्णमासाभ्या**मूर्ध्व**मेव **भवन्त्युत प्रागपी**ति भवति **सम्प्रधारणा** । तत्र प्रकृतिव**दनियमे प्राप्ते उच्यते–नहि** किञ्चि**द्वचनमस्ति यत् प्राक्कालतां सोमस्य विदध्याद् दर्शपूर्णमासयोः,** [2]दर्शपूर्णमासाभ्यामित्यर्थः । नहि दर्शपूर्णमासाभ्यां प्राक् सोमः कर्त्तव्य इत्यस्ति वचनम् , यदतिदेशाद्विकृतीनामपि तत्कालत्वं स्यात् ।

---

१. प्रकृति–क० ।

२. दर्शपूर्णमासाभ्यामित्यर्थः । न तावद् दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत इति वचनं दर्शपूर्णमासप्राक्कालतां ज्योतिष्टोमस्य विधातुमर्हति, तस्य तयोर्ज्योतिष्टोमप्राक्कालताविधायकत्वात् । नापि "सोमेन यक्ष्यमाणोऽग्निमादधीत" इति वचनं विधत्ते, सोमयागस्याधानानन्तर्यविधायकत्वादस्य । नाप्यन्यत्किञ्चिद्वचनमस्ति, अश्रवणादिति भावः ।

अत्र चोदयति—किं तर्हि दर्शपूर्णमासप्राक्कालतायां ज्योतिष्टोमस्य प्रमाणम् ?

**कि**[1] तर्हि दर्शपूर्णमासात् प्राक्कालतायां ज्योतिष्टोमस्य प्रमाणम् ? उत्तरम्—**अर्थप्राप्त**स्तस्यासौ कालः । "सोमेन यक्ष्यमाणोऽग्निमादधीत" इत्याधानानन्तर्यवचनात्, अर्थाद्दर्शपूर्णमासाभ्यां प्राग्भावः सञ्जनितो न तु वाचनिकः । तथापि किमायातमित्याह—**न चार्थप्राप्तं चोदकः प्रापयति । अथोच्येत—आधाना-**

---

भवितव्यं च हि सोमपूर्वत्वपक्षे दर्शपूर्णमासप्राग्भाविना ज्योतिष्टोमेन । न च क्रमप्रमाणं विना क्रमः सिद्ध्यति । अतः किं तदिह, येन प्राक्कालः प्राप्त इति भावः । उत्तरम्—सत्यम्, अस्ति प्रापकं प्रमाणम्, तत्त्वर्थलक्षणम् । नहि श्रुतिरेवैका क्रमे प्रमाणमर्थादीनामपि भावात् । तेनार्थात् प्राप्तः सोमयागस्य दर्शपूर्णमासप्राक्कालः । [1]नाधानानन्तर्यं सोमेन यक्ष्यमाण इत्यनेन विहितं ज्योतिष्टोमस्याधानोत्तरकालभाविभ्यां दर्शपूर्णमासाभ्यां प्राक्कालत्वमन्तरेणोपपद्यत इत्येवं सामर्थ्यात्तस्य ताभ्यां प्राक्कालः प्राप्तः । तथापि किमायातमित्याह—न चार्थप्राप्तं दर्शपूर्णमासकाल [ मासपूर्वकालं ] प्रकृतेर्ज्योतिष्टोमाद्विकृतिं गवादिं चोदकः प्रापयति । ज्योतिष्टोमस्य हि दर्शपूर्णमासप्राक्कालोऽर्थप्राप्तोऽतिदेशेनैव विकृतिं प्रापणीयः । न च तमशब्दोपात्तं चोदकोऽतिदेष्टुमर्हति, शब्दोपात्तप्रकृतिधर्मस्य शब्देन विकृतिभिः सम्बन्धनीयत्वात् । न च यथा प्रकृतावुत्तरकालोऽर्थात् प्राप्नोति, तथातिदेशाद्विकृतिं प्राप्नोति, तथा प्राक्कालोऽपीति वक्तव्यम्, वाचनिकस्यैव ज्योतिष्टोमप्राक्कालस्य दर्शपूर्णमासगतस्य विकृतावतिदिष्टस्यान्यथानुपपत्तेरर्थाद्विकृतिषु उत्तरकालस्याक्षिप्यमाणत्वात् । न चैवं सति क्वचिदप्यार्थिकस्य विकृतिष्वप्राप्तिः, तास्वप्यर्थादेव प्राप्त्युपपत्तेः । अथोच्येत, मा नामार्थप्राप्तः; अत्रापि प्राक्कालो गवादिषु तत्सामर्थ्यादेव प्राप्नोतीति । एतद् दूषयति—एतदनन्तरकालत्वमप्यतिदेष्टुं न शक्यम् । कुतः ? आधानानन्तरकालः प्रकृत्या ज्योतिष्टोमेनावरुद्धो न सम्भवति विकृतेर्गवादेः । एतदेव व्यनक्ति—स हि कालो यद्वा प्रकृत्यावरोधनीयः,

1. नेति । उपपद्यते इत्यनेनान्वयः ।

१. कुतस्तर्हि—पू० मु० पाठः ।

**नन्तरं सोमस्य कालो वचनादेव** विहित इति विकृतिष्वपि तत्प्राप्तेरर्थादेव पूर्वकालत्वं भवत्विति। एतदपि **न शक्यम्**। कथम्? **प्रकृत्याऽऽधानोत्तरकालोऽवरुद्धः**। अतो **न सम्भवति विकृतेः**। **स हि यद्वा प्रकृत्यावरोध-**

---

यद्वा विकृत्या। अवरोधनीय इत्यनुवर्तते। (तत्र य इत्यनुवर्तते।) तत्र यदि विकृत्यावरोधनीयोऽनन्तरकाल इति कृत्वा प्रकृतिर्नावरुणद्धि तं कालम्। ततो विकृतेर्गवादेरङ्गतयानन्तरकालस्य प्रकृतितः प्राप्तिरेव नास्ति, प्रकृतावेवाविद्यमानत्वात्। दूरे पुनस्तत्सामर्थ्यात् तत्र दर्शपूर्णमासप्राक्कालप्राप्तिः। एतद्दोषपरिहारार्थं प्रकृत्यावरोधनीय इति कृत्वा प्रकृत्या चेदवरुद्धोऽनन्तरकालः, ततस्तत्सामर्थ्यादेवेतरासां विकृतीनां स कालो नास्ति, अनेकस्यैकानन्तर्यविरोधात्। तदभावे तत्सामर्थ्यान्न तत्र दर्शपूर्णमासप्राक्कालोऽस्तीति दर्शपूर्णमासाभ्यामुत्तरकाला एव गवादयो विकृतयः स्युरित्याशयः।

अनेन च समाधानग्रन्थेन विवक्षितार्थानुगुणतया साध्याहारोपस्कारमित्थं भाष्याणि नीतानि—तेषु गवादिषु सन्देहः सत्येव प्रकृतेर्ज्योतिष्टोमस्योभयकालत्वे किं दर्शपूर्णमासाभ्यां प्रागूर्ध्वं च ज्योतिष्टोमवत् प्रयोक्तव्याः, उतोर्ध्वमेव गवादयो विकृतय इति। तत्र प्रकृतिवदनियमे प्राप्ते सिद्धान्तः—ज्योतिष्टोमविकृतयो गवादयो दर्शपूर्णमासाभ्यामूर्ध्वमेव प्रयोक्तव्याः। कस्मात्? यतः "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति वचनेन ज्योतिष्टोमो दर्शपूर्णमासाभ्यामूर्ध्वं भवति यथा नेयं[नैवं] वचनेन स ताभ्यां पूर्वं भवति। कुतः? नहि किञ्चिद्वचनमस्ति यत् प्राक्कालतां सोमस्य विदध्याद् दर्शपूर्णमासयोः। किं तर्ह्यप्राप्तः प्राक्कालः। चोदकेन चैष धर्मो गवादिष्वप्येकाहेषु प्राप्नोति। न चार्थप्राप्तं चोदकः प्रापयति। एवं व्याख्याय चोदकेनैष धर्म इत्यादि भाष्यम्, अथोच्येतेत्यादिचोद्योत्तरत्वेनावृत्त्या व्याख्यातम्। एतदपि न शक्यम्, यतश्चोदकेनैष धर्म आधानानन्तर्यलक्षणो गवादिष्वप्येकाहेषु प्राप्नोति। स च प्रकृत्यावरुद्धो न सम्भवति विकृतेः। स हि यद्वा प्रकृत्यावरोधनीयो

**नीयः, यद्वा विकृत्या** । न तूभाभ्यामवरोद्धुं शक्यते । न ह्येकाधानानन्तर्यमुभयोः सम्भवति । **तत्र यदि प्रकृतिर्नावरुणद्धि ततो विकृतेः प्राप्तिरेव नास्ति** । नहि प्रकृतावविद्यमानं विकृतौ प्राप्नोति । **प्रकृत्या चेदवरुद्धः सामर्थ्यादिवेतरासां** विकृतीनां **नास्ति** । न ह्युभयोरानन्तर्यं सम्भवतीत्युक्तम् । **तस्मादु-**भयथा प्राग्भावासम्भवादूर्ध्वमेव **दर्शपूर्णमासाभ्यां गवादय इति सिद्धम्** ॥ २६ ॥

**इति महोपाध्यायश्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने**

**पञ्चमोऽध्यायः** ॥

---

यद्वा विकृत्येत्यादिनेति । इदानीं विवक्षिताधिकरणार्थोपसंहारपरतया तस्मादित्युपसंहारभाष्यं व्याचष्टे । तस्मादूर्ध्वमेव दर्शपूर्णमासयोर्गवादयो विकृतयोऽनुष्ठेया इति सिद्धम् । इति पाठान्तरम्—इति कपुस्तके दृश्यते ।



# पार्थसारथिमिश्रविरचिते

# तन्त्ररत्ने

## षष्ठोऽध्यायः



[ १. स्वर्गकामाधिकरणम् ]

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥१॥ पू०**

**औपोद्घातिकमेतदधिकरणम्।** अत्र हि **फलवत्त्वे** कर्मणाम**वगते** सति **क एतैः** कर्मभिरधिक्रियत इति युक्तो विचारः। **अफलवत्त्वे तु** कर्मणामधिकाराभावात् कस्यायमधिकार इति **विचारानुपपत्तिः**। अस्मिन् हि लक्षणे कस्य पुरुषस्य कर्मभिरधिकार इति चिन्त्यते। सति **चाधिकारे** कस्येति चिन्तयितुं शक्यते, नासति। फलवत्ताधीनश्चाधिकारः स्वाम्यपर्यायः[1]। नहि निष्फलो व्यापारः पुरुषस्य स्वं भवति। तेन लक्षणारम्भोपोद्घाततया फलवत्त्वमिह कर्मणां प्रतिपाद्यते।

यद्वा नैव सम्प्रत्युच्यमानाधिकारलक्षणमात्रोपयोग्ययं विचारः, किन्तु उक्तोच्यमानवक्तव्यसमस्तार्थोपयोग्ययम्। अस्मिन्नसति शास्त्रं हि सकलं शिथिलं

---

1. स्वाम्यपर्याय इति। "अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः" इति मनुः। अत्र च पुरुषव्यापारः स्वम्, तज्जन्यफलभागित्वं स्वाम्यम्, तद्वान् स्वामी, व्यापारेऽधिकारीत्यर्थः। फलभोक्तृत्वमधिकार इत्येतावन्मात्रविवक्षायां वैश्वानरेष्ट्यादौ पुत्रादेरधिकारप्रसङ्गः। अतः कर्तृत्वे सतीति विशेषणीयम्। कर्तृत्वमात्रमृत्विजामपीति भोक्तृत्वनिवेश इति द्रष्टव्यम्।

भवेत्। तद्दर्शयति—[1]**यदि चैवंकामशब्दैः फलमभिधीयते, ततो भावार्थाधिकरणे चिन्ता—किं भावशब्दाः फलसम्बन्धिन उत द्रव्यगुणशब्दा इति। ततोऽपूर्वचिन्ता,** भावार्थाधिकरणसिद्धकर्मफलसम्बन्धमूलो ह्यपूर्वसद्भावः, तस्य च कर्मभेदद्वारेण शब्दान्तरादिभिर्भेद इति द्वय्यप्यपूर्वचिन्ता द्वितीयेऽध्याये कृता फलवत्त्वमपेक्षते। अनेनैव तृतीयचतुर्थपञ्चमानामप्येतदपेक्षित्वं प्रदर्शितम्, सर्वेषां द्वैतीयभेदापेक्षित्वात्। अपि च फलवदङ्गत्वेनाफलं विनियुज्यते; सर्वेषां त्वफलत्वे न किञ्चित् क्वचिद् विनियुज्येत। विनियोगाभावे च प्रयुक्त्यभावः, तदभावाच्चक्र माभाव इति।

उत्तरषट्कोऽपि तदपेक्ष एवेत्याह—**ततोऽतिदेशः।** अतिदेश इति सर्वस्योत्तरषट्कस्य निर्देशः, सर्वस्यैतदधीनत्वात्। [1]**सप्तमाद्ये** तावदपूर्वप्रयुक्तिरपूर्वसद्भावमपेक्षते। तथापूर्वभेदे सति कुतश्चित् क्वचिदतिदेशः सिद्ध्यति। तदधीनाश्चोहबाधतन्त्रावापप्रसङ्गा इति सर्वेऽप्यपूर्वसिद्ध्यर्थमिहत्यं फलवत्त्वसाधनमपेक्षन्ते। प्रमाणमप्येतदपेक्षमेवेत्याह—[2]**फलसद्भावे च चोदनालक्षण इति विचारः।** धर्मे हि वेदस्य प्रामाण्यं प्रथमेऽध्याये चिन्तितम्। श्रेयःसाधनतया च[2] धर्मत्वम्। अतो यदि विधिशब्देन फलवत्त्वं व्यापारस्य चोद्यते, ततो वेदस्य

---

1. **यदि चैवंकामशब्दैरिति। एवङ्कामेति समासपदम्। स्वर्गकामः पशुकाम इत्यादिफलविशेषकामशब्दैरित्यर्थः। 'यदि च' इति स्थाने 'यदि वा' इति चेत् कोशेषु पाठो दृश्यते, स पाठः श्लिष्टः।**

2. **फलसद्भावे चेति। एतदनन्तरं (तद्विकाराच्) इति कुण्डलितः पाठो दृश्यते पु. मु. पुस्तके। स पाठः, 'एतद्विचारात्' इति संशोध्य, एतदधिकरणविचारात् फलसद्भावे सिद्ध एव चोदनालक्षण इति विचारः कर्तुं युक्त इत्येवं व्याख्येयः। तन्त्ररत्नेऽस्य पदस्यादर्शनादेषा कुण्डलनेति प्रतिभाति।**

१. सप्तमेऽध्याये–ख० ग०।

२. 'च' इति नास्ति–क०।

धर्मे प्रामाण्यविचारः प्रतितिष्ठति, इतरथा दुःस्थितः स्यादिति सकलशास्त्रोपयोगिफलवत्त्वमत्राधिकरणे प्रतिपाद्यते।

एवं सर्वशास्त्रोपयोगित्वेऽप्यस्मिन्नध्यायेऽधिकारविशेषनिरूपणार्थेऽधिकारसद्भावप्रसाधनेन फलवत्त्वप्रसाधनं साक्षादुपयुज्यत इत्यस्यैवाध्यायस्यादाविदमधिकरणमारभ्यते। सम्प्रत्यध्यायस्य सम्बन्धं दर्शयति—**अयमेवावसरो**[1]**ऽध्यायस्य।** कथमित्याशङ्क्यैवंरूपोऽसावध्याय इति तद्रूपमेव[1] तदवसरारम्भहेतुं दर्शयति—**भेदाभेदशेषशेषिप्रयोजकैवंक्रमयुक्तैः कर्मभिः कोऽधिक्रियत इत्येवं**रूपस्य **विचारस्यात्रा**ध्याये क्रियमाणस्या**यमेव** पञ्चमानन्तरकालो**ऽवसरः।** शक्त्यपेक्षो ह्यधिकारः, शक्तिश्च विषयाधीननिरूपणा, विषयश्च तस्या द्वितीयतृतीयचतुर्थपञ्चमैरुत्पत्तिविनियोगप्रयोगविषयैः प्रतिपादितोऽनुष्ठेयवर्ग इति तदुत्तरकालमधिकारनिरूपणमारभ्यते। प्रमाणलक्षणापेक्षा तु सर्वेषामविशिष्टेति न ततः प्रागारम्भः शङ्कितव्यः। उत्तरषट्कात् पूर्वभावस्तूपदेशात्मकत्वादेव स्पष्ट इत्ययमेवास्यावसरः। न चावसरशब्दश्रवणादवसरलक्षणोऽस्य सम्बन्धो न तु हेतुहेतुमद्भाव इति भ्रमितव्यम्, यथोक्तेन न्यायेन हेतुहेतुमद्भावस्यैव[2] स्पष्टत्वात्। उक्तं च—

---

1. तद्रूपमेवेति। षष्ठाध्यायस्वरूपमेवाध्यायपञ्चकनिरूपणानन्तरकालरूपेऽवसरे षष्ठाध्यायस्यारम्भहेतुं दर्शयतीत्यर्थः।

2. अत्र च प्रभावल्यां श्रीशम्भुभट्टदर्शितदिशा पञ्चमाध्यायषष्ठाध्याययोरवसरसंगतिसंभवेऽपि तस्या हेतुहेतुमद्भावज्ञानसापेक्षत्वाद् हेतुहेतुमद्भावसंगतेरेव च प्रमाणलक्षणसहितोत्पत्तिविनियोगप्रयोगविधिनिरूपणपरपञ्चाध्याय्यात्मकबहुतरग्रन्थविषयाया अवश्यवक्तव्यत्वाच्च सैवोक्तेति ध्येयम्। अतश्च शम्भुभट्टोक्तं दूषणमलग्नकमेव।

१. सरारम्भ–ख०।

भारो यो येन वोढव्यः स प्रागातोलितो यदि ।
तदा कस्तस्य वोढेति युक्तं कर्तृनिरूपणम्[1] ॥

'कार्ये ज्ञातेऽधिकारः स्यात्' इति च ।

न चैकत्रैकोऽध्यायो हेतुर्भवति, न तु बहव इति राजाज्ञास्ति । पूर्वषट्कस्येवोपदेशनिरूपणात्मनैकीभूतस्योत्तरषट्कं प्रति, पञ्चाध्याय्याः कार्यवर्गनिरूपणरूपेणैकीभूताया अधिकारनिरूपणं प्रति हेतुभावसम्भवात् । किञ्च, एकस्याप्य[१]ध्यायस्य नानानयनिकायात्मनः कार्यैक्याधीनमेवैक्यम् । तदध्यायसङ्घस्याप्यविशिष्टमिति यत्किञ्चिदेतत् । किमिति तर्हि भाष्यकारेण सम्बन्धो न[२] कथ्यते ? स्पष्टत्वात् । तिर्यगधिकरणे हि यथानुष्ठेयवर्गमधिकारः स्थास्यतीति तेनैवानुष्ठेयवर्गप्रतिपादकस्याध्यायपञ्चकस्याधिकारनिरूपणस्य च हेतुहेतुमद्भावः स्पष्ट इति न कण्ठेनोच्यते इत्यनवद्यम् ।

यस्त्वाह[2]—नात्र हेतुहेतुमद्भावः सम्भवति । तथाहि—प्रमाणलक्षणप्रतिपादितं तावदनपेक्षत्वं[3] नाधिकारं प्रति हेतुः, सापेक्षेऽपि शब्दे 'देवदत्त गामभ्याज' इत्यादावधिकारदर्शनात् । भेदलक्षणमपि न हेतुः, असत्यपि भेदे शब्दतोऽधिकारावगतेः । विनियोगलक्षणं त्वधिकारापेक्षमेव, ग्राहकपूर्वत्वाद्विनियोगस्येति न

---

1. "भारो यो येन वोढव्यः स प्रागवगतो यथा । तथा कृत्स्नस्य वोढेति शक्यं कर्तृनिरूपणम् ॥" इति मयूखमालिकायां श्रीसोमनाथधृतः पाठः । प्रभावल्यां श्रीशम्भुभट्टधृतस्तु—"भारो येन हि वोढव्यः स प्रागान्दोलितो यदि । तदा कस्तस्य वोढेति युक्तं कर्तृनिरूपणम् ॥" इति ।
2. यस्त्वित्ति प्रभाकरमिश्रः ।
3. 'अजन्यत्वलक्षणमनपेक्षत्वं प्रमाणहेतुत्वेनोक्तम्' इति क० टिप्पणी प्रतिभाति ।

१. 'अपि' नास्ति—क० ।

२. नु—ख० ।

तस्याधिकारं प्रति हेतुभावसम्भवः। तथा साधिकारस्यैव विधेः प्रयोजकत्वात् तद्व्यापारनिरूपणार्थयोश्चतुर्थपञ्चमयोरप्यधिकारापेक्षत्वान्नाधिकारहेतुत्वमिति। स नूनमेतदाद्यमधिकरणमधिकारलक्षणोपोद्घातभूतमधिकारलक्षणं सकलं मन्यते। अन्यथा कथमशून्यमतिरधिकारलक्षणापेक्षतां विनियोगलक्षणादीनां वदेत्। नह्यधिकारविशेषनिरूपणापेक्षा तेषामस्ति सत्यप्येतदधिकरणप्रतिपाद्याधिकारसद्भावमात्रापेक्षत्वे। न चायमेव लक्षणार्थः, उपोद्घातमात्रत्वात्। सत्यपि चास्याप्यध्यायार्थत्वे[1] तिर्यगधिकरणप्रभृतेर्यो विचारः प्रवर्तिष्यते कस्य कुत्राधिकार इति, सोऽपि तावद्ब्रूयान् लक्षणार्थ एव। स च पञ्चाध्यायीविषयकार्यवर्गनिरूपणाधीन इत्युक्तम्। यदपि प्रमाणलक्षणानपेक्षत्वसिद्ध्यर्थमुक्तं सापेक्षेऽपि शब्दे शब्दादधिकारः[2] प्रतीयत इति, तदतिमन्दम्। भेदलक्षणादिष्वपि तच्छक्यते वक्तुम्, सापेक्षेऽपि शब्दे लोके ओदनकामः पचेत् काष्ठान्याहरेदित्यादिषु[3] भेदविनियोगप्रयोगक्रमप्रतीतिदर्शनात्, इदं दधिघृतम्, इमे शालयः, देवदत्तो भोज्यताम्, देवदत्तवद् यज्ञदत्त इत्यादावतिदेशदर्शनाच्च सकलस्यापि शास्त्रस्य [4]प्रमाणलक्षणापेक्षा नास्तीति। [5]**अथ त्वसति** प्रमाणत्वे सर्वमिदमनिश्चितं स्यादित्युच्यते, तदधिकारेऽपि समानमित्यलमनेन।

अत्र भाष्यकारेण—"स्वर्गकामो यजेत" इत्यत्र **किं स्वर्गो गुणतः कर्म प्रधानत** इति संशयोपन्यासः कृतः। गुणतः प्रधानत इति प्रथमान्ते पदे सार्वविभक्तिकस्तसिः। तदनुभाष्याक्षिपति—**अयुक्तमिदं** भाष्यम्। कुतः? **स्वर्गशब्दो यद्याख्यातेन** गुणत्वेन प्रधानत्वेन वा **सम्बध्यते,** ततो **न कामपदेन** सम्बन्धुमर्हति। **अथ कामपदेन, न तर्ह्याख्यातेन** सम्बध्यते। नह्येकमुभा-

---

१. 'अपि' नास्ति–क०।

२. शब्दाधिकारः–क०।

३. हरेत्यादिषु–क०।

४. अप्रमाण–ख०।

५. अथवा सति–क०।

भ्यां सम्बन्धुमर्हति । विशेषतस्तु स्वर्गशब्दस्य कामपदेन समस्तस्याप्रधानस्य सतः पदान्तरसम्बन्धो न युक्तः । नह्यसमर्थस्य समासो भवति । न चास्योपसर्जनभूतस्याख्यातापेक्षस्य व्यपेक्षालक्षणं सामर्थ्यमस्ति । नापि कामपदेनैकार्थ्यमाख्यातेन सम्बध्यमानस्यास्तीति द्विविधसामर्थ्याभावाद् दुर्लभः समासः स्यात् । तस्मात् कामपदसम्बन्धाद् नास्याख्यातसम्बन्धः[१] ।

अथाख्यातसम्बन्धित्वमेव कस्मान्न भवति ? अत आह—**कामपदेन स्वपदोपात्तेन श्रुत्यास्य सम्बन्धः, आख्यातेन पदान्तरोपात्तत्वाद्वाक्येन**[1] । **श्रुतिश्च वाक्याद्बलीयसी । तस्मात् स्वर्गशब्दः** कामपदोपात्तपुरुषविशेषणत्वेनोपक्षीणत्वाद् **नान्येनाख्यातेन सम्बन्धुमर्हति** । अत्रैव दृष्टान्तमाह—**यथा** "राजा राजसूयेन यजेत" इत्यत्र **राजजातिविशिष्टः कर्त्ता** राजसूयस्य साधनं **विधीयते, राजसूयो वा** तदर्थत्वेनेत्यनास्थावादः, सर्वथा **राजजातिर्न साध्या नापि साधनम् । एवं न स्वर्गः साध्यः**[२] साधनं वा । ननु जातिरपि शब्दाभिहितारुणान्यायेन क्रियासाधनमेव । क्रियायामङ्गं प्रधानं वा भवितुमर्हति । **तस्मात् स्वर्गेच्छाविशिष्टः कर्त्ता कर्मसम्बन्धी** न तु स्वर्गः ।

एकग्रन्थेनाह—**एवं चेत् संशयानुपपत्तिः** । सति हि सम्बन्धे गुणत्वेन प्रधानत्वेन वा सम्बन्ध इति संशयः स्यात् ; असति तु सम्बन्धे न युक्तस्तद्वि-[३] शेषविचार इति । अथ पुरुषयागयोरेवायं गुणप्रधानभावो विचार्यते; तस्य तु फलभूतः स्वर्गयागयोर्गुणप्रधानभाव उपन्यस्तः, न वचनव्यक्तित्वेनेत्युच्यते, तदपि सिद्धान्तवचनव्यत्ययसम्भवेन प्रतिक्षिपति—**किञ्च यजेत स्वर्गकाम**

---

1. वाक्येनेति । 'वाक्यम्' इति प्रथमान्तो मूलपाठः पुण्य॰मुद्रितो न साधुः, पूर्ववाक्ये 'श्रुत्या' इति तृतीयान्तेन प्रक्रमात् ।

१. 'अस्य' नास्ति—क॰ ।

२. 'साध्यः' नास्ति—ख॰ ।

३. ततो वि—क॰ ।

इति पदद्वयस्य **सामानाधिकरण्याद् यागगुणभूत** एव **कर्त्ता** कामपदेन **निर्दिश्यते** न प्रधानभूतः। **यथा देवदत्तः पचतीत्यत्र न देवदत्तार्थः पाकः,** देवदत्त एव पाकार्थः, **एवमिहाप्यत्यन्तगुणभूत एव कर्त्ता प्रतीयते।** [1]आख्यातसामानाधिकरण्यं हि तदुपात्तकर्तृसंख्यापरिच्छेद्यत्वयोग्यकर्तृविशेष-सम्पर्कतया [समर्पकतया] भवति नान्यथा। कर्त्ता च क्रियासाधनतया तां प्रति गुणभूत इति न प्राधान्यं सम्भवतीति।

तत्रानन्तरोक्तमाक्षेपं समाधत्ते—**उच्यते। नायमेकान्तो यत्प्रथमान्तं गुणभूतमेव** भवतीति; किन्तु **प्रधानमपि भवति क्रियायां यथा—मलिनः स्नायात्**[2], क्षुधितोऽश्नीयादिति। अत्र हि मलिनार्थं स्नानम्। एवमिहापि स्वर्गकामार्थता यागस्य नानुपपन्नेति न सिद्धान्तानुपपत्तिः। एवं च फलतः स्वर्ग-यागयोर्मिथो गुणप्रधानभावः प्रथमस्य[3] समाधानम्। **संशयोऽपि युक्त एव।** तत्र हेतुं भाष्यव्याख्यया दर्शयति।

भाष्यकारेण—किं स्वर्गो गुणतः कर्म प्रधानतः, उत कर्म गुणतः स्वर्गः प्रधानत इति विचार्यते। तत्सिद्ध्यर्थं यदि स्वर्गकामस्य पुरुषस्य यागः कर्त्तव्यतया भाव्यतया चोद्यते इत्यादिना यागपुरुषयोर्गुणप्रधानभावविचारो

---

1. मीमांसकमते आख्यातस्य कर्तृवाचकत्वं नास्तीति कथं स्वर्गकामपदस्य तेनाख्यातेनैकार्थवृत्तित्वरूपं सामानाधिकरण्यमित्याशङ्क्याह—सामाना-धिकरण्यं हीत्यादि। भावनावाचिनाप्याख्यातेनाक्षेपेण लक्षणया वा कर्त्ता प्रतिपाद्यत एव। अतश्चोपपद्यत एव यथोक्तं सामानाधिकरण्यं तस्येति पर्यवसितो भावः।

2. मलिनः स्नायादिति। अत्र टीकास्थ इतिशब्दः प्रकारवाची, एवंप्रका-रमित्यर्थः। तमेव प्रकारं दर्शयति—क्षुधित इति।

3. स्वर्गयागयोर्मिथः संबन्ध एव नास्तीति स्वर्गस्य गुणत्वं प्रधानत्वं वेति विशेषविचारो न युक्त इति यः प्रथम आक्षेपस्तस्येत्यर्थः।

द्वारं[1] यागस्य स्वर्गस्य वास्यां भावनायां भाव्यतेति विचारे दर्शितः। तदर्थं च स्वर्गशब्दस्य द्रव्यवाचित्वं प्रीतिवाचित्वं वेति विचारितम्। तत्र यथैषामुत्तरोत्तरस्य पूर्वपूर्वं प्रति हेतुत्वं भवति, तद्दर्शयति—[2]**पदेतरार्धेऽवगते** स्वर्गकामपदस्येतरार्द्धे स्वर्गशब्देऽवगते, **पदार्थोऽवधार्यते, तदुत्तरकालं वाक्यार्थ इति। तत्र यदि स्वर्गशब्देन द्रव्यमभिधीयते, ततोऽसौ** पुरुषः **साधनत्वेन** व्रीह्यादिवत् स्वर्गं[१] द्रव्यं **कामयमानः** स्वर्गकामशब्देनाभिहितो **यागे साधनांशेनैव** निर्वर्तकत्वेन गुणभूत एव **सम्बध्यते,** द्रव्यस्य स्वभावतः[२] कर्म प्रति गुणभावात्। स्वर्गस्य द्रव्यत्वे साधनत्वेनैव [3]तत्काम्यत इति न तस्य भाव्यत्वसम्भवः। याग एव तदा भाव्यो भवति। तदा च यागं प्रति पुरुषोऽपि स्वर्गकामशब्देन साधनभूतं स्वर्गाख्यं द्रव्यं कामयमानो गुणत्वेनैव समर्प्यते। ततश्च स्वर्गोऽपि साधनतया[३] काम्यमानो[४] गुणभूत एव विशेषणपरेण स्वर्गकामपदेन विनियुज्यते।

---

1. विचारो द्वारमिति। विचारो भाव्यतेति विचारे द्वारतया दर्शित इत्युत्तरेणान्वयः।
2. पदेतरार्धे इति । स्वर्गकाम इति समासपद उपसर्जनं यदितरदर्धं स्वर्गेति भागः, तस्मिन्नर्थतोऽवगते स्वर्गकामपदार्थोऽवधार्यत इत्यर्थः। 'पदेतरार्थे' इति पूनामुद्रितपाठस्त्वशुद्धोऽनवधानापतितः। एवमेवोत्तरत्रापि पदपदेतरार्धवाक्यानि निर्णेतव्यानीति मूलग्रन्थे स्वर्गकामपद-तदितरार्धस्वर्गपद-स्वर्गकामो यजेतेतिवाक्यान्यर्थतो न निर्णीतानीत्यर्थके 'पदे पदेतरार्थवाक्यानि' इति पूनामुद्रणमसङ्गतमिति द्रष्टव्यम्।
3. तदिति स्वर्गरूपं द्रव्यमित्यर्थः। अतस्तदिति नपुंसकमुपपन्नम्।

१. 'तत्' अधिकं—ख० ग०।

२. स्वर्गभावतः—क०।

३. न काम्यमानः—ख०।

४. काम्यमाने—क०।

**अथास्य प्रीतिरभिधेया, ततस्तामात्मसम्बन्धित्वेन** साध्यभूतां **कामयमानः स्वर्गकामशब्देनाभिधीयते। तदुत्तरकालं यागेन सम्बध्यमानः साध्यांशेनैव** प्राधान्येनैव **सम्बध्यते, यागस्तु** तं प्रति **गुणभूतः**। प्रीतिर्हि पुरुषार्थत्वात् क्रियासाधनत्वाभावाच्च भाव्यतयैव काम्यते। अतश्च स्वर्गकामो यजेतेति भाव्यभूतं स्वर्गं प्रार्थयमानस्य पुरुषस्य भावनां प्रत्ययेनानूद्य यागानुरागस्तस्या विधीयते—यत् स्वर्गकामो व्याप्रियते तद् यजेत; यागानुरक्तस्तद्व्यापारः स्यादित्यर्थः। ततश्च स्वर्गकामपुरुषशेषभूतव्यापारानुवादेन तदनुरञ्जकत्वेन विधीयमानो यागस्तं प्रति गुणो भवति। तद्गुणभावश्च तत्प्रार्थितफलजनकतयेति स्वर्गस्य यागं प्रति प्राधान्यं यागस्य च गुणत्वं विशेषणपरत्वं च विशेषणपरेण स्वर्गकामपदेन प्रदर्शितं भवति।

उपसंहरति—**एवं द्विप्रकारायां** साधनगोचरतया साध्यगोचरतया च **कामनाया**मुपात्तायामुपप्लवमानः किं **स्वर्गो गुणभूतोऽथ प्रधानभूत इत्युपपन्नः संशयः**। कथमुपपन्न इत्यपेक्षायां पूर्वोक्तमेवार्थं संक्षिप्य दर्शयति—**पदपदेतरार्द्धवाक्यानि निर्णेतव्यानि** सन्दिग्धानि न तु निर्णीतानि। नहि पदार्द्धस्य प्रीतिद्रव्ययोरन्यतरद्वाच्यं निर्णीतम्। अत एव स्वर्गकामपदस्यापि किं साधनकामः साध्यकामो वेति न निर्णीतम्। अत एव वाक्यार्थोऽपि किं यागार्थः स्वर्गकामः स्वर्गकामार्थो वा याग इति न निर्णीतः। तत्संदेहादेव स्वर्गयागयोरपि गुणप्रधानभावः सन्दिग्ध इति। यत्तु राजजातिवत् स्वर्गः कर्तृविशेषणत्वान्न यागं प्रति स्वयं गुणतः प्रधानतो वा [1]भवतीत्युक्तम्, तत्राह—**राजजात्यापि न सादृश्यं** स्वर्गस्य। कुतः? **नहि कामयोगिनी जातिः**। जातिर्हि स्वरूपेणैव कर्त्तारमवच्छिनत्ति, स्वर्गस्तु कामनामुखेन। काम्यमानता च स्वयमपि क्रियासम्बन्धिनो व्रीह्यादिवदुपपन्नेति वैषम्यम्।

अत्र येयं चिन्ता किं प्रीतिमद् द्रव्यं स्वर्गः, उत प्रीतिमात्रमिति सा स्वर्ग-

---

१. **संभवति—ख० ग०।**

कामोदाहरणमात्रपर्यवसायिनी पूर्वपक्षमात्रोपयोगिनी च मन्तव्या, पशुकाम इत्यादौ द्रव्यवचनत्वस्य[1] निर्विवादत्वात् । ततः सर्वव्यापित्वेन प्रथमं तावदेवं चिन्तयितव्यम्—किं स्वर्गकामः पशुकाम इत्यादौ स्वर्गादयः क्रियां प्रति शेषत्वेन विधीयन्ते, उत तान् प्रधानभूतान् प्रति क्रियैव शेषत्वेन विधीयत इति । अयं च वाक्यतात्पर्यसंशयः । स्वर्गकामादिशब्दा हि पुरुषवचनतया पुरुषस्यैव क्रियासम्बन्धं प्रतिपादयन्तोऽपि न तत्पराः, किन्तु तदनुवादेव लोहितोष्णीषादिवद् विशेषणान्वयपरा इत्येकादशाद्ये भाष्यकारो व्यक्तं वक्ष्यति । विशेषणानामपि न निमित्ततयान्वय इत्यत्रैव द्वितीये पादे वक्ष्यते । परिशेष्यात् किं स्वर्गादीनां गुणत्वेनान्वयः क्रियया, किं वा प्रधानत्वेनेत्येतावानत्र विचारः ।

तत्सिद्ध्यर्थमिदं विचारयितव्यम्—किं स्वर्गकामादेः पुरुषस्य योऽत्र क्रियासम्बन्धोऽनूद्यते, स गुणभाव उत प्रधानभाव इति । तत्र यदि क्रियाक्षेपादेव यत्किञ्चिद् द्रव्यं साधनत्वेन कामयमानस्य पुरुषस्य क्रियां प्रति गुणभूतस्य कर्तुः प्राप्तत्वात्तदनुवादेन विशेषणं विधीयते—यः क्रियां प्रति यत्किञ्चिद् द्रव्यं साधनतया कामयमानः स्वर्गं साधनत्वेन कामयमानः कुर्यात्, स्वर्गेण कुर्यादिति यावत्, ततः स्वर्गो गुणतः, कर्म प्रधानतो भवति । अथ त्वपुरुषार्थस्य यागस्य साध्यत्वायोगात् तद्बलेनैव यत्किञ्चित्फलं कामयमानं पुरुषं प्रति समभिलषितफलसाधनोपकारेण कर्मणः शेषत्वे पुरुषस्य प्राधान्येऽवगते तदनुवादेन स्वर्गादिफलं स्वर्गकामादिपदेन नियम्यते । यः क्रियां यत्किञ्चित्फलं साध्यभूतमभिलाषुकः[1] पुरुषस्तत्सिध्यर्थं कुर्यात् [2]स स्वर्गकामः स्वर्गं साध्यत्वेन कामयमानः, स्वर्ग एवात्र साध्य इति यावत् । ततः कर्म गुणतः स्वर्गः प्रधानतो भवति । यत एव स्वर्गकामादिना

---

1. साध्यभूतमभिलाषुक इति । अत्र 'न लोकाव्यय' इत्यादिना निषेधात् षष्ठी न भवति ।

१. वचनस्य—ग० ।

२. 'स' नास्ति—क० ।

पुरुषप्रतिपादकेनैव शब्देन पुरुषविशेषणस्यैव स्वर्गादेस्तात्पर्यतः क्रियान्वयो बोध्यते, न तु स्वर्गशब्देनैव कामपदं विहायाख्यातेन [1]स्वर्गादि सम्बध्यते, अत एव यदुक्तम्—स्वर्गशब्दस्य श्रुत्या कामपदेन सम्बन्धः, आख्यातसम्बन्धस्तु वाक्येन दुर्बलः। असमर्थश्च[2] स्वर्गशब्दः कामशब्देन समासं न लभेतेति, तत्परिहृतं भवतीति।

तत्सिद्ध्यर्थं चेदं विचार्यते—किं यजेतेत्यत्र करोत्यर्थे स्वर्गादिः कामः कर्त्तव्यतया सम्बध्यते, भाव्यतयेति यावत्, किं वा याग इति। यदि यागः, ततस्तस्य दुःखरूपस्य पुरुषार्थत्वायोगात्तमेव प्रति पुरुषः शेषो भवति। यदि स्वर्गः, ततस्तमात्मार्थं प्रार्थयमानस्य पुरुषस्य तत्कर्मिकां भावनामनूद्य यागस्तस्योपायत्वेन विधीयमानः पुरुषशेषो भवति। आत्मार्थं हि प्रार्थ्यमानं फलं प्रति यः पुरुषस्य व्यापारः सोऽप्यात्मार्थ एव। अतस्तदनुवादेन[3] विधीयमानो यागोऽपि पुरुषशेषो भवतीति।

एवं सर्वव्यापिनि विचारे दर्शिते चोद्यमिदमापतति—ननु स्वर्गकामोदाहरणे नैवं सम्भवति, स्वर्गस्य प्रीतिरूपस्य क्रियासाधनत्वायोगात्। साध्यत्वमेव तस्य स्पष्टम्। अतस्तत्र पूर्वपक्षासम्भवात् संशयानुपपत्तिरिति। तत्समाधित्सया चिन्तितम्—स्वर्गशब्दः किं द्रव्यवचनः, किंवा प्रीतिमात्रवचन इति। ततश्च पूर्वपक्षवादिमते तस्यापि पश्वादिशब्दवद् द्रव्यवाचित्वात् साधनविधानं नानुपपन्नमिति भावः। इदमपि चात्र चिन्तनीयम्—किं विधिर्विधेयस्य पुरुषार्थतां बोधयति न वेति। बोधयति चेत्, कामानां प्राधान्यम्; नो चेत्, गुणत्वमिति।

यस्तु[1] पृष्ठीकृत्य भाष्यं स्वप्रज्ञाविलसितं प्रकाशयन् पुरुषपरत्वमेव स्वर्ग-

1. यस्त्विति प्रभाकरमिश्रः।

१. स्वर्गादिः—क०।

२. 'च' नास्ति—ग०।

३. मतनूधस्तदनु—ख०।

कामादिशब्दानामङ्गीकृत्य, किं नियोज्यसमर्पकास्ते[1] किं वा कर्तृसमर्पका इति विचारं वर्णयति, स वक्तव्यः—कोऽयं कार्यवाक्यार्थपक्षे कर्तृव्यतिरिक्तो नियोज्यो नामेति? यः कार्यमात्मीयं बुद्ध्यते स नियोज्य इति यदि ब्रूयात्, प्रतिब्रूयादेनम्—कथमेवंभूतस्य स्वर्गकामादिशब्देन कार्यान्वयो बोध्यत इति। स यदि ब्रूयात्—स्वर्गकामस्येदं कार्यमित्येवास्यान्वयप्रतिपादनम्। एवंभूतेऽन्वये प्रतिपादिते हि ममेदं कार्यमिति स्वर्गकामो बुद्ध्यत इति। प्रतिब्रूयादेनम्—स्वर्गकामस्येदं कार्यमिति कोऽर्थः? स्वर्गकामकृत्या व्याप्यमित्यर्थः। अहो बत भवानतिनिपुणम्मन्योऽपि प्रमाद्यति, कर्त्रतिरेकेण हि भवता नियोज्यो दर्शयितुमुपक्रान्तः, स चेदानीं कर्त्तैव [ कर्तैव ] सञ्जातः। तत्कृतिव्याप्यत्वमेव हि कार्यस्य तत्कर्तृकत्वं नान्यत्। ततश्च स्वर्गकामकृतिव्याप्यता चेत्कार्यस्योच्यते, तत्कर्तृकत्वमेव[2] तर्हि तदिति न कर्त्रन्यो नियोज्यः सिध्यति। यद्युच्येत—विषयभेदादनयोर्भेदः। क्रियान्वयो हि कर्तृत्वम्, तदतिरिक्तं [ क्तः ] तु विध्यर्थे क्रियातिरिक्तकार्यरूपं प्रति नियोज्यान्वय इति। तदयुक्तम्। न खल्वद्यापि क्रियातिरिक्तं कार्यं सिद्धम्, यद् विषयभेदाद् भेदः स्यात्। सिद्धे ह्यस्मिन्नधिकरणे कर्त्रतिरिक्ते नियोज्ये तदन्वयबलादेवापूर्वाधिकरणे[2] क्रियातिरिक्तकार्यसिद्धिः, प्राक्त्वेतस्मान्न तत्सिद्धमिति न विषयभेदाद् भेदः सम्भवति। लोके च तदभावाद् नियोज्यत्वं देवदत्त गामानय इत्यादौ सम्बोधनविभक्तावपि सत्यां देवदत्तादीनां न स्यात्।

अथ शेषित्वेनान्वयो नियोज्यत्वम्, शेषतयान्वयस्तु[3] कर्तृत्वमित्युच्यते, युक्तमेतत्। किन्त्विदं वक्तुं[4] भवतोऽनुचितम्, विध्यर्थस्य भवतः[5] सर्वप्रधानाभिमतस्य गुणभावापत्तेः। यदि नियोज्यस्य शेषित्वं ततो विध्यर्थस्य नियोज्यं प्रति शेषत्वाद् 'नियोगसिद्धौ सर्वं तदनुगुणम्' इति रिक्तार्थं वचः स्यात्। यच्चात्र

---

१. 'ते' नास्ति—ख०। २. कर्तृत्व—क०।
३. तत्सिद्धमिति ( विषय ) उच्यते—ख०। ४. भवतो वक्तुम्—ग०।
५. भगवतः—क०।

किञ्चित् प्रलप्यते तत्सर्वं न्यायरत्नमालायामेव विस्तरेण निरस्तमित्यलमनेन।

प्रस्तुतं व्याख्यायते—**द्विप्रकारश्चात्र पूर्वः पक्षः**। तत्रैकस्तावत् पूर्वोक्त एव साधनत्वेन स्वर्गादिविधानमिति। द्वितीयं पक्षमाह—**स्वर्गेच्छाविशिष्टस्य [१]यागे कर्तृता, अतद्विशिष्टेन यागो न कार्यः, यथा राजजातिविशिष्टेन राजसूयः कार्यो नातद्विशिष्टेन** ब्राह्मणादिना, **तद्वदत्रापि**। एकग्रन्थेनाह—**एवं चेन्नावश्यमुपादेयं प्रीतिमद् द्रव्यं** क्रियासाधनतया। किं तर्हि? **तद्विषया त्विच्छा** स्वयंजातोदाररूपा[1] प्रसुप्ततनुविच्छिन्नेच्छान् पुरुषान् व्युदस्यन्ती कर्तृविशेषणत्वेन यागस्याङ्गं सती अदृष्टेन द्वारेण **यागस्योपकरिष्यति,** यथा राजजातिः। नन्वयं पक्षो [२]भाष्यकारेण नोक्तः? अत आह—**अथाप्यदृष्टेन तथापि न दोष इत्यस्माद् ग्रन्थादयं द्वितीयः पक्षोऽनुमीयते**। [३]पूर्वपक्षे हि भाष्यकारेण क्रियासाधनस्य पुरुषस्य क्रियाक्षेपादेव साधनभूतद्रव्येच्छा प्राप्ता स्वर्गाख्यद्रव्यविषयतया नियम्यते। सा च दृष्टेनैव साधनोपादानोपकारेण क्रियाक्षेपात् प्राप्ता तादृश्येव स्वर्गे नियता तं साधनतयोपादापयति। तदनेन प्रकारेण स्वर्गस्य साधनत्वमत्र विधीयते, कामशब्देन तु प्रकृत्यर्थभूता कामना प्रत्ययार्थश्च कर्तानूद्यते।

'तत्र दृष्टार्थत्वं विधेर्भवति लाघवं च, नियममात्रविधानात्, इत्युक्त्वा, उक्तम्—अथाप्यदृष्टेन [४]द्वारेण कामना[५] यागस्योपकुर्यात् तथाप्यस्मत्पक्षस्याविरोधः, सर्वथा निष्फलत्वसिद्धेः। अस्मिंश्च पक्षे कामनापि क्रियाङ्गतया विधीयते, पुरुष-

---

1. सन्ति पञ्च क्लेशा अविद्यास्मितारागादयः। ते च प्रत्येकं प्रसुप्ततनुविच्छिन्नोदाररूपेण चतुर्विधाः (योगसूत्रम् २. ४)। तत्र स्वर्गकाम इत्यत्र कामपदेन उदारावस्थो राग उच्यते। तस्य च कर्तृविशेषपरिच्छेदद्वारा यागाङ्गत्वमिति भावः। अत्र दीर्घकालं शक्तिरूपेणावस्थानं प्रसुप्तिः, प्रतिबन्धाक्षमता तानवम्, विच्छिद्य विच्छिद्य पुनरुद्भवो विच्छेद इत्यन्यदेतत्।

१. यागकर्तृता—क०। २. न भाष्योक्तः—ख० ग०।
३. पूर्वपक्षान्ते हि—ख० ग०। ४. तद्द्वारेण—क०।
५. अकामयागस्य—ख०।

मात्रं त्वनूद्यते। न चास्मिन् पक्षे स्वर्गशब्दस्य प्रीतिवाचित्वं चिन्तयितव्यम्, उभयथापि तद्विषयायाः कामनायाः क्रियाङ्गत्वसम्भवात्। अभ्युपेत्यवादमात्रं चैतत्। पूर्व एव तु पक्षः श्रेयान्, दृष्टार्थत्वाल्लाघवाच्चेत्युक्तम्। तथा चाथाप्य-दृष्टेनेत्यपिशब्दं प्रयुञ्जानेन भाष्यकारेणोपदर्शितमिति।

सम्प्रति पूर्वपक्षस्य युक्तिमाह—**शब्दवस्तुभ्यां च पूर्वः पक्षः**, श्रुतिलिङ्गा-भ्यामित्यर्थः। **कथम्? तत्र** श्रुतिं तावद्दर्शयति—**यजेतेति प्रत्ययः** क्रियावचनो **यस्यव** धातोः **परः श्रूयते, तस्यैव** यागस्य समानपदश्रुत्या **कर्त्तव्यतामाह**। कामस्य तु पदान्तरोपात्तस्य वाक्येन भाव्यता स्यात्, तच्च दुर्बलं श्रुतेः। तस्मा-च्छ्रुत्या यागस्यैव भाव्यता। लिङ्गं दर्शयति—**अपि चानिष्पन्नत्वाद्यागस्य भाव्यत्वम्। यच्च भाव्यं तत् कर्त्तव्यतां** क्रियाकर्मतामेव **प्रतिपद्यते, न** करणताम्, नह्यसतः साधनत्वं भवति। **यद्धि निष्पन्नं तदेव करणत्वं प्रतिपत्तुं शक्नोति दात्रादि**। तेन वस्तुसामर्थ्यात् कर्मैव यागो न तु करणम्, असामर्थ्यात्। नन्वनिष्पन्नमपि यागादि **निष्पादितं**[1] सच्छक्नोत्येव करणभावमनु-भवितुम्? न, अदर्शनाद् व्यापारद्वयस्य। व्यापारद्वयसम्बन्धप्रभाविते हि कर्मत्व-करणत्वे। न चात्र पुरुषस्य व्यापारद्वयं दृश्यते, यदेकत्र कर्मत्वमन्यत्र करणत्वं च यागस्य स्यात्। एक एव हि यागविषयः पुरुषव्यापारो दृश्यते, न तु तत्सा-धनकं स्वर्गविषयं व्यापारान्तरम्। न च तस्मिन्नेव तस्यैव कर्मत्वं करणत्वं च सम्भवति, विप्रतिषेधात्। **तदनेन** तावद्यागस्य सामर्थ्यालोचनेन **प्रकारेण भाव्यमानो यागो** न करणम्, अतश्च तद्बलादेव **न स्वर्गो** भाव्यमानः। नह्येक-स्मिन् वाक्ये साध्यद्वयं प्रतिपत्तुं शक्यते, वाक्यभेदापत्तेः, **किमुत यदा प्रीतिम-द्द्रव्यवचन एव लोके स्वर्गशब्दः**। तेन निष्पन्नरूपस्वर्गाख्यद्रव्यसामर्थ्यादपि स्वर्गस्य करणता यागस्य च कर्मता विज्ञायते।

तदिदं सामर्थ्यद्वयं श्रुतिं चाभिसन्धायोक्तम्—**द्रव्याणां कर्मसंयोगे गुणत्वे-नाभिसम्बन्ध इति**। तस्मात् साध**नांशेनैव** स्वर्गः **काम्यते** न साध्यतया।

१. तन्निष्पादितम्—ख०।

कथं पुनरवगम्यते द्रव्यवाचिता स्वर्गशब्दस्य ? तत्र भाष्यकारेण प्रमाणमुक्तं यद्य-त्प्रीतिमद्द्रव्यमित्यादिना, प्रीतिसाधनवचनस्तु स्वर्गशब्दः इत्येवमन्तेन । तत्र व्यवहितकल्पनया ग्रन्थसम्बन्धं दर्शयति—**यद्यत्प्रीतिमद्द्रव्यं तत्तत्स्वर्गशब्देनोच्यते,** [1]**यथा दण्डीत्यनेनास्य ग्रन्थस्य सम्बन्धो व्यवहितस्यापि ।**

---

1. यथा दण्डीत्यनेनेति । इदं भाष्यं गृहीत्वा टीकायां तस्य भाष्यस्य व्यवहितेनोत्तरग्रन्थेन संबन्धो न तु समनन्तरेण 'उपमानात् शब्दप्रवृत्तिरिति चेत्' इत्यनेनेत्युक्तम्—यथा दण्डीत्यनेनास्य ग्रन्थस्य संबन्ध इति । तत्रेयं शङ्का जायते—'तद्यथा दण्डी' इत्यतः पूर्वतनेन 'नेत्याह' इत्यनेनैव 'यद्यत् प्रीतिमद् द्रव्यम्' इत्यादिभाष्यस्य संबन्धः, औचित्यात् । किञ्च, प्रीतिमद्द्रव्ये स्वर्गशब्दस्य प्रयोगेऽप्याकृत्यधिकरणन्यायेन प्रीतिवाचकत्वमेवास्तु स्वर्गशब्दस्येति नेत्याहेत्यादिना शङ्कित्वा भाष्ये परिहृतम् 'विशेषणत्वात् प्रीतेः' इति । वस्त्वन्तरसमानाधिकरणस्य विशिष्टबोधकशब्दस्य प्रयोगे विशेषणं निमित्तमात्रम् , न तु शब्दवाच्यमिति परिहारार्थः । तत्र च दृष्टान्तो दर्शितो भाष्ये यथा दण्डीति । एवं चास्य दृष्टान्तप्रदर्शनार्थतया स्ववाक्यान्वयेन निराकाङ्क्षस्य न पूर्वतरवाक्येन संबन्धकल्पनं युक्तमिति । इमां शङ्कामभ्युपगमेनैव परिहरति ग्रन्थकारः—यथा दण्डीत्यनेनेति । मध्यत उपादानम् इत्यन्वयः । ग्रन्थमध्यस्थितं 'यथा दण्डी' इति पदद्वयमुपाददानेन टीकाकारेण नेत्याहेत्यादिः प्रीतिसाधनवचनस्तु स्वर्गशब्द इत्यन्तः कृत्स्नश्चोद्यपरिहारग्रन्थ एव दर्शितः । तस्मात् नेत्याहेति पूर्वग्रन्थसंबन्ध एवेष्ट इत्यभिप्रायः । अतश्च 'उपमानात् शब्दप्रवृत्तिरिति चेत्' इत्यादेः 'अतो द्रव्यं स्वर्गः' इत्यन्तस्य शङ्कापरिहारभाष्यस्योपरिष्टाद् न तु स्वर्गशब्दो लोके इत्यतः पूर्वं निवेश इति पर्यवसितम् । नन्वेवं सति स्वस्थानस्थितस्यैवास्य भाष्यस्य संबन्धो भवतु, किं स्थानान्तरनिवेशकल्पनयेति चेत् , मैवम् ; यतः प्रीतिसाधनद्रव्यवाची स्वर्गशब्द इति पूर्वपक्षिणा स्वाशयेऽभिहिते ततः सिद्धान्तिनः प्रीतिवाचित्वमेव तस्यास्त्विति शङ्कैव स्वरसतः समुन्मिषति, न तु

यथा दण्डीत्यनेन नेत्याहेत्यादेः प्रीतिसाधनवचनस्तु स्वर्गशब्द इत्यन्तस्ये [1]सचोद्यपरिहारस्य ग्रन्थस्य मध्यत उपादानम् ।

तेनैवं भाष्यान्वयोऽनेन प्रदर्शितो भवति—यद्यत्प्रीतिमद्द्रव्यं तत्तल्लोके स्वर्गशब्दनोच्यते चन्दनं स्वर्ग इत्यादौ । तेन चन्दनादिसामानाधिकरण्यात् प्रीतिमद्द्रव्यं स्वर्ग इति मन्यामह इति । अस्यानन्तरमुपमानादित्यादिव्यवहितस्यापि नेत्याहेत्यादेश्चोद्यग्रन्थस्य सम्बन्धः । आकृत्यधिकरणोक्तान्वयव्यतिरेकन्यायेन प्रीतेरेव वाच्यत्वान्न तद्वद्द्रव्यवाचिता युक्तेति । नैतदस्तीति परिहारः । यथा दण्डिशब्दो विशेषणभूतं दण्डमनभिधायापि तं निमित्तीकृत्य पुरुषमेव वक्ति तथा स्वर्गशब्दोऽपि प्रीतिनिमित्तो द्रव्यमेव वक्ति, न प्रीतिम्, द्रव्य एव प्रयोगात् । तस्माद्द्रव्यं वाच्यमिति । तदनन्तरं उपमानादित्यादि चोद्यम् । गौणत्वाचन्दनादीनां न वाच्यत्वमिति । नहीति परिहारः । मुख्यस्यार्थान्तरस्य लोके प्रसिद्ध्यभावादेषामेव मुख्यत्वं न गौणत्वोपपत्तिरिति । ततो नन्वित्यादि चोद्यम् । विशिष्टस्य देशस्य तदभिधेयस्य मुख्यस्य लोके प्रसिद्धत्वात् तत्सादृश्येन प्रीतिसाधनेषु द्रव्येषु गौणप्रयोगोपपत्तिरिति । तस्योत्तरमत्रोच्यत इत्यादि । तदनेन देशस्य सद्भाव एव निष्प्रमाणक इत्युक्तम् । सद्भावेऽपि तस्य वाच्यता नास्तीत्याह—यद्यपीति । तदनुभाष्य व्याचष्टे—अत्र ग्रन्थः । **यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात्तथाप्यस्मत्पक्षस्याविरोधः प्रीतिसाधनं स्वर्ग इति । तेन देशेन व्यवहाराभावात् कुतस्तस्याभिधाता स्वर्गशब्दो भविष्यतीति ।**

---

उपमानादित्यादिः । सा हि शङ्का स्वर्गशब्दस्य प्रीतिमद्द्रव्यवाचितामुपेत्य चन्दनादौ सादृश्यनिबन्धनगौणलक्षणावष्टम्भेन क्रियत इति । अत एव प्रीतिसाधनद्रव्यस्य स्वर्गशब्दमुख्यार्थस्य लोकप्रसिद्ध्या गौणत्वाशङ्कायां निराकृतायां 'ननु स्वर्गशब्दो लोके प्रसिद्धो विशिष्टे देशे' इति पुनराशङ्का सुसङ्गता भवतीति । सर्वमिदमभिप्रेत्यैवात्रत्यानां भाष्यग्रन्थानां क्रमं दर्शयति—तेनैवं भाष्यान्वय इत्यादिना ।

१. 'स' नास्ति—क० ।

अस्याभिप्रायः—**एकस्य** सिद्धान्तवादिनः **प्रीतिः स्वर्गशब्दवाच्या। अपरस्य** तु पूर्वपक्षवादिनः **प्रीतिमद्द्रव्यम्। विशिष्टस्तु देश उभयोरपि** वादिनोरवाच्यः। **किं कारणम्? तस्याप्रत्यक्षत्वाद् व्यवहाराभावस्तेन।** [२]नह्यदृष्टेनार्थेन व्यवहर्तुं शक्यते, **व्यवहाराभावाच्च प्रयोगाभावः।** व्यवहाराङ्गेषु तत्सिद्धये शब्दा लोके प्रयुज्यन्ते नातदङ्गेषु। प्रयोगाधीनश्च वाच्यवाचकभावः। तेन देशस्य व्यवहारानङ्गतया शब्दप्रयोगाविषयस्यावाच्यत्वमुभयोरपि वादिनोरविवादम्। तत्सद्भावमात्रे तु विवादः। तदाह—**किन्तु यस्य प्रीतिरभिधेया** सिद्धान्तिनः, तस्य **तत्साधनं च यागः। तेन च सा** प्रीतिरनुभवितव्या। सा च विशिष्टदेशादृते **नानुभूयत इत्यर्थापत्त्या** तदनुभवाय **अवाच्योऽपि स** देशः **कल्प्यते। यथा** कालान्तरीयफलानुपपत्त्याऽपूर्वं कल्प्यते, तथा[३] देशोऽपि। **नन्वस्मिन्नपि देशे शक्या प्रीतिरनुभवितुम्, चन्दनानुलेपनादिभिः कृतैरनन्तरं प्रीतिरुपलभ्यते।** परिहरति—**यैषा भोजनादिना**[४] **प्रीतिरेषा क्षणिकी।** ततः किमित्याह—**कर्मणां त्वल्पमध्यममहतामल्पमध्यममहत्य एव प्रीतयः** फलमित्युक्तम्—"फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्" इति। **तत्र या** महती **प्रीतिर्निरतिशयानुभवितव्या, सा चोष्णशीतादिद्वन्द्वरहिते देशे शक्यानुभवितुम्।** तथापि किमित्याह—**अस्मिंश्च देशे मुहूर्तशतभागेऽपि**[1] **द्वन्द्वैर्न मुच्यते। तस्मान्निरतिशयप्रीत्यनुभवनाय कल्प्यो विशिष्टो देशः।**

एतदुक्तं भवति—विध्युद्देशवर्तिना स्वर्गशब्देन प्रीतिफलत्वमवबोधितम्। न च

1. 'भागोऽपि' इति पूनामुद्रितः टीकापाठः।

१. भावं—ख०।

२. न तु—ख०।

३. तथात्र—ख०।

४. दिजा—ग०।

तस्याः परिमाणमुपात्तम्। महत्त्वमात्रं त्वर्थापत्त्या सिद्धम्। तद्विशेषस्तु सन्दिग्धः। तत्र वाक्यशेषे संवत्सरशतादिषु नैरन्तर्येण दुःखासंपृक्तप्रीत्यनुभवावगमात् तादृक्प्रीतिपरो विध्युद्देशवर्ती स्वर्गशब्दो निर्णीयते, "सन्दिग्धेषु वाक्यशेषाद्" इति न्यायात्। तादृशी च विशिष्टदेशादृते नानुभवितुं शक्येति तत्सिद्ध्यर्थं देशान्तरकल्पनम्। किंनिमित्ता तर्ह्यस्मिन् देशे प्रीतिः? तत्राह—**चन्दनादिजन्या[१] तु या प्रीतिः चन्दनादीन्येव तस्या उत्पादकानि न यागः।** ननु दैवोपकृतमेव पौरुषेयं फलोपभोगायालम्, न केवलमत आह—**अस्मिंश्च देशे यावज्जङ्गमतिर्यगादि तत्सर्वं प्रीत्यप्रीती अनुभवति। न च सर्वैस्तैः** कर्माण्यग्निहोत्रादीनि[२] **कृतानि अस्मिन् देशे। अतो ये** सर्वप्राणिसाधारणे **प्रीत्यप्रीती, ते स्वभावकृते** दृष्टकारणमात्रजन्ये।

**अथोच्येत-अन्यस्मिन् जन्मनि तैः कृतानि कर्माणि, येन प्रीतिमनुभवन्तीति।** परिहरति—**यथास्मिन् जन्मनि सर्वाणि** जङ्गमानि न कर्माणि[३] **कुर्वन्ति, एवमन्यस्मिन्नपि जन्मनि** सर्वाणि न कुर्वन्ति। ईदृगेव हि सर्वदा जगदिति[1]। ततः किमित्याह—**अनुभवन्ति च[४] सर्वाणि** यां च यावतीं च **प्रीतिम्। अतो यदीयं कर्मजन्या स्यात्ततः कैश्चिदेवानुभूयेत** न सर्वैः। **अकर्मजन्यत्वे** दृष्टकारणजन्यत्वे तु सर्वानुभवो **न दोषः।** येष्वेव पश्वादिषु केषाञ्चिदेवानुभवाद् दृष्टकारणस्य व्यभिचारस्तेष्वेवादृष्टस्य कारणता। सर्वसाधारणस्य तूदकपानादिजन्मनः सुखस्याव्यभिचारि दृष्टमेव कारणमिति। तथा चोक्तम्—

---

1. अत एव प्राभाकरा अप्याहुः-'न कदाचिदनीदृशं जगत्' इति।

१. 'आदि' नास्ति-क०।

२. कृतान्यग्निहोत्रादीनि कर्माणि-ख० ग०।

३. कर्म-ख० ग०।

४. 'च' नास्ति-क० ख०।

व्यभिचारात्तु[1] सेवादेः [1]पश्वादौ कारणान्तरम् ।
किमप्यदृष्टमस्त्येव तत्रान्यन्निष्प्रमाणकम् ॥
ईश्वरेच्छाधिकारादि शब्दलिङ्गादिवर्जनात् ।
कृतं कदाचिच्चित्रादि शब्देन त्ववगम्यते ॥ इति ।

**तस्मात् स्वर्गशब्दस्य** निरतिशया **प्रीतिरभिधेया, सा चाशक्या विशिष्टदेशादृतेऽनुभवितुमिति**[2] विशिष्टो **देशोऽनुमीयते,** कल्प्यत इत्यर्थः ।

तदेवं सिद्धान्तिपक्षे फलबलेन देशोऽस्ति, पूर्वपक्षिपक्षे तु फलाभावात् सद्भावोऽपि देशस्य निष्प्रमाणकः । वाच्यता तु तस्योभयोरपि नास्तीति भाष्याभिप्रायमुक्त्वा तत्रैव भाष्यं योजयति—**यद्यपि केवलसुखश्रवणार्थापत्त्येत्यभ्युपेत्यवादेनायं ग्रन्थः ।** कस्मादित्याह—**यतः** पूर्वपक्षे **स्वर्गशब्देन द्रव्यमभिधीयते,** ततोऽयमभ्युपेत्यवाद इति । तदेवं भाष्यार्थः—यद्यपि **भवता** केवल**प्रीतिसामर्थ्या**दस्मिंश्च देशे दुःखासंपृक्तसुखानुभवासम्भवाद् **विशिष्टो देशः**

---

1. "व्यभिचाराच्च सेवादेः पश्वादेः साधनान्तरम्" इत्यादि चित्राक्षेपपरिहारप्रकरणे श्लोकवार्त्तिकस्थं पद्यद्वयमिदम् । सेवादेर्दृष्टस्य कारणान्तरस्य व्यभिचारात् । सेवादेरभावेऽपि पशुरूपफलदर्शनेन व्यतिरेकव्यभिचारात् पश्वादेः साधनान्तरं किमप्यदृष्टमस्त्येव चित्रादिरूपमिति सम्बन्धः । ननु किमित्यदृष्टं निमित्तं कल्प्यते, यावतेश्वरेच्छैव कार्यमुत्पादयिष्यति । तथा च निरपेक्षेश्वरवादिनस्तथैव मन्यन्ते । अथवा प्रकृतेरधिकारः सर्वकार्येषु हेतुरस्तु । तथा च यावदधिकारं प्रकृतिः प्रवर्तते; अधिकारविरतावुदास्त इति सांख्या इत्यत आह—अन्यदिति । अन्यद् ईश्वरेच्छाप्रकृत्यधिकारादि शब्दानुमानादीनामभावेन निष्प्रमाणकमित्यर्थः ।

१. तत्र स्यात्—क० ख० । 'पश्वादेः साधनान्तरम्' इति मु०श्लोकवा० पाठः ।

२. नानुभवितुम्—क० ।

**कल्प्यते, तथापि प्रीतिमद्द्रव्यमेव तस्य** देशस्य **साधनं** प्रमाणम्। प्रीतिमत्सु हि द्रव्येषु चन्दनादिषु स्वर्गशब्दप्रयोगात्, अन्वयव्यतिरेकाभ्यां प्रीतेर्वाक्यार्थत्वमवसाय तदनुभवार्थेन भवता विशिष्टो देशः कल्प्यते। तेन प्रीतिमत्स्वेव चन्दनादिषु शब्दप्रयोगाद् मत्पक्षे तान्येव वाच्यानि, भवत्पक्षे तु तत्स्था प्रीतिः। देशस्य तु **व्यवहाराभावात् स्वर्गशब्देनावाच्यता भवतोऽपि। तस्मान्मत्पक्षे निष्प्रमाणको** देशो भवत्पक्षे **विद्यमानोऽपि** शब्दवाच्यत्वाभावाद् **नास्मत्पक्षं** प्रीतिमद्द्रव्यवाचित्वं **विरुणद्धि।**

ननु मा भूद्देशस्य वाच्यत्वम्। तथापि कथं द्रव्यवाचित्वमित्यत आह—**यथा च स्वर्गशब्दो द्रव्यवचनः, तथोक्तं** भाष्यकारेण **लोकव्यवहारादिति।** अत्रानन्तरं यदा प्रीतिमद्द्रव्यं स्वर्ग इत्यादि पूर्वपक्षभाष्यं श्रुतिश्च वाक्याद्बलीयसीत्यन्तम्। तस्य प्रागेवार्थो वर्णितः शब्दवस्तुभ्यां च पूर्वपक्ष इत्यादिना। तदनन्तरं **स्वर्गकामस्य यागः, कर्त्तव्यः, कर्त्तव्यश्च सुखवान् अकर्त्तव्यो दुःखवान्। कर्त्तव्य इति चैनं ब्रूते। तस्मात् सुखफलो यागो भविष्यतीति** भाष्यम्। तदनु[दनन्तरं]भाष्याक्षिपति—**अयुक्तोऽयं ग्रन्थः। कुतः? यदा यागो भाव्यः, तदान्यद्भाव्यतां न प्रतिपद्यते,** भाव्यद्वयासम्भवात्। तेन नात्र सुखात्मकं फलं कल्पयितुं शक्यम्, वाक्यभेदापत्तेरिति। **कतरद्वानेन फलवदाख्यातं दृष्टम्, येनात्रापि फलमनुमीयते,** सर्वाख्यातानामत्रत्यया नीत्या निष्फलत्वात्। लोके तु प्रमाणान्तरात् फलसिद्धिर्न शब्दात्[1]। तेन लिङ्गाभावादपि न फलकल्पनेति।

**किञ्चानुमीयमानमपि द्रव्यवचनतां प्रतिपद्यते।** सर्वत्र हि वैदिकेऽर्थेऽर्थापत्त्या शब्दः कल्प्यते। तेनात्रापि फलपदमेवानुमीयेत। तच्च श्रुतस्वर्गादिपदवत् साधनभूतं द्रव्यमेव प्रतिपादयेत्, न फलमिति। **तस्मादस्य** ग्रन्थस्य **कीदृशी वर्णना कर्त्तव्या?** उत्तरम्—**यागस्तावद्वस्तुश्रुतिभ्यां कर्त्तव्यरूपो** भाव्यरूपः। **यश्च** [2]**कर्त्तव्यरूपस्तस्य लोके कर्त्तव्यतो-**

---

१. 'शक्या बाधितुम्' अधिकः—ख० ग०।

२. अकर्तव्य—ख०।

**त्तरकालं प्रायेणाभ्युदयो दृष्टः। तदिहापि** वेदे यागादेः **कर्त्तव्यरूपत्वाद् भवितव्यं केनापि फलेन।** [1]**तच्च निरीक्ष्यमाणं प्रमाणाभावान्न किञ्चिदप्यवतिष्ठते । तस्मादेवं** [2]यागस्या**नर्थकत्वाद्** आनर्थक्यस्यैव प्रमाणवत्त्वात् **फलनिराकरणमेवानेन** ग्रन्थेन क्रियते।

अत्रानन्तरं कथं स्वर्गकामशब्देन स्वर्गेच्छाविशिष्टपुरुषवाचिना स्वर्गस्य साधनस्य विधानमित्याशङ्क्य, स तु यस्येच्छा तस्य सिध्यतीत्यादिना भाष्ये साधनविधानं समर्थितम्। तत्र चोदयति–**ननूत्पत्तिवाक्यशिष्टं पुरोडाशाद्यशक्यं बाधितुं विकल्पयितुं वा।** दर्शपूर्णमासयोर्हि "यदाग्नेयोऽष्टाकपालः" इत्यादिभिरुत्पत्तिवाक्यैः पुरोडाशादि द्रव्यं विहितम्, ज्योतिष्टोमे च सोमः। तेन कथं तत्र स्वर्गाख्यं द्रव्यं विधीयते।

विकल्पो नहि वैषम्यादुत्पन्नोत्पत्तिशिष्टयोः।
समुच्चयोऽपि नैकार्थ्यान्न तरां बाधसम्भवः॥

**उच्यते–रूपरससौरभ्यादयस्तेष्वेवो**त्पत्तिशिष्टेषु पुरोडाशादिषु **करिष्यन्ते स्वर्गशब्दवाच्यत्वाय** । न तु तद्विहायान्यद्द्रव्यमुपादास्यते। तस्मान्नोत्पत्तिवाक्यविरोध[3] इति। अथाप्यदृष्टेन, तथापि न दोष इत्येतत्त्वभ्युपेत्यवादमात्रमनभिमतमिति नोपपाद्यते। तस्मात् स्वर्गादीनां साधनतया विधानादफलानि कर्माणीति। कथमिदानीमनर्थस्य विधिविषयत्वम्? को दोषो यद्यवगम्यते? अवगम्यते चात्र विधिविषयता निष्फलता च व्यापारस्येति यावदुक्तप्रमाणानां[क्तं प्रमाणेन] तथैवाभ्युपेतव्यम्। न च विधिरेव फलवत्त्वमवगमयति, प्रवर्तनामात्ररूपत्वात्।

ननु निष्फले न कश्चित् प्रवर्तेत? मा प्रवर्तिष्ट। किमत्र कुर्मः। नन्वेवमप्रामाण्यं स्यात्? न, गम्यमाने प्रवर्तनामात्रे प्रमाणमेव। नहि पुरुषप्रवृत्त्यधीनं वेदस्य प्रामाण्यम्। यदि हि तथा स्यात्, ततः प्रमाणभूतवचनविहितस्यानुष्ठानम्,

---

१. न च–ग०।

२. यागानर्थ–क०।

३. वाक्यद्रव्यविरोधः–क०।

अनुष्ठानायत्तं च प्रामाण्यमितीतरेतराश्रयापत्तिः । सत्यपि च फले केषाञ्चिद-प्रवृत्तेरप्रामाण्यमपरिहार्यं स्यात् । तस्मात् प्रवृत्त्यभावेऽपि नैव प्रवर्तने प्रतीय-मानेऽर्थे वेदस्याप्रामाण्यम् । फलसाधनत्वानवबोधात्तु धर्मे प्रामाण्यं न स्यात् । तच्चेष्टमेव पूर्वपक्षवादिनः । तस्मात् फलाभावान्नास्ति कर्मभिः पुरुषस्याधिकार इति तल्लक्षणमनारब्धव्यमिति ॥ १ ॥

## असाधकं तु तादर्थ्यात् ॥ २ ॥ सि०

आस्तां तावद्विधिः, कामपदबलादेव तावत् कामानामेव साध्यत्वम् , यागस्य तु साधनत्वमेवेति प्रतिपाद्यते । तत्रापि स्वर्गकामोदाहरणे विशेषतः कामस्यैव प्राधान्यं प्रीतिवाचित्वात् स्वर्गशब्दस्येति दर्शयितुमाह भाष्यकारः—**प्रीतिः स्वर्ग** इत्यादिना । तस्य 'स्वर्गशब्द एव प्रीतेरभिधाता' इत्यन्तस्यार्थं संक्षिप्य दर्शयति—**आकृत्यधिकरणन्यायेन स्वर्गशब्दस्य प्रीतिरभिधेया** न तु द्रव्यम् । प्रीतिवचनश्चेद्यागो गुणभूत इत्यादिभाष्यार्थमाह—**सा च साध्या** न तु साध-नम् । कुतः ? **पुरुषार्थत्वात्** । तदेव कथमित्यत आह—**सर्वो हि पुरुषः प्रीत्यै यतते**, न तु तामन्यार्थां कश्चिदनुमन्यते । तेन सा तावत् साध्या । सा चेत् साध्या, **न यागः** साध्य इत्याह—तत्र प्रीतियागौ **न चोभौ साध्यौ** । **एकेन भाव्येन भवितव्यमन्येन भावकेन**, साध्यद्वयस्यैकस्मिन् वाक्ये समन्वया-योगात् । कथं पुनर्द्वितीयातृतीययोरसत्योः साध्यसाधनभावावगतिरित्यत आह—**यद्यपि यागे तृतीया न श्रुता नापि स्वर्गे द्वितीया, तथापि स्वर्गस्य** स्वरसादेव **भाव्यत्वात्**, पारिशेष्याद्**यागस्य करणता** ।

न कर्मकरणत्वे हि विभक्ती सन्नियच्छतः ।
प्रमाणान्तरगम्ये ते तद्विरुद्धं न किञ्चन ॥

**नन्वस्तु** स्वर्गस्य प्रीतिरूपस्य साध्यतयैव कामना । **पशुकामा**द्युदाहरणे तु **द्रव्यवचनत्वात्** पश्वादिशब्दानां **कामना** साध्यविषया **न प्राप्नोति** । साधन-विषयैव हि सा[1] स्यात् । **उच्यते—यदीप्सितं पुरुषार्थत्वेन तस्यैव** साध्यस्य

१. 'सा' नास्ति–ग० ।

कामना मुख्या, तदुपायभूता तु क्रिया यागादिका, तत्साधनानि च सोमादीनि नान्तरीयकत्वात् काम्यन्ते। कथमित्याह—साध्यस्य फलस्य सम्पत्तये सर्वः पुरुषः प्रवर्तते, न तु कर्म तत्साधनं वा सेत्स्यतीति । तेन साध्यस्यैव निरुपाधिका मुख्या कामना, तदुपाधिका तु साधने गौणी कामना । तेन कामपदोपबद्धानां पश्वादीनामसति बाधकप्रमाणे स्वारसिकमेव काम्यत्वं गम्यत इति फलत्वसिद्धिः ।

अपि च यत् साधनभूतं द्रव्यं तस्य कामपदोच्चारणमन्तरेणापि कामनार्थलभ्येति [१]कामपदोच्चारणं साधनविधिवादिनोऽनर्थकं स्यात् । यस्य पुनः पक्षे पशुकामशब्देन फलमभिधीयते तस्य पशुं साध्यभूतं कामयमानः पशुकामोऽभिधीयते । तथापि किं कामपदस्य प्रयोजनमित्याह-तत्र यदि कामशब्दो नोच्चार्यते, ततः पशवोऽस्याभिप्रेताः समीहिता इति नैव विज्ञायेत । अज्ञानाच्च पशवः फलं साध्याः, यागस्तु तेषां साधनमिति सर्वं नावकल्पेत । अतः फलत्वप्रतिपिपादयिषया कामपदोच्चारणमर्थवत् । साधनपक्षे तु कामपदोच्चारणादृतेऽपि लभ्यत एव साधनत्वम् । यथा व्रीहिभिर्यजेत इति । तेनानर्थकः कामशब्दः स्यात् । किञ्च, यागे च स्वर्गाख्यद्रव्यविधिमिच्छतः पुरोडाशादिभिः सहाविरोधो नास्ति । कथम्? पुरोडाशादि द्रव्यं स्वर्गशब्देन नाभिधीयते । तद्यदि तेनेज्यते न [२]स्वर्गेणेष्टं स्यात् । अथ स्वर्गेण चन्दनादिनेज्येत, न पुरोडाशादिभिरिष्टं स्यादिति विरोधः । अत्र समाधानं पूर्वोक्तमनुभाषते—रूपरससौरभ्यादयस्तत्रैव पुरोडाशादिषु क्रियन्त इति सम्बन्धः । किमिति क्रियन्त इत्यत आह—स्वर्गशब्देनाभिधेयाः पुरोडाशादयः, अन्यथा यदि सौरभ्यादयो न क्रियेरन् ततो न संभवन्तीति हेतोः । तेषां तद्वाच्यत्वाय सौरभ्यादयः क्रियन्त इति ।

---

१. 'कामपदोचारणम्' इत्यारभ्य 'तथापि किं' पर्यन्तं नास्ति—ख० ग० ।

२. 'स्वर्गेणेष्टं स्यात् । अथ' नास्ति—ख० ।

**एतदयुक्तम्। यदेव हि स्वर्गशब्दवाच्यमप्रयत्नजनितं तस्मिन्नेव** चन्दनादिद्रव्ये **उपादातव्ये विस्पष्टे शब्दार्थे** गम्यमाने **पुरोडाशादावश्रुतः प्रयत्नः किमर्थमास्थीयते।** किञ्च, **क्रियमाणेनाप्यश्रुतेन यागः कुतो भवेत्।**

अयमभिसन्धिः—स्वर्गशब्दो हि भवन्मते द्रव्यवाची द्रव्यमेव विधत्ते। न च विहितस्य पुरोडाशादेर्विधानमवकल्पत इति द्रव्यान्तरमेव विधातव्यम्, अतः सौरभ्यादिप्रयत्ने पुरोडाशादिविषये क्रियमाणेऽपि स्वर्गश्रुतेरस्त्येव विरोधः।

ननु प्रीतिमद्द्रव्यवचनः स्वर्गशब्दो विशेष्यस्य द्रव्यस्य पुरोडाशादिचोदनयैव प्राप्तत्वाद् विशेषणपरत्वं दण्डी प्रैषान् इतिवत् प्रतिपद्यते? न[1], अशब्दार्थत्वात्। दण्डिशब्दे हि प्रकृत्या दण्डोऽभिहितः, प्रत्ययेन पुरुषः, तेन युक्तं यद्विधीयते। स्वर्गशब्दस्तु भवन्मते तस्थां प्रीतिं निमित्तीकृत्य द्रव्यमेवाभिधत्ते, न विशेषणम्। न चाशब्दार्थस्य विधानं सम्भवतीति न विशेषणविधिः सम्भवतीति। अथ **चन्दनाद्येवोपादास्यत इति चेत्? न।** कुतः? **तत्रोत्पत्तिवाक्यशिष्टेन** पुरोडाशादि**नावरोधात्। विकल्पसमुच्चयौ च न सम्भवतः,** विषमशिष्टत्वादेकार्थत्वाच्चेति। यद्युच्येत—मा नामाग्नेयादिषु द्रव्यं विधायि, कर्मान्तरमेव दर्शपूर्णमाससंज्ञकं स्वर्गविशिष्टं विधीयत इति। तत्राह—**सन्निधौ च विपरिवर्तमान**मुपेक्ष्य **कर्मान्तरमशक्यं कल्पयितुम्।** न च वाजिनयागवद् गुणाद् भेदः सम्भवति, स्वर्गशब्दस्य फलसमर्पकतयाप्युपपत्तेः। किञ्च, **विधीयमानेऽपि** कर्मान्तरे फलत्वेन **स्वर्गशब्द आत्मानं** प्रीत्यात्मक**मुपस्थापयत्येव। सर्वप्रयत्नपुरुषार्थतयोपस्थाप्यमाने** तस्मिन् **यदि** ततोऽन्यः श्रेयान् पुरुषार्थः **श्रूयेत,** ततः स्वर्गस्य **साध्यता न स्यात्,** साधनत्वमेव स्यात्। **न चान्यः पुरुषार्थः श्रूयते। तस्मादयमेव** स्वर्गः **पुरुषार्थतां प्रतिपद्यते। तस्मात् कर्मान्तरेऽपि कल्पिते स्वर्गः** फलं **सिध्यत्येव। तस्मान्निर्ज्ञातस्यै**वाग्नेयादिकर्मणः **फलमिदम्।** किञ्च, **तव धात्वर्थे किञ्चिद्विधीयत इति वाक्यम्,**

---

१. 'न' नास्ति—ख०।

मम त्वन्यत्र फले धात्वर्थस्य **विधाने** सति श्रुतिरिति। **अतो वस्तुतः** प्रीतिस्वाभाव्यात् **शब्दाच्च** कामशब्देन फलस्य प्राधान्याद् धात्वर्थविधिलाभाच्च **स्वर्गः कर्त्तव्यो** भाव्यो न तु साधनम्; याग एव तु साधनमिति ॥ २ ॥

एवं तावत् कामपदानुबन्धबलेन काम्यमानस्य फलस्य भाव्यत्वं यागस्य साधनत्वमित्युक्तम्। इदानीं तु यदुक्तं पदश्रुत्या यागस्य भाव्यत्वावगमाद् न वाक्यात् कामस्य भाव्यत्वं सम्भवतीति, तत्परिहाराय ततोऽपि बलीयसीं विधिप्रत्ययश्रुतिमवतारयति—

**प्रत्यर्थं[1] चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धस्तस्मात् कर्मोपदेशः स्यात् ॥ ३ ॥ सि०**

अर्थ्यत इत्यर्थः। अर्थं स्वर्गपश्वादिकम्, अर्थ्यमानं प्रति विध्युपहितस्य

---

1. अत्र पूर्वपक्षे पदश्रुत्या यागस्य भाव्यत्वमाशङ्कितम्। तस्यायमभिप्रायः— यजेतेत्येकस्मिन् पदे प्रत्ययांशेन भावनाभिधीयते। धातुना यागः। तत्र भावनायाः स्वभावतः प्रथमं भाव्याकाङ्क्षैव जायते। यदाह स्म वार्त्तिककारपादः—"भावनापेक्षमाणा हि साधनं किं फलस्य मे। करणानुग्रहः को वेत्यनुपूर्वमपेक्षते ॥" इति। सत्यां च भाव्यापेक्षायामेकपदश्रुत्या लघुतरमुपस्थापितो याग एव भाव्यत्वेनान्वेतुं योग्य इति। अत्रोत्तरं 'प्रत्यर्थं चाभिसंयोगात्' इति सूत्रांशेन प्रतिपाद्यते। अस्यार्थः—अर्थं प्रति पुरुषार्थं प्रति। आख्यातार्थस्यार्थभावनायाः पुरुषार्थेन संबन्धादिति। एतदुक्तं भवति— एकपदश्रुत्यपेक्षयापि बलीयस्या समानाभिधानश्रुत्यार्थभावनाशब्दभावनयोः प्रथमतरं संबन्धः प्रतीयते। स च सम्बन्धो भाव्यभावकत्वरूप एव वक्तव्यः। न च पुरुषार्थभाव्यकत्वं विना प्रवृत्तेः प्रवर्तनासाध्यत्वं संभवतीति विध्यन्वयबलादेव सामान्यतः पुरुषार्थः कोऽपि भाव्य इति निश्चिते पश्चात् स्वर्गादिपदसमभिव्याहारात् तद्विशेषनिर्णय इति। अत एव विध्यर्थः प्रवर्तनात्मको व्यापारो लिङादिशब्देषु किंस्वरूप इति विजिज्ञासायां

व्यापारस्याभिसंयोगात् । पदश्रुतेरपि सन्निकृष्टतरा[१] समानप्रत्ययश्रुतिः प्रथममेव व्यापारं विधिना संयोज्य कञ्चित् पुरुषार्थं नयति, तद्विशेषमात्रं त्वन्यतः प्रार्थयते । तस्माद्यागमुल्लङ्घ्य पुरुषाभिलषितफलापेक्षित्वेन भावनायाः स्थितत्वात् स्वर्गादीनां कर्मतोऽभिसम्बन्धो भाव्यत्वेनाभिसम्बन्धः । तस्मात् कर्मोपदेशः स्याद् यागादीनां कर्मणामेव स्वर्गादिफलं प्रति साधनत्वेनोपदेशः स्यात् , न तु कर्म प्रति स्वर्गाद्युपदेश इति ।

तदेतद्व्याचष्टे—**आनन्तर्य**रूपया हि **पदश्रुत्या यागस्य कर्त्तव्यता स्यात्** । **प्रत्ययः पुनः स्वार्थे भावनायां पुरुषं प्रवर्तयति** । भावनामभिदधदेव हि प्रत्ययः पुरुषप्रवर्तनात्मकविध्यन्वितामभिदधातीत्यर्थः । ततः किमित्यत आह—**सा च** भावना **प्रयोज्यादिभि**र्भाव्यादिभिरंशैः स्वभावादेवा**विनाभूता** सती विधिश्रवणे सति **तेन** पुरुषप्रवर्तनात्मकेन **यद्भाव्यं** भावनायां **नियतं तमेव** नियतं **पुरुषार्थं प्रयोज्यत्वेन** साध्यत्वेना**काङ्क्षति न यागम्**, चेतनप्रवर्तनात्मकविध्यन्वयविरोधात् । यथा च विधिः पुरुषार्थतां गोचरयति तथा न्यायरत्नमालायामेव प्रपञ्चितमिति नेह प्रतन्यते ।

तस्माद्विधिबलात् सामान्यतः पुरुषार्थफलतयावगता तद्विशेषं स्वर्गपशुपुत्रादिकं पुरुषार्थात्मकमेव फलं भाव्यमानतयापेक्षमाणा वाक्यादिसमर्पितैः स्वर्गादिभिः सम्बध्यते न यागेन । [1]कथं तर्हि यागस्यान्वयः ? अत आह—**यश्च**

पुरुषार्थभाव्यकार्थभावनाभिधानात्मक एव सः, क्लृप्तत्वात् । तस्यैव च प्रवर्तनात्वेन रूपेण लिङाद्यर्थता कल्प्यत इत्युक्तं ग्रन्थकारैर्न्यायरत्नमालादौ । तेन क्लृप्तत्वाद्यदि तस्य लिङादिवाच्यत्वम् , तर्हि संख्याद्यभिधानमपि क्लृप्तमिति तेन विनिगमनाविरह इति भाट्टरहस्योक्तदूषणस्यापि परिहारः प्राप्नोति । पुरुषार्थभाव्यकार्थभावनाभिधानं हि प्रवृत्तिप्रयोजकं न संख्याद्यभिधानमिति विनिगमनासंभवादिति ध्येयम् ।

१. तरस—ख० ।

1. ननु यदि प्रथमोत्पन्नया भाव्याकाङ्क्षया पुरुषार्थः स्वर्गादिरेव परिगृहीतः,

भावनाव्यापारः सामान्यरूपः[1] सर्वधात्वर्थानुरागसाधारणरूपः, तत्र यागादयस्तं सामान्यव्यापारं विशेषयन्तः साधनांशेन सम्बध्यन्ते। सर्वधात्वर्थानुरागसाधारणत्वाद् व्यापारस्य सामान्याभिधानं न तु गोत्वादिवत्। तद्गोचरतया

---

तर्हि तदनन्तरभाविन्या करणाकाङ्क्षयैव धात्वर्थस्य यागादेः समानपदश्रुत्या भावनान्वयो वक्तव्यः। न च तत्संभवति, तस्य भावनातः पूर्वभावित्वाभावात्। नापीतिकर्तव्यताकाङ्क्षायां तस्यान्वयः, करणोपकारकस्यैव इतिकर्तव्यतात्वेनातथाभूतस्य यागस्य तथान्वयासंभवात्। अतः कथं तस्यान्वय इत्याक्षिपति—कथं तर्हीति।

1. आख्यातार्थस्यार्थभावनारूपव्यापारस्य सामान्यरूपत्वं 'सर्वधात्वर्थसम्बद्धः करोत्यर्थो हि भावना' इति वार्त्तिकोक्तसर्वधात्वर्थानुरागात्मकं ग्राह्यम्, न तु गोत्वादेरिवानेकानुगतत्वरूपम्, असंभवात्। तच्च सामान्यरूपत्वमिह मूले विषयभूतैर्धात्वर्थैरेव सर्वत्र भावनायाः परिच्छेदः क्रियत इति व्युत्पादनायोक्तम्। तेन शङ्काग्रन्थ आक्षिप्तो धात्वर्थस्य भावनायां करणत्वान्वय उपपादितो भवति। तथा हि वस्तुतो व्यापारवदसाधारणकारणत्वरूपं करणत्वं यागस्य स्वर्गादिरूपं फलं प्रत्येव। अत एव वार्त्तिके 'साधनं किं फलस्य मे' इति भावनाभाव्यकरणाकाङ्क्षैव भावनायाः करणाकाङ्क्षेत्युक्तम्। ततश्च भावनोत्पादकत्वाभावेऽपि भावनाभाव्यनिर्वर्तकत्वाद् यागस्य भावनायां करणत्वेनान्वयः सिद्धो भवतीति भावः।

नन्वेतावता यागस्य भावनाभाव्यफलकरणत्वनिर्वाहेऽपि 'भावनायाः करणाकाङ्क्षा','भावनायां करणत्वेनान्वयः' इत्यादिव्यवहारः कथमुपपादनीय इति चेत्, तदुपपादनमार्गसंशोधनायैव मूले भावनाव्यापारः सामान्यरूपः, तस्य विशेषको धात्वर्थ इति व्युत्पादितमिति ब्रूमः। अयमत्राभिसंधिः—भावना ह्यन्योत्पादानुकूलव्यापारात्मना सामान्यरूपेण न स्वर्गादिफलविशेषं भावयति, किन्तु यागादितत्तद्धात्वर्थपरिच्छिन्ना सती तत्तद्विषयोपहितरूपेण। ततश्च विषयीभूय भावनास्वरूपविशेषपरिच्छेदक-

च धात्वर्थानां तदनुरञ्जकत्वम्। सर्वसाधारणो हि पुरुषव्यापारो धात्वर्थविशेषविषयतया फलविशेषस्य साधनं भवतीति। **व्यापारोद्दिष्टफलसाधनाद्** व्यापारस्यैव तावत्फलभावनात्वप्रसाधनात् [1]**साध्यभूतोऽपि धात्वर्थः करणमुच्यते परशुवत्।** स ह्युद्यमननिपातनाख्यपुरुषव्यापारव्याप्योऽपि तत्रैव **करणं भवति।** तत्कस्य हेतोः? **व्यापारोद्देश्यद्वैधीभवनं** व्यापारस्य वाञ्छितरूपत्वं [रूप] **तदधीनमिति। एवमिहापि यागस्यै**कस्मिन्नेव **साध्यत्वं करणत्वं च नानुपपन्नम्।** न चानुत्पन्नतया यागस्य करणत्वहानिः, पुरुषव्यापारनिष्पन्नस्य करणत्वसम्भवात्।

ननु निर्व्यापारस्य करणता नोपपद्यते। सर्वाण्येव हि कारकाणि स्वव्यापारे

---

तया यागादेर्भावनानिष्ठां स्वर्गादितत्तत्फलविशेषसंपादकतां प्रति प्रयोजकत्वरूपं भावनाकरणत्वमभिप्रेत्य पूर्वोक्तो भावनाकरणत्वव्यवहारो यागादेरिति। अनेनैवाशयेन 'व्यापारोद्दिष्टफलसाधनात्' इति टीकास्थं पदं व्यापारस्यैव तावत् फलभावनात्वप्रसाधनादिति विवृतम्।

1. साध्यभूतोऽपि धात्वर्थः करणमुच्यते परशुवदित्यादि। 'परशुना छिनत्ति' इत्यत्र द्वैधीभावः फलम्, तदनुकूल उद्यमननिपातनादिव्यापारसमुदायो धात्वर्थक्रिया, तस्यां करणकारकं परशुरित्येषा स्थितिः। तत्र परशुमुद्यच्छति तं निपातयतीति प्रयोगादुद्यमनादिक्रियाविशेषं प्रति परशोः कर्मत्वेऽपि तत्समुदायात्मकच्छिदिक्रियां प्रति करणत्वमपि भवति, छिदिक्रियापरिच्छेदद्वारा तन्निष्ठद्वैधीभावरूपफलानुकूलतासंपादकत्वादिति दृष्टान्तार्थः। एवमिहापीति प्रकृतार्थस्य दार्ष्टान्तिके योजनं तु स्पष्टार्थम्।

अनयैव शैल्या लिङादिज्ञानस्य शब्दभावनाकरणत्वव्युत्पादनपरः "तस्य च करणत्वं न भावनोत्पादकत्वेन, संनिकर्षस्येव रूपादिज्ञाने...। किन्तु भावनाभाव्यनिर्वर्तकत्वेनैव। लिङादिज्ञानं हि शब्दभावनाभाव्यार्थभावनां निर्वर्तयति कुठार इव छेदनम्" इति न्यायप्रकाशस्थो ग्रन्थोऽपि व्याख्येयः, न यथाश्रुतार्थो यथान्यैर्व्याख्यात इति द्रष्टव्यम्।

कर्तृत्वमनुभवन्ति प्रधानक्रियायां करणादिभावं भजन्ते। न तु यागस्य कश्चिद्व्यापार उपलभ्यते। सत्यम्, अत एवापूर्वाख्योऽवान्तरव्यापारः कल्प्यते। नन्वपूर्वे भावयितव्ये को व्यापारः, तदपि हि यागभाव्यमेव? उत्पत्त्यपूर्वं तत्र व्यापारः। तदुत्पत्तौ तर्हि को व्यापारः? जन्मेति ब्रूमः। यद्धि कियन्तञ्चित्काल-मुदासीनं स्थित्वा पश्चाद्यत्कार्यं जनयति तस्यैव तदुत्पादने स्वजन्मातिरिक्त-व्यापारापेक्षा। यत्तु जन्मानन्तरमेव जायते तत्र तस्य जन्मैव व्यापारः, क्रियाया इव संयोगविभागयोः, बुद्धेरिव [ व च ] विषयप्रकाशने। तदुक्तम्—

"तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते" इति।

तद्वद्यागस्यापि जन्मैव व्यापार इति सर्व**मनवद्यम्**[1]।

**सोऽपि** च यागः **प्रयोज्यं फलमुत्पादयन्नितिकर्त्तव्यतामभिलषति**। आकाङ्क्षितो व्यापार इतिकर्त्तव्यतेत्युच्यते। यागेन कुर्यादित्येतावत्युक्ते न ज्ञायते कथमनेन फलं कर्त्तव्यम्। कस्मिन् व्यापारे यागविषयेऽनुष्ठिते यागात् स्वर्गो भवतीति। तदस्यामाकाङ्क्षायां द्रव्यदेवतारूपनिष्पादकोपदेशात्, यागस्य चानिष्पन्नस्य साधनत्वासम्भवेन निष्पत्त्यपेक्षत्वात्, प्रयाजाद्युपदेशाच्च एवं विज्ञायते यदुत द्रव्यादिभिर्निष्पादनं प्रयाजादिभिश्चोपकारसम्पादनम्। एवं व्यापृते यागात् स्वर्गो भवतीति। **अत एभिरंशैस्त्रिभिः परिपूर्णा** भवति भावना। **ततः प्रत्ययो भावनायां पुरुषं प्रवर्तयति**। तदा ह्यसौ पुरुषप्रवृत्तियोग्या भवति, न पूर्वमिति।

उपसंहरति—**तस्मान्नैव कदाचिद् यागे प्रत्यय उपनिपतति**। प्रत्ययार्थो भावना न यागं भाव्यतया स्वीकरोति **सत्येवानन्तर्ये**। एवशब्दोऽप्यर्थे[2]। यत्र तर्हि फलपदं न श्रूयते यथा 'समिधो यजति', 'विश्वजिता यजेत' इति, तत्र यागस्यैव भाव्यत्वं न फलस्य, अश्रुतत्वात्। यद्यपि हि विधिबलाद्

---

१. अवदातम्–ख० ग०।

२. अप्यर्थः–ख०।

भवितव्यं केनापि फलेनेत्यपेक्षा स्यात्, तथापि प्रमाणमन्तरेण न फलवत्त्वमवगन्तुं शक्यम्। नह्याकाङ्क्षामात्रं प्रमाणं सन्निध्यपेक्षत्वात्[1]। न चैतेषु फलसन्निधापकं पदमस्ति। अत आह—**अतो यत्र कर्त्तव्यतावचनः** समस्ति **तत्र पुरुषार्थः साक्षात्पारम्पर्येण वाविनाभूतः**। दर्शपूर्णमासज्योतिष्टोमविश्वजिदादिषु साक्षात्, समिदादिषु पारम्पर्येण क्रतूपकारद्वारेण। यद्यपि तत्र फलं न श्रूयते, तथापि[1] विधिबलादेवात्रत्यन्यायेन तदपेक्षायां सिद्धायां प्रकरणादिभिरध्याहारेण वा तल्लाभस्तत्र तत्र साधित इति। यच्चानन्तर्यश्रुत्या लिङ्गेन च यागस्य भाव्यत्वमुक्तम्, तत्राह—**तस्माद्यागस्य कर्त्तव्यतानन्तर्येण प्राप्ता, सा भावनाशब्दस्य** लिङ्प्रत्ययस्य **नियतपुरुषार्थप्रयोज्यत्वाद्बाध्यते**। नियतं पुरुषार्थरूपं प्रयोज्यं भाव्यं यत्र विधिप्रत्यये स तथोक्तः। पदश्रुतेर्लिङ्गाच्च[2] समानप्रत्ययश्रुतिर्बलीयसीत्यर्थः।

एवं तावत् सत्यपि विरोधे बाध्यत्वमुक्तम्। इदानीं तु विरोधो नास्तीत्याह—**अपि च प्रत्ययोच्चारणानन्तरमेव तिस्रः क्रमेणाकाङ्क्षा उत्पद्यन्ते** किं केन कथमिति। **तत्र यदि प्रथमे किमंशे पुरुषार्थः स्वर्गादिरुपनिपतति, द्वितीये** च केनांशे **यागः, ततः कतरस्य शब्दस्य बाधा कृता**। नहि भाव्यत्वं यागस्य केनचिदपि शब्देनोक्तम्। पदश्रुत्या हि प्रकृतिप्रत्ययार्थयोरन्वयमात्रमवश्यमस्तीत्येतावदगम्यते, तत्समभिव्याहारानुपपत्तेः। ततः कोऽसावन्वयविशेष इह विवक्षित इति तद्विशेषो योग्यतया निर्णीयते। तत्र किमंशे यागस्यायोग्यत्वात् करणत्वे योग्यतयावसीयमाने[3] न शब्दविरोधः कश्चित्। **अथ तु किमंशे याग उपनिपतति, ततो नियतमवश्यं प्रयोजिका प्रत्ययस्य** या

---

1. सन्निध्यपेक्षत्वादिति। आसत्त्यपेक्षत्वादित्यर्थः।

१. तत्रापि—क०।

२. 'तत्प्रत्ययश्रुत्या' अधिकः—क०।

३. विधीयमाने—क०।

**शक्तिः सा बाध्यते । कर्मणां चानर्थक्यमस्मिन् मते** स्यात्, तच्चायुक्तम्, उपदेशानर्थक्यप्रसङ्गात्। **तस्माच्छब्दवस्तुभ्यां करणभूतो यागः**। विधिशब्द-सामर्थ्यादानर्थक्यपरिहाराच्चेत्यर्थः ।

एवं तावत् स्वर्गकामशब्देन फलाभिलाषिणं पुरुषमुद्दिश्य तदभिलषितफल-भावनाकरणतया यागविधानमित्युक्तम्। इदानीं तूपायार्थिनमेवानेन शब्देनोद्दिश्य तदुपायतया यागविधानमित्याह—**अथवान्येन प्रकारेण यागस्य करणता। कथम्? स्वर्गमात्मसम्बन्धित्वेन प्रार्थयमानः स्वर्गकामोऽभिधीयते। स च स्वर्गमभिलषमाणस्तदुपायमभिलषति । तस्मादनयोः** साध्यसाधनयो-**रविनाभावात् स्वर्गकामशब्देन** साध्यवाचिना **शक्यते तदुपायो लक्ष-यितुम्**। **अतः शास्त्रेण यागादयस्तत्रोपायतया विधीयन्ते** । यः स्वर्गोपाय-कामः स यजेत, यागस्तस्योपाय इत्यर्थः। तत्र पूर्वस्मिन् व्याख्याने–अतो न स्वर्गकामशब्देनेत्यादि यावत्समाप्ति सुगमं भाष्यम्। द्वितीये योजयति—**अतो न स्वर्गकामशब्देन स्वार्थो विधीयत इति । अभिधीयत** इत्यर्थः। **तदनेन ग्रन्थेनोपायलक्षणार्थं स्वर्गकामशब्दं ब्रवीति। किं तर्हि? उद्दिश्यत इति।** लक्षणत्वेनोपादीयत इत्यर्थः[1] । **तत्र वाक्यादवगतस्य कामस्य कर्त्तव्यता-वगम्यते, यागस्य च करणतेत्यपि** भाष्यमत्रैव योजयितव्यमित्यभिप्रेत्य पठितम्। वाक्यादवगतस्य कामस्येत्युपायलक्षणार्थतयोपात्तस्य तस्य[१] भाव्यतेत्यर्थः।

**एवं च** यागकर्त्तव्यतायां न प्रत्यक्षविरोधो भविष्यतीत्यादेर्जनयेदित्यन्तस्य भाष्यस्यायमर्थः—यागस्य हि दुःखात्मकस्य कर्त्तव्यतायामुच्यमानायां यः प्रत्यक्ष-विरोधः पूर्वमुक्तः, सोऽस्मिन् पक्षे न भविष्यति। तस्मात् स्वर्गे प्रत्युपादेयत्वं

---

1. 'किं तर्हि' इति प्रश्नवाक्यमेतत् पूनामुद्रितमूलपुस्तके नास्ति। 'किं तर्हि उद्दिश्यते' इति प्रश्नप्रतिवचनात्मकं भाष्यं गृहीत्वा तत्र 'उद्दिश्यते' इत्येतद् व्याचष्टे–लक्षणत्वेनेति । लक्षकत्वेनेत्यर्थः ।

१. 'तस्य' नास्ति–ख० ।

कर्मणः, न स्वर्गस्य कर्म प्रति । ये च नैमित्तिकं कर्म विफलं प्रतिजानते, तेऽपि प्रत्यक्षबाधेन भाष्यादस्मान्निराकृताः । अन्यदिच्छति, अन्यत्करोतीति चासम्बद्धता पूर्वपक्षे स्यात् । न च कृते यागे स्वर्गो भवतीति प्रमाणमन्तरेण कल्पयितुं शक्यम्, यतः प्रत्यक्षविरोधः, असंबद्धता परिह्रियेत । न च पूर्वपक्षे वाक्यमिदमन्यपरत्वाद-स्मिन्नर्थे प्रमाणं भवितुमर्हति । काष्ठाहरणार्थत्वं तु प्रमाणान्तरसद्भावादरण्य-गमनस्य युक्तम् । न च तदिहास्ति । न चानर्थकत्वप्रसङ्गमात्रादपि प्रमाणमन्तरेण फलार्थता युक्ताङ्गीकर्त्तुम् । नहि दिधक्षोरुदकोपादानमनर्थकमित्येतावता दाह-सामर्थ्यं तस्य कल्प्यत इति ।

अत्रोपसंहारभाष्यम्—**अथवा स्वर्गकामस्य यागो विधीयत इति पक्षा न्तरावलम्बनेनास्यार्थवत्ता भविष्यतीति ।** तस्यार्थमाह—**यागं कुर्यादि-त्येतस्मात् पक्षान्तरं यागेन कुर्यादिति ।** तदालम्बनेनार्थवत्तेति । **अथवा स्वर्गकामस्येति = अतः स्वर्गकामस्ये**[1]**त्येवं द्रष्टव्यम्** , अनेकार्थत्वान्निपाता-नाम् । अथवाशब्दोऽत इति शब्दार्थे द्रष्टव्य इति । कस्मात् पुनरेवं वर्ण्यते, यावता विकल्पार्थ एवाथवाशब्दो युक्तः ? अत आह—**उपपत्त्यन्तरस्यानुक्तत्वात्** । यदि हि पूर्वमुपपत्त्यन्तरमर्थवत्त्वेऽभिहितं स्यात्ततो विकल्पार्थता घटेत, अनया चोपपत्त्या यागस्यार्थवत्तेति, न तु तदुक्तम्; प्रत्युत निराकृतमुपपत्त्यन्तरं येनार्थवत्ता शक्या शङ्कितुम् । तेनायं भाष्यार्थः—यत एवं यागस्य दुष्परिहरमानर्थक्यमतः स्वर्ग-कामस्य यागो विधीयत इति पक्षान्तरावलम्बनेनैवार्थवत्ता भवतीति ।

**नन्वितरस्मिन्नपि** सिद्धान्तिपक्षे **स्वर्गकामस्य यागो विधीयते, न यागात् स्वर्ग** इत्यस्य भाष्यस्य **कोऽभिप्रायः** ? तं दर्शयति—**पदार्थपूर्व-कत्वाद्वाक्यार्थस्य यागेन स्वर्गमिति यद्येवं श्रूयेत तत इदं साध्यमिदं साधनमिति** वाक्यार्थः **स्यात् । न च यागेन स्वर्गमिति श्रूयते ।** तस्माद् योऽयं **पूर्वोक्तो दोषः** शब्दप्रमाणकानामन्तरेण शब्दमवगतिर्न न्याय्येति, स भवत्पक्षेऽपि

---

१. 'इति' नास्ति—क० ।

तदवस्थ एवेति। अस्योत्तरभाष्यम्—**नैतदेवम्, तस्मिन् वै खलु पक्षे स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयत इत्यदोषः** इति। तस्यार्थः प्रथमे व्याख्याने विस्पष्टः। प्रत्ययार्थमनुष्ठानं वाक्येन स्वर्गकामेन विशेषितमनूद्य प्रकृत्यर्थो यागस्तदुपायतया विधीयते, योऽस्य स्वर्गकामस्य व्यापारः स यागकरणकः स्यादिति।

द्वितीये व्याख्याने योजयति—**स्वर्गं प्रार्थयमानस्तत्सम्बन्धितयोपायमभ्यभिलषति।** कुतः? **नह्युपायादृते उपेयमस्ति। तस्मात् स्वर्गकामशब्दः शक्नोत्युपायं लक्षयितुम्। स च** तेन सामान्येन **लक्षितः सन्नुपायत्वेन विधीयते। पदान्तरोक्तो**[1] **याग** उपाय**विशेषः।** स्वर्गकामपदेन सामान्यात्मना लक्षितः सन्नुपायो यजेतेत्यनेन पदान्तरेण विशेषात्मना विधीयत इत्यर्थः। **तेन पदार्थपूर्वक एव वाक्यार्थः।** भाष्यस्य च स्वर्गकामस्य साधनविषयमनुष्ठानं सामान्येनानूद्य यागस्तस्योपायविशेषत्वेन विधीयत इत्यर्थः। भाष्यशेषो निगदव्याख्यातः।[2] तदनुष्ठानं स्वर्गं प्रतीति नास्ति वचनमिति चेदिति। अस्यार्थः—स्वर्गार्थिना तदुपायार्थिना वा विशेषितमनुष्ठानं न स्वर्गतदुपायविषयमेव भवति, अन्यत्रापि दर्शनात्। दृश्यते स्वर्गकामस्यान्यत्रापि भोजनादावनुष्ठानम्। न चैवं वचनमस्ति स्वर्गकामस्य यत्स्वर्गविषयमनुष्ठानमिति, स्वर्गशब्दस्य सकृच्छ्रुतस्योभयसम्बन्धायोगात्। तस्मात् पुनरपि नैव स्वर्गयागयोः साध्यसाधनभाव इति। उत्तरम्—इष्टमर्थं प्रत्यनुष्ठानं भवति। स्वर्गकामस्य च स्वर्ग इष्टः। तेन स्वर्गविषयमेवानुष्ठानमिति भविष्यतीति।

नन्वन्यविषयमपि तस्यानुष्ठानं भवत्येवेत्युक्तम्? अत आह—तदनुष्ठानविशेषणार्थमेव स्वर्गकामश्रवणमिति। तस्यार्थः—यद्यपि स्वर्गकामनोपलक्षितस्य [१]पुरुषस्यान्य-

---

1. पदान्तरोपात्त इति पूनामुद्रितः पाठः।
2. भाष्यशेषः स्पष्टार्थ इत्युक्तं यद्यपि, तथापि किञ्चिद् वाक्यं भावविवरणेन व्याचष्टे—तदनुष्ठानमित्यादिना।

१. 'पुरुषस्यान्यरूपस्य' अधिकः–ख० ग०।

विषयमप्यनुष्ठानं भवति, न तु स्वर्गकामरूपस्य। तेन हि रूपेण स्वर्गं प्रत्येव व्यापारः। न चेह पुरुषोपलक्षणार्थं स्वर्गकामपदम्, लक्षणाया अन्याय्यत्वात्। अपि च, विधिवशादेव किञ्चित्फलमिच्छतः पुरुषस्य यस्तदर्थो व्यापारस्तं प्रत्ययेनानूद्य साधनतया यागो विधीयत इत्यवगतम्। फलविशेषमात्रं त्वनवगतम्। तद्यदि सत्यपि स्वर्गकामपदे फलविशेषो नावगम्येत, आनर्थक्यमेव स्वर्गकामपदस्य स्यात्, अङ्गत्वेन वा कामनां विदध्यात्। तस्माद्विशेषणपरेण स्वर्गकामशब्देन प्रत्ययार्थं भावनामनूद्य तदुपायतया यागो विधीयते स्वर्गकामो यत् कुर्यात् तद्यागेनेति। ततश्च स्वर्गकामरूपविशेषितस्यानुष्ठानस्य स्वर्गविषयत्वात्तदनुवादेन विधीयमानो यागः स्वर्गार्थो भवतीति।

अधिकरणार्थमुपसंहरति—**तस्मात् फलवत्त्वे कर्मणां युक्तमधिकारलक्षणमारब्धुम्।** कथं फलवत्त्वेनाधिकारसिद्धिरित्यत आह **अधिकारीति कर्मणामुपरिभावेनावस्थितः। स्वामीत्यर्थः।** अधिरुपरिभावे। स च स्वाम्यपर्यायः। यो यस्य स्वामी स तस्योपरि भवति। तेन यद्यस्य स्वं तत् तमधिकरोति, उपरि करोति, स्वामिनं करोतीत्यर्थः।

फलवच्च भवेत्कर्म स्वं नरस्य न निष्फलम्।
फलवत्त्वे प्रसिद्धेऽतः सिद्धैव स्यादधिक्रिया ॥ ॥ ३ ॥

( २–तिर्यगधिकरणम् )

**फलार्थत्वात्[1] कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥ पू०**

[2]सिद्धेऽधिकारे स किं सर्वेषामुत केषाञ्चिदेवेति निरूप्यते[1]। ननु फललाभोऽधिकारः। प्रयोक्तृगामि च फलम्[2]। न चासमर्थस्य प्रयोक्तृत्वं सम्भवति। न

1. निरूपणं चेह लोकव्यवहारसिद्धं सूक्ष्मेक्षिकया परीक्षणरूपं ग्राह्यम्, न तु लक्षणस्वरूपप्रमाणवत्त्वप्रकारकज्ञानानुकूलव्यापाररूपं शास्त्रग्रन्थनिरूढम्।
2. शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति न्यायादिति भावः।

१. फलार्थित्वात्–क० ख० ग०।
२. 'सिद्धेऽधिकारे' नास्ति–ख०।

चान्धबधिरपङ्गुदेवर्षितिरश्चा[1]माज्यावेक्षणवाचन[1]विष्णुक्रमणदेवतोद्देशत्यागार्षेयप्रवरणशास्त्रार्थज्ञानासम्भवात् सामर्थ्यमस्तीति कथं सर्वेषामधिकारः शङ्क्यते । उच्यते, शक्तेरपि शास्त्रविषयतां पूर्वपक्षवादी मन्यते । प्रवर्तना हि विधिर्यथा विधेयस्य कर्तृसमीहितसाधनतामवगमयति तथा शक्ततामपि, असमीहितसाधनवदशक्येऽपि प्रवर्तनायोगात् । अतश्च "स्वर्गकामो यजेत" इति वचनादविशेषेण सर्वस्य स्वर्गकामस्य स्वर्गसाधनं शक्यं च [2]कर्म प्रतिपादितं सर्वाधिकारमवगतं सद् यथाधिकारमङ्गानि गृह्णाति । पङ्गुं प्रति विष्णुक्रमणरहितम्, अन्धं प्रत्यवेक्षणरहितमित्यादि । यदि[2] सर्वान् प्रति सर्वाण्यङ्गानि सङ्गृह्णीयात्, ततः सर्वेषां शक्यं फलसाधनं च कर्मेति यदवगतं तद् विरुध्येत । नहि पङ्ग्वादेस्तथाविधं कर्म शक्यं भवति फलसाधनं वा । तस्माद्यथाधिकारमङ्गविनियोगात् सर्वाधिकारं शास्त्रमिति ॥ ४ ॥

**कर्तुर्वा श्रुतिसंयोगाद् विधिः कात्स्न्र्येन गम्येत ॥ ५ ॥ सि०**

**द्रव्यपरित्यागाद्यभावादसामर्थ्याद्देवादीनामनधिकारः** । नह्यात्मानमुद्दिश्य त्यागः सम्भवति, न च भृगोर्भार्गवत्वम्, न च तिर्यञ्चः शास्त्रार्थमविद्वांसः फलमामुष्मिकं कामयितुं तत्साधनं वा कर्म कर्तुमीशते । तस्मादेषामनधिकारः । **मनुष्येष्वपि वाचनविष्णुक्रमणाज्यावेक्षणेष्वसमर्थो**ऽन्धबधिरादिर्नाधिक्रियते कर्मभिः । यथाधिकारमङ्गसंग्रहात् कथमेषामनधिकार इति पृच्छति कुतः ? उत्तरम्-**इतिकर्तव्यतांशेन वाचनादीनां गृह्यमाणत्वात् क्रत्वर्थता** । यदि ह्येते पुरुषं प्रत्युपादेक्ष्यन्त ततो बधिरादीन् प्रति वाचनादीना-

---

1. आज्यावेक्षणादीनामसंभवोऽन्धादिषु यथाक्रमं योजनीयः ।

2. यद्यपि प्रधानभूतो यागोऽपि तिरश्चामशक्य एव चतुर्थ्यन्तदेवताशब्दनिर्देशात्मकदेवतोद्देशघटितत्वाद् यज्यर्थस्य, तथापि देवतोद्देशो यजिशब्दस्य प्रवृत्तावुपाधिमात्रम्, न तु शक्यतावच्छेदकः । मानसं त्यागमात्रं याग इत्यभिप्रायेणेदमिति द्रष्टव्यम् ।

१. वंश्रवण—ख० ।

२. 'यदि' नास्ति—क० ।

मशक्यत्वेनानुपदेशात् तद्रहितमप्यनुष्ठानं फलायावाकल्पिष्यत। न त्वेवमस्ति, इतिकर्तव्यताकाङ्क्षं क्रतुं प्रति प्रकरणादिभिर्विनियोगात्तेषाम्। **तैर्विना** विगुणात् क्रतोः **फलमेव नास्ति**। न चाफलमधिकरोति कश्चिदित्यन्धादीनामनधिकारः। न च शक्तिः शास्त्रगम्या, यतः सर्वाधिकारो निश्चीयेत, तस्याः प्रमाणान्तरगम्यत्वात्। अप्राप्ते फलसाधनतामात्रे शास्त्रं व्याप्रियते। तेन श्रुत्यादिभिर्विध्यन्वयानुसारिभिः साध्यसाधनेतिकर्त्तव्यताविशेषवति भावनात्मनि प्रतिपादिते तत्फलकामस्तदनुष्ठान[1] समर्थश्चाधिकारी विधिना नियुज्यते। तेन यथाविनियोगमधिकारः[2], यथाधिकारं च नियोज्यत्वमिति नासमर्थानामधिकारो नियोगो वा। **न च भृग्वादयो भृग्वादिसगोत्रा इत्ययुक्तं** भाष्यम्। कुतः? [1]**अनादिर्हि कालोऽस्माकं** मीमांसकानाम्। तेन भृगोरपि पूर्वं भृग्वन्तरसम्भवात्, ततः पूर्वमप्येवमेवेति सम्भवत्येव भृगोर्भार्गवत्वमित्यस्त्येव ऋषीणामप्यधिकारः। तस्माद् ऋष्युदाहरणमनादरणीयम्। **न देवानां देवतान्तराभावादिति**[2]। येषां शब्द एव देवताभिमता

---

1. अनादिर्हि कालोऽस्माकं मीमांसकानामिति। समाने प्रकरणेऽस्ति ग्रन्थकृतो वचनं शास्त्रदीपिकायाम् 'अनादौ संसारे' इति। तच्च मीमांसकानां मते सृष्टिप्रलयानङ्गीकारादिति भाव इति विवृतं नयमयूखमालिकायाम्।

2. न देवानां देवतान्तराभावादिति। अनेन भाष्यवचनेन भगवतः शबरस्वामिनः देवानामर्थवादादिसिद्धं विग्रहादिपञ्चकमस्तीत्याशय उन्नीयते, येनासौ देवानां कर्मानधिकारे देवतान्तराभावमेव हेतुं ब्रवीति, न विग्रहादिराहित्येनासामर्थ्यम्। तत्र मीमांसकानामेव मते अग्निः, विष्णुः, इन्द्र इत्यादयो वैदिकाः शब्दा एव देवताः, नैषामर्थः कश्चिदस्तीत्युत्तानहृदयानामेकः पक्षः। तथा सत्यर्थराहित्येन प्रातिपदिकत्वाभावात् तेषु शब्देषु सुबुत्पत्तिर्न स्यात्। अतोऽर्थः समस्ति, किन्त्वचेतनभूतः सः। अत एव 'ज्योतिषि भावाच्च' (१ अ. ३ पा. ३१ सू.) इति ब्रह्मसूत्रे भौतिके

१. सामर्थ्यश्च विधिना—ख०।

२. 'न' अधिकः—ख०।

**तेषामयमप्ययुक्तो ग्रन्थः**। शक्यते हि इन्द्रेणापीन्द्रशब्दोच्चारणेन हविस्त्यक्तुम्। तस्मादर्थमेव देवतामभिप्रेत्यैतद्भाष्यमिति ॥ ५ ॥

( ३–क्रतुषु स्त्रिया अप्यधिकाराधिकरणम् )

## लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ६ ॥ पू०

नन्वाद्ये फलकामस्योद्देश्यत्वमुक्तम्। न चोद्दिष्टस्य विशेषणं शक्यं विवक्षितुमिति ग्रहाधिकरणे स्थितम्। अतः किमत्र चिन्त्यमत आह—**ग्रहाधिकरणे विभक्तिवाच्यस्य एकत्वस्याविवक्षोक्ता, न प्रातिपदिकार्थस्य लिङ्गस्य। तस्मादयं पूर्वपक्षवादिनोऽभिप्रायः**[1]**–अर्थस्योद्दिश्यमानस्यापि** ग्रहादेः प्रातिपदिकाभिहितस्य चमसाधिकरणन्यायेन **यथा विवक्षा, एवं तद्वाच्यस्य लिङ्गस्यापीति**। तदपि हि प्रातिपदिकाभिधेयं स्मरन्ति–'स्त्रियां यत्प्रातिपदिकं वर्तते तस्मात् टाबादयः' इत्येवमभिदधानाः शाब्दाः। तस्मात् पुंसोऽधिकारः। किञ्च,

---

ज्योतिषि जडभूत एवाग्न्यादिशब्दप्रयोगस्य भावादित्यर्थकेऽयमर्थो जैमिनिसंमतत्वेन निर्दिष्ट इत्यपरः पक्षः। अचेतनानां पूजनीयत्वासंभवाद् भौतिकज्योतिराद्यधिष्ठानभूताश्चेतनाशक्तिविशेषा अप्यग्न्यादिपदानां वाच्याः, त एव च देवताः। किन्त्वर्थवादमन्त्रादीनां स्वार्थे प्रामाण्यविरहात् शरीरादिरहिता एव ता इष्यन्त इति तृतीयः पक्षः। अयमेवोत्तरमीमांसायां निराकृतः। प्रमाणान्तरविरोधाभावेऽर्थवादादीनामपि स्वार्थप्रमापकत्वाभ्युपगम एव श्रेयानिति तु मुख्यः पक्षः, योऽयं यथादर्शितेन 'देवतान्तराभावात्' इति वचनेनाभिसंहित इति ध्येयम्।

1. अत्र लिङ्गादिकमपि प्रातिपदिकार्थ इति वैयाकरणमतमवलम्ब्य पुंस्त्वस्य प्रातिपदिकार्थत्वाद् ग्रहत्वादेरिव विवक्षा कार्येति पूर्वपक्षाशयष्टीकायामुक्तः। सिद्धान्ताशयस्तु अभ्युपेत्यवादेन तदङ्गीकारेऽपि तस्य विवक्षा न युक्ता वाक्यभेदापत्तेरिति। पञ्चकं प्रातिपदिकार्थ इति पक्षोऽप्यभ्युपेत्यवादेन वार्त्तिककाराणां संमत एव ज्ञायते, 'अन्यैस्तु धात्वर्थः सामीप्येनोपकारतः'

अद्रव्यत्वाच्च स्त्रिया न यागानुष्ठानं सम्भवति। तेनास्याः सामर्थ्याभावादपि नास्त्यधिकार इति।

सिद्धान्तस्तु यद्यपि तावत् प्रातिपदिकार्थो लिङ्गम्, तथाप्युद्दिश्यमानविशेषणत्वादयुक्तं विवक्षितुम्। उद्देश्यस्य हि विवक्षा चमसाधिकरणे प्रतिपादिता, न तु तद्विशेषणस्यापि। [1]न च प्रातिपदिकार्थसामान्याद्विवक्षाङ्गीकर्तुं युक्ता, वाक्यभेदापत्तेः। किमुत यदा विभक्तिविकाराणां टाबादीनां च[2] लिङ्गमभिधेयमन्वयव्यतिरेकाभ्यां न प्रातिपदिकस्येति स्थापितम्। तस्माल्लिङ्गस्याविवक्षितत्वात् फलार्थित्वोपस्थापितमनुष्यजातिमात्राधिकारात् स्त्रिया अप्यधिकारः। न चास्या द्रव्याभावः, कर्तनादिभिरर्जनसम्भवात्। तथा दायोऽप्यस्याः स्मर्यते—"पुत्राभावे तु दुहिता[3] तुल्यसन्तानदर्शनात्", "स्त्रीधनं दुहितॄणाम्" इत्यादिभिः।

किञ्च, यदपि पत्यार्जितं तदपि तस्य तस्याश्च साधारणमेव, पाणिग्रहणकाल एव वचनेन दम्पत्योर्द्रव्यसाधारण्यं प्रतिपादितमेव "धर्मे चार्थे च कामे च नातिचरितव्या" इति। तथा "पाणिग्रहणाद्धि सहत्वं कर्मसु। तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च" इति। लिङ्गं च भवति "पत्नीति हि [4]पारिणाह्यस्येष्टे पत्न्यैवा[5]नुमतं क्रियते" इति। "भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः" इत्येतत्तु

---

इति वचनात्। तन्त्ररत्ने पूर्वपक्षसिद्धान्तयोस्तथैवाशयं व्याख्याय मुख्यपक्षे लिङ्गस्य प्रातिपदिकार्थत्वं नास्तीत्युक्तम्। तस्माद् लिङ्गप्रातिपदिकार्थाभिप्रायेण पूर्वपक्षप्रवर्तनं तन्त्ररत्ने दोष इति प्रभावल्युक्तमलग्नकमेवेति बोध्यम्।

१. 'न च' नास्ति—ख० ग०।

२. 'च' नास्ति—क०।

३. 'तु दुहिता' नास्ति—ख०।

४. पारिणेयस्य—क० ख० ग०।

५. पत्यै वा—क० ख० ग०।

बहुभिः स्मृतिवचनैर्विरुद्धत्वादस्वातन्त्र्यपरं व्याख्येयम् । एकदेशिनां तु नियोगस्य सर्वप्रधानत्वाद् नियोज्यो यागं प्रति प्रधानभूतोऽपि तं प्रति गुणत्वेनोपादीयमानत्वाद् विवक्षितलिङ्गः स्यात् । ननु कर्त्रवस्थागतं लिङ्गं न नियोज्यं नियन्तुमर्हति ? नैवम्, तृतीया हि कर्तृगतं लिङ्गमाह, प्रथमा तु प्रातिपदिकार्थमात्रगतम्। नियोज्यश्च प्रातिपदिकार्थ इति तद्गतं लिङ्गमुपादेयगतत्वाद्विवक्षितं स्यात् । अपि च, कर्तृगतत्वे सुतरामुपादेयगतत्वेन[1] क्रियाङ्गतयैवाख्यातगतसंख्यावद्विवक्षितं स्यात् । अङ्गवशेन[2] चाधिकारव्यवस्थानादेकस्यैव पुंस एवाधिकारः स्यादित्यास्तां तावत् ॥ ६ ॥

एवं तावदपर्यवसितेऽस्मिन्नधिकरणेऽस्यैव स्थेम्नेऽन्तरा चिन्तान्तरं प्रस्तूयते—स्त्रीपुंसयोः पृथक् सह वानुष्ठानमिति । तत्र पृथक्त्वे सत्यवैद्यत्वात् स्त्रिया नाधिकारः सिध्येत्, सहत्वे तु सिध्यत्यधिकार इति ।

( ४—दम्पत्योः कर्मसु सहाधिकाराधिकरणम् )

## स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ सि०

यद्यपि कामपदे लिङ्गवद्वचनमप्यविवक्षितम्, तथाप्याख्यातोपात्तसंख्या गुणभूतोपादेयकर्तृपरिच्छेदकत्वेन विवक्षितेति वक्ष्यते । तस्माद्दम्पती पृथक् पृथग् यजेयाताम्, एकवचनस्य सहानुष्ठाने विरोधादिति प्राप्ते सिद्धान्तितम्—**वचनादैककर्म्यमिति** । तत्र वचनं दर्शयति **"पत्न्याज्यमवेक्षते यजमानश्च"** इति वचनम् । **तस्माद् द्विरवेक्षणसंस्कृतमाज्यं प्रयोगाङ्गम्**, प्रयोगवचनस्य सर्वाङ्गोपसंहारित्वात्, **एकावेक्षणे वैगुण्यं स्यात्** । ननु पृथगपि यजमानः पुमान् परिक्रयेण पत्नीमध्वर्य्वादिवद् आज्यावेक्षणार्थं[3] सम्पादयिष्यति, स्त्री च यजमानमत आह—**पत्नी च न या काचिद्या परिक्रयेण सम्पाद्येत** । किं तर्हि ? यज्ञ-

---

१. उपादेयगतत्वे—क० । एष पाठो नास्त्येव ग० ।

२. लिङ्गवशेन—क० ।

३. अवेक्षणार्थे—ग० ।

**स्वामिन्यां पत्नीशब्दं स्मरन्ति।** "पत्युर्नो यज्ञसंयोगे" इति हि स्वामिपर्यायात् पतिशब्दाद्यज्ञसंयोगोपाधौ पत्नीशब्दो व्युत्पाद्यमानो यज्ञस्वामिन्यां व्युत्पादितो भवति। **एवं यजमानशब्दमपि** स्वामिनि। स्मरन्तीत्यनुषङ्गः। यजमानशब्दो हि कर्त्रभिप्रायक्रियाफलविहितात्मनेपदोपात्तः[१] क्रियाफलभागिनः स्वामिन एव वाचको विज्ञायते। **तस्माद्यादृशं कर्तृत्वं संसृष्टरूपमितिकर्तव्यतापेक्षायामवगतं तादृशमेव प्रयोगवचन[1] उपसंगृह्णाति। तस्मात् सहितयोरेव कर्तृत्वं प्रयोगवचनेन विधीयते।**

अथ यदुक्तम्—एकवचनस्य विवक्षितत्वात् केवलयोरेव प्रयोग इति, तस्योत्तरं भाष्यकारेणोक्तम्—प्रतिकारकं क्रियाभेदादध्वर्य्वाद्यनुप्रवेशवत् पत्न्यनुप्रवेशेऽपि नास्त्येकवचनविरोध इति। तदाक्षिपति—**अध्वर्य्वाद्युपन्यासस्त्वयुक्तः।** उपन्यासो यो दृष्टान्तः सोऽयुक्तः। **कथम्? व्यापारान्तरेऽध्वर्य्वादीनां कर्तृत्वात्तत्रैकवचनस्य नास्ति विघातः। पत्नीयजमानयोस्तु ऋत्विगानमने देवतोद्देशे च व्यापारः, स एक इति** तस्मिन् द्वाभ्यां सह क्रियमाणे **सत्येकसंख्या विरुध्यते। तस्माद्यद्येकः** पुमान् देवतोद्देशेन द्रव्यपरित्यागं **कुर्यात्, इतरा** तु पत्नी अध्वर्य्वादिव**दयाजमानम्[2], नैवं विरोधः स्यात्।** न तु तदस्ति। **तस्माद् द्वयोः कर्तृत्वस्य तुल्यत्वा**दस्त्येव **विरोधः।** स्वयमेव च भाष्यकारेण तुल्यव्यापारत्वं दर्शितम्—[२]द्वादशशते एकेन षट्पञ्चाशदपरेणापि षट्पञ्चाशदिति। दक्षिणावयवभेदेऽपि हि नैव व्यापारस्य दक्षिणादानद्वारेणाध्वर्य्वादीन् प्रति प्रयोजकत्वस्य भेदः सिद्ध्यति।

कश्चित्तु व्यापारभेदसिद्ध्यर्थमुपस्कारेण भाष्यं व्याचष्टे—यदि द्वादशशते एकेन

---

1. प्रयोगवचन इति। उच्यतेऽनेनेति वचनः। प्रयोगवचन इति प्रयोगविधिरित्यर्थः।

2. इतरो यजमानमिति पूनामुद्रितो मूलपाठोऽयुक्तः, व्याख्याविरोधात्।

१. पदोदात्तः—ख० ग०।

२. द्वादशे शते—क०। द्वादश वा शते—ग०।

षट्पञ्चाशदपरेण षट्पञ्चाशदिति विभागः स्यात् ततः स्यादेकव्यापारतया संख्याविरोधः। पत्नीव्यापारस्त्वन्य एवानुमतिलक्षणः। दाता तु यजमान एव कृत्स्नस्यापि द्वादशशतस्येति। यथा हविष्प्रदानमपि पुंस एव, पत्न्यास्तु तत्राप्यनुमतिरेवेति। तदयुक्तम्, नह्यनुमन्तृत्वे पत्न्याः किञ्चन प्रमाणमस्ति। किञ्च, सत्यपि व्यापारभेदे यदि 'स्वर्गकामो यजेत' इत्यत्र फलवाक्येऽनुपात्तस्य फलार्थत्वाभावाद् द्विविधस्यापि व्यापारस्य तन्त्रेणाभिधानं स्यात्ततो द्विकर्तृकस्यापि व्यापारस्य विचित्रस्यापि युगपदभिधानात् "क्षौमे वसानावग्निमादधीयाताम्" इतिवद्भवितव्यमेव द्विवचनेनेत्येकवचनेन विरोधः। अथ पुंव्यापारस्यैवोपादानं फलवाक्ये न स्त्रीव्यापारस्य, तत्र[1] स्त्रीव्यापारस्य फलवाक्येनानुपात्तस्य फलार्थत्वाभावाद् वचनान्तरं[2] सदपि क्रत्वर्थतयैव [3]पत्न्यनुमतिं विदध्यादिति दत्ततिलाञ्जलिः स्त्र्यधिकारः स्यात्। अथाधिकारो वचनान्तरेणापि तस्याः सिद्ध्यतीत्युच्यते, तथा सति स्वर्गकामपदगतलिङ्गस्याविवक्षाप्रतिपादनमनर्थकं स्यात्, विवक्षितेऽपि तस्मिन् वचनान्तरेणैवाधिकारलाभात्। तस्मात् 'इदं तावदयं प्रष्टव्यः' इत्यादि 'यथाध्वर्युः' इत्यन्तं भाष्यं नातीव युक्तं परमतव्याख्येयम्। **अवश्यं च पत्न्या सह यष्टव्यमित्यादिस्तु युक्तोऽयं ग्रन्थः। कथम्? उद्वाहकाल एवानयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितम्, "धर्मे चार्थे च नातिचरितव्या" इति** प्रतिपादितत्वात्। ततः किमित्यत आह—**यस्त्यागः स इतरेतरसंसृष्टयोरेव** दम्पत्योः, नहि साधारणमेकेन त्यक्तुं शक्यते।

एवमपि **कथमेकवचनम्? उत्तरम्—द्वयोश्चैतयोः संसृष्टा कर्तृता। तत्रैकवचनमुपपद्यत एव संसर्गाभिप्रायम्।** कर्त्रेकत्वेन ह्येकवचनं न[4] द्रव्यैकत्वेन। इह चाग्नीषोमयोरिव देवतात्वं भिन्नयोरपि दम्पत्योः संसृष्टद्रव्ययोः

---

१. तत्र व्यापारस्य–ग०। नास्त्येव–क०।

२. द्विवचना–क०।

३. पत्न्या–क०।

४. 'न' नास्ति–ग०।

पृथक् स्वतन्त्रीभवितुमप्रभवतोरेकमेव स्वातन्त्र्यलक्षणं कर्तृत्वं न तु सत्रिवत् कर्तृभेद इति युक्तमेकवचनम्। सत्रिणां हि पृथग्द्रव्यतया पृथगेव कर्तृशक्तिः। वाचनिकानेककर्तृकत्वसिद्ध्यर्थं तु कर्तृणां साहित्यम्, इह तु सहैव कर्तृत्वमिति विशेषः। तस्माद्युक्तं संसर्गाभिप्रायमेकवचनम्। **मिथुनकारकत्वाभिप्रायं वा** एकवचनम्। एकं हि मिथुनं दम्पती। मिथुनपरं च स्वर्गकामपदमितिकर्तव्यतालोचनयावगतमिति तदभिप्रायकमेकवचनमिति।

ननु साधारणमपि धनं विभज्य पृथगिज्या सम्भवत्येवात आह—**तयोश्च विभागः प्रतिषिद्धो 'न भर्त्रा सह विभजेत्'इति**। तस्मान्न विभज्य प्रयोगः। वैगुण्यमपि च पृथक् प्रयोगपक्षे प्रागेवोक्तम्, पत्न्याज्यमवेक्षते यजमानश्चेति वचनविहितावेक्षणद्वयस्य स्वामिद्वयकर्तृकस्य प्रयोगवचनेन समुच्चितस्य ग्रहणात्, स्वामिभ्यां समुच्चिताभ्यामवेक्षितस्याज्यस्य कर्माङ्गत्वात्। तथा "मेखलया यजमानं योक्त्रेण पत्नीम्" इत्यादिवचनाच्च। तस्मादितिकर्तव्यतालोचनया द्रव्यसाधारण्याद्, विभागप्रतिषेधात् धर्मे चार्थे च नातिचरितव्येति वचनाच्च संसर्गाऽभिप्रायमेकवचनमिति। **तस्मान्नास्ति भिन्नयोः कर्तृता**। एवं च यजमानविद्वत्तयैव पत्न्या अपि कार्यसिद्धेर्नाविद्वत्तयानधिकारस्तस्या इति। स्थितादुत्तरम्। ननु क्रीतत्वादद्रव्यत्वात् स्त्री कथमधिक्रियते? उच्यते, श्रुत्या तस्या अप्यधिकारावगमात्, स्मृतिवचनैश्च बहुभिर्वैदिकैश्च लिङ्गैर्द्रव्यवत्तावगमात् "दिवि ज्योतिरजरमारभेताम्" इति द्वयोरपि फलसम्बन्धावगमाचास्त्येव स्त्रिया अप्यधिकार इति ॥ १७ ॥

[ ५–एकस्यैव पुरुषस्य स्त्रीसद्वितीयस्याधानेऽधिकाराधिकरणम् ]

## द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥ पू०

अनन्तरसङ्गतिमाह—**यजेतेति संख्या मिथुनाभिप्राया**। मिथुनग्रहणमुपलक्षणार्थं [1]कारकशक्तेरपीति। तेनैव न्यायेनाधानेऽपि **प्राप्तं वसानाविति मिथुनद्वयम्**। **तन्निवार्यते**। **अत एव पूर्वः पक्षः—यदादधीयातामिति** प्रकृतमाधानमनूद्य **तद्वसानावित्यौ**कारान्तवाच्यं पुंद्वयं विधीयते, वसन-

1. कारकशब्दोक्तेरपीति–ख०।

मप्यर्थप्राप्तमनूद्यते । ननु क्षौमशब्दार्थस्याप्राप्तत्वात् तस्यैव विधानं युक्तं न पुंद्वयस्यात आह—**आधाने** हि **द्वित्वविधाने** सति **धात्वर्थे किञ्चिद्विहितमिति श्रुत्यनुग्रहः** स्यात् । ननु क्षौममप्याधाने एव विधीयते, अतस्तत्राप्यस्त्येव श्रुत्यनुग्रहः । तत्राह—**इतरत्रापि** पक्षे **यद्याधाने क्षौमं विधीयते, तत्र क्षौममधिकरणत्वेन प्राप्नोति** । क्षौमशब्दो ह्यादधातिनाऽन्वीयमानः सप्तम्येकवचनान्तः स्यात्, अन्यथान्वयायोगात् । अतश्च क्षौमस्योपरि अग्निराधेयः स्यादित्यनिष्टापत्तिः । **अथ वसने क्षौमं विधीयते** नाधाने, **ततः क्षौमं वसनमात्राङ्गं** सदाधानस्यानङ्गत्वाद**नर्थकं** स्यात् ।

किञ्च, **वसानप्रातिपदिकस्यैवौकारेण** स्वपदोपात्तेन **श्रुत्या सम्बन्धः** । एवशब्दो भिन्नक्रमः, औकारेणैव श्रुत्या सम्बन्ध इति । **पदान्तरत्वात्तु क्षौमसम्बन्धो वाक्येन** स्यात्, तच्च **दुर्बलं** श्रुतेः । किञ्च, तादृशस्य वाक्यगम्यस्य क्षौमवसानसम्बन्धस्यादधातेः परेण विधिप्रत्ययेन परामर्शादत्यन्तं वाक्यं स्यात् । नहि तदा धात्वर्थे किञ्चिद्विधीयते, नापि धात्वर्थोऽन्यत्र, तेन विधेयोऽपि क्षौमवसानसम्बन्धो वाक्यगम्यः; विधिरपि वाक्येनेति । नैतद्युक्तमङ्गीकर्तुम् । मत्पक्षे तु श्रुत्यवगतं पुंद्वयं धात्वर्थे श्रुत्यैव विधीयत इति ।

ननु नौकारस्य पुंद्वित्वमभिधेयम्, किं तर्हि पुंस्त्वं द्वित्वं च । तच्च द्वयमपि प्राप्तमेवाधाने [1]**सजानिना** पुंसा क्रियमाणे । ततश्च क्षौमविधिरेवाप्राप्तत्वाद्युक्तोऽत आह—**वसानाविति** **संख्यासंख्येय**योर्द्वित्वपुंस्त्वयोरेकशब्दाभिधेययोः **सम्बन्धः** शब्देन गम्यते । तत्र [2]**संख्यया नान्यत् संख्येयं ग्राह्यम्**, किन्तु पुमानेव । तथा **संख्येयेन च नान्या संख्येति** द्वयोरप्येतयोरितरेतर**नियमः, यथारुणैकहायन्योः** । **तस्माद् द्वावत्र पुमांसावाधातारौ प्राप्तौ** । संख्यापूरणार्थं तु **स्त्रीग्रहणे** क्रियमाणे सति श्रुतिप्राप्तः **संख्यासंख्येय**योर्द्वित्वपुंस्त्वयोः **सम्बन्धो बाध्येत** । कथं बाध्येत यावता स्त्रीग्रहणेऽपि पुंसोऽपि विद्यमानत्वादबाधित एव द्वित्वपुंस्त्वसम्बन्धः ? अत आह—**द्वितीयस्य पुंसोऽस्ति**

१. 'जायया सह वर्तमानः सजानिस्तेन' इति क० टिप्पणी ।
२. संख्यायाः–ख० ।

**पर्युपस्थापक** औकारः। पुमन्विते हि द्वित्वे विधीयमाने सजातीये संख्यानिवेशाद् द्वितीयोऽपि पुमानेव प्रतीयते। **यथा घटावानीयेतामित्युक्ते द्वितीयो घट एवानीयते नाश्वादिः, एवमिहापि। आह—वसानाविति नायं केवलः पुँल्लिङ्ग एव, स्त्रीपुंसयोरप्यभिधाता भवतीति** चोद्यभाष्यमनुभाष्य व्याचष्टे—अस्य द्विवचनस्यौकारान्तस्य **न पुंद्वित्वविशिष्टं द्रव्यमभिधेयम्**, कुक्कुटश्च कुक्कुटी च कुक्कुटाविति स्त्रीपुंसद्वित्वेऽपि प्रयोगात्। **न च स्त्रीपुंसद्वित्वविशिष्टं** द्रव्यमभिधेयम्। चशब्दोऽप्यर्थे। द्वौ पुरुषाविति पुंद्वित्वेऽपि प्रयोगात्। तस्माद् **उभयोरपि यत् सामान्यं तदस्य** वाच्यम्। किं तत्? **पुंस्त्वं द्वित्वं चेति। तच्च प्राप्तमेवाधाने न विधेयम्। तस्मात् क्षौमं विधीयत इत्येवमन्तर्णीत**सामान्याभिधानक्षौमविध्य**भिप्रायः परिचोदयति**—स्त्रीपुंसयोरप्यभिधाता भवतीति। पुंद्वित्वं ह्यप्राप्तत्वाद्विधिं प्रयोजयति। पुंस्त्वं [1]द्वित्वं च प्राप्तत्वान्न विधिं प्रयोजयति, द्वित्वमात्रं तु वसन्तादिविधिभिरेव प्राप्तं न विधानमर्हतीति क्षौमस्यैव विधानमिति भावः।

अथवा न सामान्याभिधानाभिप्रायमिदम्, किन्तु **शब्दार्थमेवोभयप्रकारं** स्त्रीपुंसद्वित्वं पुंद्वित्वं चेति **मन्यते,** उभयोः **प्रयोगदर्शनात्**। तत्रेह क्षौमस्य विधेयत्वाद् औकारः प्राप्तानुवादार्थः स्त्रीपुंसाभिधाय्येव भवतीति। **अत्रोच्यते—यत्र नार्थः प्रकरणं वा विशेषकं विधायकश्च शब्दो नानुवाद इति** परिहारभाष्यस्य **कोऽभिप्रायः?** पृच्छतश्चायमभिप्रायः—यदि यत्र सामर्थ्यं प्रकरणमनुवादकत्वं वा नास्ति, तत्र द्वौ पुमांसौ। इह तर्हि न द्वौ पुमांसौ स्याताम्। इह हि क्षौमस्य विधेयत्वात् प्राप्ते च कर्मण्यनेकगुणविध्ययोगादनुवादक एव वसानशब्दो न विधायकः। प्रकरणाच्च स्त्रीसद्वितीयस्य पुंसः प्राप्तिरिति स्त्र्येव द्वितीया स्यात्। कथं द्वौ पुमांसाविति। अभिप्रायं दर्शयति—**कुक्कुटावानय मिथुनं करिष्याम इत्यत्र सामर्थ्याद्द्वितीया स्त्री आनीयते, यत्र वा स्त्रीपुंसावधिकृतौ यत्र वौकाराभिधेयं प्राप्तत्वान्न विधीयते तत्र स्त्रीपुंसौ**

---

१. 'द्वित्वं च प्राप्तत्वान्न विधिं प्रयोजयति' नास्ति—ख० ग०।

**गृह्येते । इहैवं त्रितयमपि नास्ति ।** नन्विहापि क्षौमस्य विधेयत्वादौकाराभिधेयं प्राप्तमनूद्यत इत्युक्तम् ? तन्नयुक्तम् । उक्तं ह्येतद् वाक्यप्राप्तक्षौमविधिभावेन श्रुत्यौकाराभिधेयस्य विधानमिति । **अतः** कारणत्रयाभावा**दौकारः** स्वशक्त्या **द्वितीयं पुमांसं शक्नोति पर्युपस्थापयितुं न तु स्त्रियम् ।**

ननु स्त्रीपुंसयोरपि प्रयोगात् कथमेकान्ततः पुमांसमवबोधयति न स्त्रियमत आह—**अन्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं चाभिधेयम् ।** एतदेव व्यनक्ति—**द्वयोरपि पुंसोः प्रयुक्तो** द्वौ पुरुषाविति । तथा **स्त्रीपुंसयोरपि** दृष्टः । **तत्रोभयो**र्वाच्यत्वेऽ**नेकशक्तिकल्पनाभया**दुभयानुवृत्ति **पुंस्त्वं द्वित्वं चास्य वाच्यमित्यध्यवसीयते ।** ततश्चारुणैकहायनीवत् परस्परनियमात् सजातीये च संख्यानिवेशाद् द्वितीयोऽपि पुमानेव भवतीत्यभिप्रायः । भाष्यकारेण यथाविग्रहमेकशेषेणार्थाभिधानाद्, विग्रहस्य च [1]वसानश्च वसाना चेत्येवं स्त्रीपुंसाभ्यामपि सम्भवात्, तत्र च स्त्रीत्वस्यापि श्रुतत्वादेकशेषेऽपि स्त्री श्रुतैव भवति; न तु पुंद्वित्वमात्रम् । अतः कथं पुंस एव संख्यापूरणार्थं ग्रहणमित्याशङ्क्योक्तम्—**युगपदधिकरणवचनतायामित्यादि** । तदनुभाष्य व्याचष्टे । **युगपदधिकरणवचनतायां द्वन्द्वस्मृतेरित्येवमादिना यथा** विग्रहपर्यालोचनयापि **संख्यापूरणी न गृह्यते स्त्री, तत् प्रतिपाद्यते । कथम् ?** धवखदिरावित्यादिद्वन्द्वे **धवशब्द आत्मीयमर्थमितरापेक्षं** खदिरापेक्षम**भिधत्ते** न केवलम्, **तथेतरोऽपि** खदिरशब्दः[2] स्वा**र्थमितरापेक्षं** [3]धवापेक्षं धवसहितमभिधत्ते, न केवलमिति । **ईदृशे ह्यर्थे द्वन्द्वः स्मर्यते ।**

तदनेन युगपदधिकरणवचनताया व्याख्यानं कृतम् । अधिकरणं शब्दस्य प्रतिपाद्यम् । तदनेकं यत्र युगपदुच्यते तत्रैव द्वन्द्वः । तेन धवखदिरावित्यत्र युगपदेव धवखदिरौ वक्तव्यौ न पर्यायेण पूर्वं धवः पश्चात् खदिर इत्येवम् । तेन धवशब्दो-

---

१. 'वसानश्च' नास्ति—ख० ।

२. 'शब्दः' नास्ति—क० ।

३. 'धवापेक्षं' नास्ति—ख० ।

ऽपीतरसहितस्वार्थाभिधायी, तथा खदिरशब्दोऽपि। तथा हि सति युगपदभिधानमनयोर्भवति। स्वार्थमात्राभिधाने तु शब्दपौर्वापर्यादर्थपौर्वापर्यमपि स्यात्। तच्च स्मृतिविरुद्धम्। वाक्यकारेण ह्युक्तं युगपदधिकरणे द्वन्द्वो भवतीति। न केवलं स्मृत्यैवायमर्थो गम्यते, किन्तु न्यायेनापीत्येतत्प्रतिपादनार्थं भाष्यं **द्विवचनबहुवचनोपपत्तेश्चेति**। तद् व्याचष्टे—**यदि धवशब्दः खदिरनिरपेक्षमात्मीयमर्थमभिधत्ते, तत एकत्वात्तस्य द्विवचनबहुवचने [1]न स्याताम्, दृश्येते च द्विवचनबहुवचने। तस्मात्तुल्यं द्वितीयं प्रातिपदिकार्थमपेक्ष्य द्वित्वादिसम्भवो** नान्यथा। द्वित्वं ह्येकबुद्धिगोचरयोरर्थयोः प्रतीयते। तत्र यदि युगपदभिधानं नेष्येत, ततो धवखदिरावित्यत्र धवशब्दजनितायां धवबुद्धावतीतायां पश्चात् खदिरशब्देन केवलः खदिरः प्रत्याय्यमानो न द्वित्वेनान्वयमुपेयात्। तस्माद्युगपद्वचनम्।

अत्रैव वैदिकं लिङ्गं दर्शयति भाष्यकारः—**प्रमित्रयोर्वरुणयोरिति च दर्शनादिति**। तद्व्याचष्टे—**न द्वौ मित्रौ स्तः, न द्वौ वरुणौ**। तत्र प्रत्येकं **द्वित्वं नोपपद्यते** यदि युगपद्वचनं न स्यात्। **अन्योन्यापेक्षया तु घटते** द्वित्वम्, तस्मान्मित्रावरुणयोरित्यस्य द्वन्द्वस्य विग्रहेणार्थे कथ्यमाने प्रत्येकं द्विवचनप्रयोगदर्शनाद् युगपद्वचनता निश्चीयत इति। इतश्चैवमित्याह—**इतरेतरयोगे चार्थे द्वन्द्वविधानादिति**। तद्व्याचष्टे—**चकारः समुच्चयान्वाचयेतरेतरयोगसमाहारेषु वर्तते**। तत्र चार्थे द्वन्द्व इत्यविशेषोक्तेऽपि यतः **समुच्चयान्वाचययोर्नास्ति समासः, समाहारेतरेतरयोगयोरेव तु समासः, ततोऽपि युगपदधिकरणवचनतायामेव द्वन्द्व** एषितव्य इति। यदि चार्थमात्रे द्वन्द्वः स्यात् ततोऽहरहर्नी[नी]यमानो गामश्वं पुरुषमित्यादौ समुच्चयरूपचार्थसम्प्रत्ययात् काष्ठान्याहर शाकं चाहरेत्यन्वाचयरूपचार्थसम्प्रत्ययाच्च समासापत्तिरनिष्टापद्येत। तत्परिजिहीर्षया युगपदधिकरणवचनतायामेव द्वन्द्व एषितव्यः। तथा हि सति इतरेतरयोगसमाहारयोरेव समासो विहितो भवति। तयोरेव हि

१. 'न स्याताम्, दृश्येते च द्विवचनबहुवचने' नास्ति—ख०।

युगपदधिकरणवचनता भवति, न समुच्चयान्वाचययोरिति नातिप्रसङ्गः। अथ-वेतरेतरयोगे द्वन्द्वो विधीयते, न चाभिधानैक्यमन्तरेणेतरेयोगः सिद्धयति। परस्परसंयुक्तयोर्हि क्रियान्वय इतरेतरयोगः, पृथगभिधाने च समुच्चयवत् पृथगेव क्रियान्वयः स्यात्। तस्माद्युगपदधिकरणवचनतायां द्वन्द्व इति।

भवत्वेवम्, प्रकृते तु किमायातमित्यत आह—**द्वन्द्वापवादत्वाच्चैकशेष-स्येति**। तद् व्याचष्टे—**यो हि द्वन्द्वस्य धर्मोऽनेकेषामितरेतरयोगो नाम स एकशेषस्यापि** विद्यते। यथैव हि द्वन्द्वे धवखदिरावानयेत्यादौ इतरेतरयुक्त-मर्थद्वयं क्रियान्वयि गम्यते, तथा वृक्षावानयेत्यादावेकशेषेऽपीतरेतरयुक्तमेवार्थद्वयं गम्यते। तदुभयत्रापीतरेतरयोगस्तुल्यः।

**इयांस्तु** विशेषः—द्वन्द्वैकशेषयोरेकत्र द्वन्द्वे **शब्दश्चार्थश्च द्वावपि भिन्नौ** धवखदिराविति। **इतरत्र** त्वेकशेषे**ऽर्थो भिन्नः, शब्दस्त्वेक एव,** वृक्षाविति। एतच्चोपलक्षणार्थम्। न त्विदमेव तन्त्रम्, यदुत शब्दैक्यादेवैकशेष इति। एकार्थानां विरूपाणामप्येकशेषो वाक्यकारेणोक्तः—वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डाविति। तेनायमेवाभिप्रायः—यत्र शब्दश्चार्थश्च द्वावपि भिन्नौ तत्र द्वन्द्वः, धवखदिराविति। यत्र त्वन्यतरस्याप्यैक्यं यथाक्षाः पादा इति शब्दस्य, वक्रदण्डावित्यर्थस्य, तत्रैकशेष इति[1]। यद्येवं धवखदिरावित्यत्राप्येकशेषः स्यादेकार्थत्वात्, उक्तं हि युगपदधिकरणवचनतायां द्वन्द्व इति। [2]नानभिधानात्। नह्येतौ पर्यायशब्दौ, यत एकशेषः स्यात्। अपर्यायावेव त्वेतौ द्वन्द्वविषये लक्षणया परस्परापेक्षस्वार्थप्रतिपादकतया युगपदधिकरणवचनतां भजेते इति नास्त्येकशेषप्रसङ्गः। तेन यथैव द्वन्द्वे युगपदधिकरणवचनतया धवौ च खदिरौ चेति विग्रहः, तथैकशेषेऽपि वसानौ च वसानौ चेति विग्रहः। तदाह—**वसाना-वित्येकशेषत्वाद् द्वितीयेन पुंसा भवितव्यम्,** विग्रहेऽपि स्त्रीवचनस्य शब्द-

---

१. 'इति पर्यवसितम्' अधिकः—ख०।

२. 'ना' नास्ति—ख०।

स्याभावात्, पुंवचनस्यैव शब्दस्य तत्रापि भावात् । ततोऽपि[१] [२]पुमानेव द्वितीयो लभ्यत इति ।

कथं पुमानेव द्वितीयोऽत आह—**पुमान् हि श्रूयते** विग्रहे । शब्दद्वयेऽपि **द्विवचनश्रवणात् स इतरसव्यपेक्षः** । **तस्य** द्वितीयापेक्षायां शब्दद्वयेऽपीतरेतरसन्निधानात् **पुमानेव द्वितीयो** भवति । कुतः ? **पुंसो ह्यस्ति पर्युपस्थापकं** शब्दान्तरम् । एवं तस्यापीतरत्, **न तु स्त्रियाः** । ननु स्त्रीपुंसयोरपि वाचकमौकारान्तं पदमिति पाणिनिनोक्तं 'पुमान् स्त्रिया' इति । नेत्याह—**यत्र स्त्रीपुंसौ सहोच्चार्येते तत्र पुमान्[3] सद्वितीय इत्यौकारान्तः प्राप्नोति, स्त्रीसद्वितीयेत्येकारान्तः । तत्रौकारः प्रयुज्यमानः साधुः**, न त्वेकार इत्येवं पाणिनेर्वचनं **न** त्वौकारान्तस्य **स्त्रीपुंसौ वाच्याविति** । पुमान् शिष्यत इति वचनात् शिष्यमाणस्य पुंवाचित्वमेव[४] युक्तं न स्त्रीवाचित्वमिति । तस्मादाधाने पुंद्वयविधिः । ननूत्पत्तिवाक्य[५]शिष्टमेकत्वं न शक्यं बाधितुम् ? उच्यते—यदा ह्याधाने वसने वा न क्षौमं विधातुं शक्यमिति स्थितम्, तदानन्यपरेण वाक्येन द्वित्वस्य विधानादुत्पत्तिवाक्यस्थमेकत्वं निर्देशमात्रार्थं न विधानार्थमिति न विरोधः । क्षौमशब्दोऽपि गौण्या वृत्त्या मलिनतामर्थप्राप्तस्य वसनस्य प्रतिपादयन् टुक्षु शब्द इत्यस्माद्व्युत्पाद्यमानः शब्दवत्त्वं वा प्रतिपादयन्ननुवाद इति मन्यते ॥ २२ ॥

## गुणस्य तु विधानत्वात् पत्न्या[1] द्वितीयशब्दः स्यात् ॥२३॥ सि०

**क्षौमशब्दस्य तावदनुवादो न घटते** । कथम् ? **अप्राप्तत्वात्** । नहि मुख्यस्य क्षौमस्य प्राप्तिरस्ति यदनूद्येत । **न च लक्षणया** वृत्त्या मलिनत्वा**नुवादः सादृश्येन वा** गौण्या वृत्त्येत्यर्थः । तत्र लक्षणाभावे कारणमाह—**नहि क्षौमं**

1. सर्वेषु कोशेषु 'पत्न्याम्' इति सप्तम्यन्तः पाठो दृश्यते ।
१. 'वसानौ वसानौ चेति' अधिकः–ख० ।
२. पुमानेवेति वाक्यं नास्ति–ख० ।
३. 'शिष्य' अधिकः–ख० ।
४. 'एव' नास्ति–क० ।
५. वाक्यस्थ–क० ।

**मलिनत्वेन विनात्मानं न लभते येन तल्लक्षयेत्। यथा शुक्लादिगुणो द्रव्येण विना न भवतीत्यविनाभावाद्** [1]**द्रव्यं लक्षयति, नैवमिह। विनापि हि मलिनत्वेन** निर्णिक्तस्य **क्षौमस्य सद्भावोऽस्त्येव। अतो नास्ति लक्षणया मलिनतावबोधः।** अथासत्यप्यविनाभावे **विद्यते** तावत् कदाचित् **क्षौमे मलिनते**त्येतावता लक्षणाश्रीयते। दूषयति—**सा हि मलिनता कार्पासादावपि विद्यते।** ततः किमित्यत आह—**असाधारण्येन हि लक्षणा भवति।**

अयमर्थः—लक्षणा तावदविनाभावनिमित्ता, एकवाक्यत्वनिमित्ता वा। यथा जातिगुणशब्दैर्द्रव्यस्याविनाभावाल्लक्षणा; यथा च गामानयेत्यादौ एकवाक्यताबलेन पदार्थाभ्यां परस्परान्वितरूपस्य लक्षणा। न त्विह तदुभयमप्यस्ति। असत्यपि चास्मिन् यद्यसाधारण्यं मलिनतायाः क्षौमे स्यात् ततोऽपि कथञ्चित्तल्लक्षणा सम्भाव्येत; न तु तदप्यस्ति, कार्पासादिसाधारणत्वादिति। तस्मान्न तावल्लक्षणा। **न**[2] **च सादृश्यं** प्रवृत्तिहेतुः शब्दस्य, गौणत्वमपि नोपपद्यत इत्यर्थः। कथम्? [3]**उपपद**भूतस्य परश**ब्दस्याभावात्।** परशब्द**सामानाधिकरण्येन हि भवति**

1. अविनाभावादिति। अत एव वार्तिककारपादैः "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते" इत्युक्तम्। ननु नियतसंबन्धाभावेऽपि 'कुन्ताः प्रविशन्ति' इत्यादौ लक्षणा दृश्यत इत्याशङ्क्य तथाप्यसाधारण्यं लक्षणायामपेक्षितम्। तत् प्रकृते नास्तीति परिहरति—अथेति।
2. 'न च सादृश्यं हेतुः' इति मूलम्। तत्र 'हेतुः' इत्यस्य शब्दप्रवृत्तेरित्यादिः। यथा 'सिंहो देवदत्तः' इत्यत्र शौर्यादि सिंहसादृश्यं देवदत्ते गौण्या वृत्त्या सिंहशब्दस्य प्रवृत्तौ हेतुः, तथात्र क्षौमशब्दस्य सादृश्यं हेतुरस्तु। उक्तं हि वार्तिके "लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति। सादृश्यसंबन्धनिबन्धना लक्षणा गौणीत्यर्थ इति शङ्का। एवं शङ्किते तस्य परिहारो न चेत्यादि मूलमित्यभिप्रायेण व्याचष्टे—गौणत्वमपि नोपपद्यत इत्यर्थ इति।
3. 'उपपदाभावात्' इत्यादेः परिहारग्रन्थस्यायमाशयः—गौणी वृत्तिरपि लक्षणैव। किन्तु सिंहशब्दो यदा सादृश्याद् गौणमर्थं लक्षयति, तदा तस्य

**सादृश्यम्, यथा सिंहो देवदत्त इति** । देवदत्तशब्दसामानाधिकरण्यात् सिंहशब्दस्य गौणत्वम् । न त्विह क्षौमशब्दस्य परशब्दसामानाधिकरण्यमस्तीति मुख्यार्थपरित्यागे कारणाभावान्न गौणत्वमिति । यदि तु मा भूतां लक्षणा गौणी वा, अवयवप्रसिद्ध्या तु शब्दवत्त्वं प्रतिपादयन्ननुवादो भवतीत्युच्यते, तत्राह— **अवयवप्रसिद्धिरपि समुदायप्रसिद्ध्या बाध्यते । तस्मादनुवादाभावाद्विधेयमेतत्**, अन्यथा प्रमादपाठः स्यात् । यत्तूक्तम्—आधाने विधीयमानं क्षौममधिकरणत्वेन प्राप्नोति, वसने तु विधीयमानमाधानानङ्गत्वादनर्थकं स्यादिति, तत्राह—**यः प्रकरणगतः पुरुषस्तस्यार्थप्राप्ते वसने क्षौमं नियम्यते** । तेन साक्षादाधानं प्रत्यविधानान्नाधिकरणत्वम्, वसने च प्रकरणसम्बन्धिनि विधानान्नानर्थक्यम् । एतदेव व्यनक्ति—**स हि प्रकरणगतः** पुरुषः **शक्नोत्यपूर्वं लक्षयितुम् । तत्रैतद्विधीयते न पुरुषस्वरूपे** येनानर्थक्यं स्यात् । **यथा** व्रीहीन् प्रोक्षतीत्यत्र **व्रीहयः शक्नुवन्त्यपूर्वं लक्षयितुम्, एवमिहापि** वसानशब्दलक्षितेऽपूर्वसाधने विधीयमानं क्षौमं नानर्थकं स्यादिति ।

ननु औकारान्तवाच्यं पुंद्वयमप्राप्तत्वाद्विधातव्यम् । तद्विधाने च क्षौमविधिर्न सम्भवति, वाक्यभेदापत्तेः । तस्माद्यथाकथञ्चिदनुवाद इत्यत आह—**वसानाविति । उत्पत्तिवाक्ये** "वसन्ते ब्राह्मणोऽग्नीनादधीत" इति **स्त्रीपुंसयोः प्राप्तत्वादनुवादः** । नह्यौकारान्तस्य पुंद्वित्वमभिधेयं किन्तु सद्वितीयः पुमान् । तत्र यदि विधायकः शब्दः स्यात्, ततो द्वितीयोऽपि पुमानेव स्यात् । इह तु क्षौमस्य विधेयत्वाद् वसानावित्ययं शब्दः स्त्रीपुंसयोः प्राप्तयोरनुवादः । न च वाक्यार्थविधानमपि दोषः, श्रुत्यर्थविधाने क्षौमानर्थक्यप्रसङ्गात् । ननु पूर्वाधिकरणन्यायेन

---

लक्ष्यस्य वाचको देवदत्तशब्दोऽपि सह प्रयुज्यते समानाधिकरणः, यथा 'सिंहो देवदत्तः' इति । लक्षणायां तु नैवम् । नहि गङ्गाशब्देन तीरलक्षणायां 'गङ्गायां तीरे' इति प्रयोगो भवतीतीयन्तमेव भेदमभिप्रेत्य मीमांसकास्ते भेदेन व्यवहरन्ति । तदिह क्षौमपदलक्ष्यगौणार्थवाचकपदसामानाधिकरण्ये सत्येव गौणत्वं नान्यथेति ।

दम्पत्योरेककर्तृत्वात्तदभिप्रायमादधीयातामिति कर्तृद्वित्वं न घटते ? उच्यते—क्षौमशब्दस्य मुख्यस्याबाधादधिष्ठानाभिप्रायं द्विवचनं भविष्यतीत्यदोषः ॥२३॥

[ ६—याजमानमिति समाख्यातानां पत्नीकर्तृकत्वाभावाधिकरणम् ]

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥२४॥ सि०

सहप्रयोगे दम्पत्योः स्थिते तद्विशेषश्चिन्त्यते। तत्रार्त्विजेषु[ ज्येषु ] द्वयोरपि दक्षिणादानद्वारं कर्तृत्वम्, याजमानेषु तु विचारः। तत्र दम्पत्योरुभयोरपि साधारणाद्यजमानप्रातिपदिकाद् व्युत्पादितेन याजमानसमाख्यानेन सर्वस्योभयकर्तृत्वे प्राप्ते सिद्धान्तमाह—तस्या यावदुक्तमाशीर्ब्रह्मचर्यमिति। तत्राशीःशब्देन 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादिमन्त्रवचनमुच्यते। तच्चायुक्तम्, अविद्यायाः स्त्रिया मन्त्रवचनासम्भवात्। अत आह—**आशीःशब्देन केशश्मश्रुवपनादयः संस्कारा लक्ष्यन्ते।** आदिशब्देनाञ्जनाभ्यञ्जनस्नानादीनां ग्रहणम्। केशश्मश्रुवपनग्रहणं च सम्भवत्संस्कारोपलक्षणार्थं न तु स्वरूपेण विवक्षितम्। नहि पत्न्याः केशश्मश्रुवपनमस्तीति द्वितीये व्याख्याने वक्ष्यामः। त उभयोरपि भवन्ति। अन्यतरेण [1]क्रियमाणेष्वितरस्य संस्कारहानिः स्यात्। लिङ्गमपि तेषु संस्कार्यगतत्वादविवक्षितम्। तस्मादुभयोः संस्काराः। तथा ब्रह्मचर्यमपि।

[2]ननु पर्वणि ब्रह्मचर्यं पुरुषार्थम्, अतः कथं तस्य क्रत्वर्थत्वाङ्गीकारेणोभाभ्यामनुष्ठानमुच्यते ? अत आह—**पुरुषार्थत्वेन ब्रह्मचर्यमुक्तम्। तथा क्रत्वर्थत्वेनापि दृश्यते**[3] प्राकरणिकेन वाक्येन। ननु पुरुषार्थब्रह्मचर्यानुवादमात्रं तद्वाक्यं स्यात् ? अत आह—**एवं चेद्ब्रह्मचर्येण क्रतोर्वैगुण्यम्।** एवं चेदिति। यदि क्रत्वर्थं ब्रह्मचर्यं विधीयेत, ततस्तदकरणे क्रतोर्वैगुण्यं स्यात्। **इतरथा** यदि क्रत्वङ्गतया न विधीयेत, ततस्तस्य केवलपुरुषार्थत्वात्तद्धानावपि न क्रतोर्वैगुण्यं स्यात्। तेन संयोगान्तरत्वाद् विधिरेव प्राकरणिकं वाक्यं नानुवाद इति युक्तं

---

१. अक्रिय—ख०।

२. 'ननु पर्वणि ब्रह्मचर्यमपि' अधिकः—ख०।

३. घटते—ग०।

ब्रह्मचर्यग्रहणमिति। तेनाशीर्ब्रह्मचर्यं च यावदुक्तं चाऽऽशावेक्षणादि पत्न्याः स्यात्, ततोऽन्यत्तु याजमानं पुंस एव। कथम्? तत्र **शुक्रं यजमानोऽन्वारभत इत्येव-मादिषु** तावत्तस्य यजमानस्योपादीयमानत्वात् **पुंल्लिङ्गं विवक्षितमिति** पुंकर्तृत्वं स्पष्टम्। **याजमानकाण्डेऽपि ये समाख्यायन्ते, तेऽपि यज-मानकर्तृका एव।** कथम्? **तत्र ये मन्त्रास्ते** तावद्यजमानेनैवोच्चार-**णीयाः। कथम्? स हि विद्वान**ध्ययनवत्त्वात्, **इतरा त्वविद्या। अन्यथा-नुपपत्त्याऽध्येष्यत इति चेत्।** तस्या हि यजमानसमाख्यावशान्मन्त्रोच्चारणं कर्तव्यम्। तच्च नान्तरेणाध्ययनमुपपद्यत इत्यध्ययनं तस्याः कल्प्यत इति।

निराकरोति–**सापि यजमानविद्वत्तयान्यथानुपपत्तिः क्षीणा।** कथमित्याह–**तदीयेनैवाध्ययनेन** क्रतोर्निराकाङ्क्षत्वात्। मन्त्रोच्चारणे हि गुणभूतः कर्ता। ततश्च येन केनचिदेकेन कर्तव्यं मन्त्रोच्चारणं प्रसिद्धाध्ययनेन पुंसा सिद्धं नाध्ययनं स्त्रियाः कल्पयितुमर्हतीति। ननु कथं पुंसः प्रसिद्धमध्ययनम्, यावता 'स्वाध्यायोऽध्येतव्यः' इत्यविशेषवचनात् स्त्रीपुंसयोरविशिष्टमध्ययनम्। न चोपनयनप्रक्रमाधीतमध्ययनमुपनीतपुंविषयत्वात् पुंविषयमिति युक्तम्, उपनयने "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यत्र ब्राह्मणस्य संस्कार्यत्वेनाविवक्षितलिङ्गत्वात् सहैवो-पनयनेन स्त्रीपुंसयोरविशिष्टमध्ययनम्। अत आह–**न प्रतिषिद्धमध्ययनं करि-ष्यति** सामान्यविहितमध्ययनं धर्मशास्त्रकारैः स्त्रियाः प्रतिषिद्धं पुंविषयं भवतीति सिद्धं मन्त्रवत्सु कर्मसु पुंस एव कर्तृत्वम्। अमन्त्रकेष्वपि पुंस एवेत्याह–**एवं चेद्याजमानमिति। अन्यतरस्मात्तद्धितोत्पत्तौ कृतायां येऽप्यमन्त्रवन्तः पदार्थास्तानपि यजमान एव करिष्यति।**

एतदेव व्यनक्ति—**यद्यपि तेष्ववैद्यत्वं नास्ति दोषः, तथापि** मन्त्र-वत्कर्मानुरोधेन याजमानसमाख्यागतस्य **यजमानेन केवलेन तद्धितस्योत्पाद्य-मानत्वात् पत्न्या अननुष्ठानम्।** न त्व[नन्व]मन्त्रकेषूभयोः कर्तृत्वाविरोधाद्यज-मानायजमानशब्दयोः कृतैकशेषयोस्तद्धितः कस्मान्न भवतीत्यत आह—**न च पत्नीयजमानयोः कृतैकशेषयोस्तद्धितः, प्रमाणाभावात्।** अमन्त्रकाणामपि

पुंकर्तृत्वाविरोधात्, एकवचनान्तादेव यजमानशब्दात् समाख्याव्युत्पादनसम्भवान्न द्विवचनान्तात्तद्धितोत्पत्तिर्विरूपैकशेषाश्रयणमर्हतीति ॥ २४ ॥

## द्वयाधानं च द्वियज्ञवत् ॥ २२ ॥

एतदेवाधिकरणद्वयं विस्पष्टीकरणाय पुनर्व्याख्यायते—[1]**पूर्वाधिकरण एकवचनं मिथुनाभिप्रायं संसर्गकारकाभिप्रायं चे**[वे]**त्युक्तम्**। तेनेहापि **द्विवचनं तथैव द्वे कारकशक्ती द्वे वा**[2] **मिथुने ब्रवीतीत्यनेन प्रसङ्गेनारभ्यते**। वाशब्दार्थे चशब्दः। कर्तृसंख्या हि तिङाभिधीयते। दम्पती चैकः कर्तेति तदभिप्रायमादधीयातामिति द्विवचनं न घटते। तस्मात् प्रकृताधानसम्बन्धितया कर्तृद्वयमप्राप्तं विदधतानेन पुंद्वयमिद[3]मौकारान्तं वाच्यं[न्तवाच्यं] सपत्नीकं विधीयत इत्यस्य प्रसक्तस्यापवादार्थमिदमारभ्यतेऽधिकरणमिति। तदनेनाधिकरणस्य सङ्गतिः पूर्वपक्षहेतुश्च दर्शितः। ननु क्षौमस्याप्राप्तत्वाद् विधेयत्वम्, तद्विधौ च न पुंद्वयं शक्यं विधातुम्, वाक्यभेदप्रसङ्गात्। अत आह—**क्षौमाधानसम्बन्धो नास्ति, वसान**[4]**शब्दव्यवधानाद्** व्यवहितसम्बन्धस्यान्याय्यत्वात्। तस्माद्वसानपदोपात्तं पुंद्वयमाधाने विधीयते न क्षौमम्। इतश्चैवमित्याह—**वसानावादधीयातामिति सामानाधिकरण्यादुपपद्यते सम्बन्धः। क्षौमे आदधीयातामिति सामानाधिकरण्याभावाद् नास्ति सम्बन्धः**। अथ वैयधिकरण्येनैव सम्बन्ध इष्यते, तत्तावत्सम्भवति सामानाधिकरण्ये न युक्तम्। दोषान्तरं चाह—**सम्बध्यमानं चाधानस्याधिकरणं स्यात्**। तच्चानिष्टमिति।

शङ्कते— **क्षौमवसानसम्बन्धे** सति न [5]**सामानाधिकरण्यमधिकर-**

---

१. पूर्वाधिकरणमेक-क०।

२. च-ख०ग०।

३. 'इदं' नास्ति-क०।

४. शब्दा-क०।

५. समानमं-ख०।

**णदोषश्च नास्तीति चेत्**, यदि हि क्षौममाधाने विधीयते ततः सामानाधिकरण्येन सम्बध्यमानेन वसानेन क्षौमं वैयधिकरण्येन[1] सम्बध्यमानं बाध्येत, अधिकरणभावदोषश्च स्यात्। तत्तु वसने विधीयते, तद्विशिष्टस्य वसनस्य कर्तृद्वारेणाधानसम्बन्धात् सामानाधिकरण्यमविरोधादबाधकम्, अधिकरणत्वं च न प्रसज्यत इति। न सामानाधिकरण्यमिति न सामानाधिकरण्यं बाधकं विषयभेदादित्यर्थः। उत्तरम्—**वसनक्रिया कर्तुरुपसर्जनभूतत्वान्नान्येन सम्बन्धयितुं शक्यते**, नह्युपसर्जनस्य पदान्तरसम्बन्धो घटते। अथ प्रधानभूतेन कर्त्रैव क्षौमं सम्बध्यते, तत्राह—**कर्त्रापि नास्ति सम्बन्धः**। कुतः? नहि कारकाणां मिथः सम्बन्धः। अथ **वसनक्रिया कर्तुरुपसर्जनीभूतापि पुनर्विपरिवृत्य** क्षौमेण **सम्बध्यत इति चेन्न**, कुतः? **विधीयमाना हि क्रिया भाव्यमानत्वात्** कर्तव्यत्वात् **कारकैः सम्बध्यते, अविधीयमानायास्तु न भवति कारकैः सम्बन्धः**। कस्मादित्यत आह-**अविधीयमाने** हि वसने **क्षौमं सम्बध्यमानं लौकिकेऽपि स्यात्**। तत्राधानाङ्गत्वाभावाददृष्टार्थता क्षौमस्य **स्यात्**। तस्मान्न विपरिवृत्त्यापि सम्बन्धः।

**किञ्चास्मिन्** पक्षे **क्षौमवसनयोः सम्बन्धमादधीयातामिति** विधिः **कुर्यात्**। **तत्रात्यन्तं वाक्यं** स्यादिति श्रुतिबाधः। बाधमेव दर्शयति—**प्रत्ययो ह्युपश्लेषलक्षणया** प्रत्यासत्तिलक्षणया **श्रुत्या धात्वर्थं विधत्ते तदङ्गं वा किञ्चित्**। **इह तु** वसनाङ्गतया क्षौमे विधीयमाने **द्वयमपि न विधत्ते धात्वर्थं वा, धात्वर्थस्य वाऽन्यत्**, कुतः? **तत्पराया** धात्वर्थतदङ्गपराया विधिश्रुते**रभावात्**, आदधीयातामित्यस्याः क्षौमवसनसम्बन्धविधिपरत्वात्। तस्मात् श्रुतिबाधः। मत्पक्षे त्वाधानाङ्गतया वसानाविति पुंद्वये विधीयमाने धात्वर्थे किञ्चिद्विधानात् श्रुतिरनुगृहीता भवति। किञ्च, **वसानशब्दस्याप्येकपदोपात्तत्वादौकारेण श्रुत्या सम्बन्धः, क्षौमेण** तु सम्बन्धे **पदान्तरत्वात्**

---

१. वैयधिकरण्यं-ख०।

वाक्यम्। श्रुतिश्च वाक्याद्बलीयसी। तस्मात् क्षौमवसनसम्बन्धाभावात् द्वौ पुमांसावाधाने विधीयेते।

अत्र भाष्यकारेण वसानावित्यत्र न्यायेन पुंद्वयं प्रतिपादितम्। तत्र चोदयति—कस्मात् पुनः पूर्वपक्षवादिनाऽनुमानेन द्वितीयः पुमानिष्यते, न पुनरौकारेण द्वौ पुमांसावभिधीयेते इति ब्रवीति, येन सिद्धान्तवादिनः परिचोदनैव नोत्तिष्ठति। न्यायोक्तौ हि चोद्यावकाशत्वात् [ शः स्यात् ]। तन्मा भूदिति शब्दार्थत्वमेव पुंद्वयस्य वाच्यमिति। उत्तरम्—उच्यते, यदि द्वौ पुमांसौ वाच्याविति ब्रूयात् ततोऽनैकान्तिकत्वं भवति। [1]तथा हि—यथा द्वयोः पुंसोर्दृष्टस्तथा स्त्रीपुंसयोरपि दृष्ट एव। तत्रेह क्षौमविधानात् स्त्रीपुंसयोरर्थप्राप्तत्वात् पूर्वपक्षस्यानुत्थानं स्यात्। यदि हि द्वयोः पुंसोर्दर्शनात् तद्वाचित्वमुच्येत, ततश्च कुक्कुटश्च कुक्कुटी च कुक्कुटाविति स्त्रीपुंसयोरपि दृष्टत्वात्तद्वाचितापि स्यात्। ततश्च क्षौमे वसानावित्यत्र क्षौमस्य विधेयत्वाद् वसानावित्यस्याधानविध्यर्थप्राप्तस्त्रीपुंसानुवादकत्वेनापि सम्भवात् पूर्वपक्षानुत्थानं स्यात्। तन्मा भूदिति न्यायादेव पुंद्वयं प्रतिपाद्यते न शब्दादिति।

तत्र न्यायप्रतिपादनार्थं भाष्यम्—यत्र नार्थः प्रकरणं वा विशेषकम्, विधायकश्च शब्दो नानुवादकः, तत्र द्वौ पुमांसौ गम्येते इत्यादि। तदनुभाष्याक्षिपति—पूर्वपक्षविपरीतोऽयं ग्रन्थः। कथम्? अनेन खल्वर्थप्रकरणानुवादत्वानां त्रयाणामपि स्त्रीप्राप्तिकारणानामभावे पुंद्वयसिद्धिरुच्यते। एवं च सति यत्रैतानि कारणानि सन्ति त्रयाणाम[2]न्यतमदपि[ मपि ] यत्रास्ति, तत्र स्त्रीसद्वितीय एव पुमान् गृह्यत इत्यर्थादुक्तं भवति। इह च प्रकरणात् स्त्रीसद्वितीयः पुमान् प्राप्तः। एवं चेत् सैव स्त्री प्रकरणवशेन द्वितीया ग्रहीष्यते। किञ्च, क्षौमपदानुग्रहात् सैव ग्रहीष्यत इत्यनुषङ्गः। क्षौमस्यानु-

---

१. 'तथाहि' नास्ति–ख० ग०।

२. अन्यदपि–क०।

वादासम्भवाद् विधेयत्वम्। अतश्च वसानावित्यनुवादः। तेन सैव ग्रहीष्यत इति पूर्वपक्षविपरीतोऽयं ग्रन्थ इति।

समाधत्ते—**उच्यते,** विधिप्रत्ययविप्रकर्षाद् **व्यवहितकल्पनात् सामानाधिकरण्याभावाच्च।** उक्तमेतद् यथा **न विधीयते** क्षौममाधानाङ्गतयेति। तेन न तद्बलेनानुवादत्वम्। **वसानाविति चोच्चार्यमाणे स्वरसेन द्वौ पुमांसाववगमयति** न तत्प्रकरणमात्रेणान्यथा कर्तुं शक्यते। तेन विधेयान्तराभावात्, स्वरसतश्च पुंद्वयावगमात्, तस्य चाप्राप्तत्वाद्विधायक एव वसानशब्दः। **अतो न्यायादेतस्मिन्** प्रकरणस्याविशेषकत्वे वसानशब्दस्य च विधायकत्वे **स्थित इदमुक्तं** न प्रकरणं विशेषकं विधायकश्च शब्दो नानुवाद इति। यथा च वसानावित्यनेन स्वरसतः पुंद्वयमवगम्यते तद्भाष्यकारेणोक्तम्—यथा द्वौ पुरुषावानयेत्यादिना। तदर्थतोऽनुभाष्य व्याचष्टे—**औकारस्य पुंस्त्वं द्वित्वं च वाच्यमिति। कथम्? ब्राह्मणाविति द्वयोः पुंसोरौकारः प्रयुक्तः, कुक्कुटाविति स्त्रीपुंसयोः।** तत्र यदि द्वे **अप्यभिधेये स्याताम्,** ततो **द्विः** कल्पितमदृष्टं शब्दस्य वाचकसामर्थ्यं **भवेत्।** तच्चान्याय्यम्, **उच्चरिते च** शब्दे [1]नः **संशयः स्यात्, कतरदनेनाभिहितमिति।** अतोऽनेकार्थत्वस्यान्याय्यत्वाद् **यदनयोः सामान्यं तद्वाच्यम्।** किं पुनस्तदित्याह—**तत्र पुमानुभयत्रापि विद्यते द्वित्वं च, तस्मादेतदेवास्य वाच्यम्।** एवमपि **पुमानेव कथं द्वितीय इति चेत्,** स्त्रियामपि हि द्वितीयायां शब्दाभिहितं पुंस्त्वं द्वित्वं चानुगृह्यत **एव। उच्यते—यत्र द्वित्वं तत्र पुमान्, यत्र पुमांस्तत्र द्वित्वम्। अनयोः परस्परनियमः।** एतदेव व्यनक्ति—**एकपदोपादानाद् यस्यां क्रियायां द्वित्वं** तस्यां **पुंस्त्वम्।** [2]**अतोऽनयोः परस्परसम्बन्धोऽरुणादिवत्।** यत्र ह्येकवाक्योपात्तयोरपि तावदरुणैकहायन्योरैककर्म्यान्नियमः, तत्र सुतरामेकशब्दोपात्तयोर्द्वित्वपुंस्त्वयोरिति।

---

१. तस्य-ख०।

२. 'अतः' नास्ति-क०।

अरुणान्यायमेव प्रकृते दर्शयति—सर्वथा तावद् द्वित्वस्य गुणस्य केनचिद् द्रव्येणाश्रयेण भवितव्यम्। तत्र स्त्रिया अवबोधकं नास्ति द्वित्वं तावद् नावबोधयति विनापि स्त्रियोपपद्यमानत्वादनैकान्तिकत्वात्। पुमानपि न शक्नोति स्त्रियमवबोधयितुमसम्बन्धात्। नाप्यौकारोऽवबोधक इत्याह—औकारो ब्रूते केवलं पुल्लिङ्गं द्वित्वं च। न च संख्यापूरकं बाह्यमशब्दार्थभूतं किमप्याक्षेप्यम्। तथापि किमित्यत आह— तत्र कतरः पूरकः स्यात्? पुमान्। कुतः? तत्र पुमान् शक्नोति पुमांसमवबोधयितुम्। पुंस्त्वं हि [1]व्यक्तीरवबोधयति। तेन ताभिरेव द्वित्वस्याश्रयापेक्षिणः सम्बन्धो युक्तो न स्त्रीव्यक्तिभिः। तस्मान्न्यायाद् द्वौ पुमांसौ। युगपदधिकरणवचनतायामित्यादिभाष्यार्थमाह—न च विग्रहकाले स्त्रियाः श्रवणं वसानश्च वसाना चेतीदृशस्य विग्रहस्याभावात्। कथमभावः? युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः। किमिदं युगपदधिकरणवचनतायामिति? इदमिति दर्शयति—यत्र द्वौ बहवो वा युगपदभिधातुमिष्यन्तेऽर्थास्तत्र द्वन्द्वसमासो भवतीति।

एतदेवोपपादयितुमन्तरा किञ्चिचोद्यं प्रस्तौति-अयुक्तमिदमुच्यते द्वन्द्वसमासो भवतीति। नहि द्वन्द्वाख्यः समासः क्वचिदपि संभवतीत्यर्थः। कथमित्यत आह-समासो हि प्रमाणान्तरेण समस्यमानयोः सम्बन्धेऽवगते भवति। यथा राजपुरुष इति तत्पुरुषः स्वस्वामिभावेऽवगते भवति समासः। इह तु धवखदिराविति धवखदिरयोश्चाङ्गाङ्गिस्वस्वाम्याश्रयाश्रयिसम्बन्धो नास्ति। यद्युच्येत, अत्राप्येकक्रियान्वयलक्षणः सम्बन्धोऽस्तीति। तत्राह—क्रियया च सम्बन्धः समासोत्तरकालभावी। तथापि को दोषोऽत आह—सर्वे च समासाः सम्बन्धोत्तरकालम्, यथा राजपुरुष इति तत्पुरुषः स्वस्वामिभावेऽवगते पश्चाद् भवति, चित्रगुरिति बहुव्रीहिश्च चित्राभिर्गोभिः सम्बन्धेऽवगते पश्चाद्भवति, पञ्चपूलीति च द्विगुः समाहारसम्बन्धोत्तरकालम्, उपकुम्भमित्यव्ययीभावः समीपसम्बन्धोत्तरकालम्। तेन द्वन्द्वेऽपि प्रागेव

---

१. पुंव्यक्ति–क०।

समासात् सम्बन्धेन भवितव्यम्। **न चेह द्वन्द्वे धवखदिरयोः** प्रागवगतः **सम्बन्धोऽस्ति,** यदालम्बनो द्वन्द्वसमासः स्यात्। तदनुपपन्नो द्वन्द्व[1] इति। **उच्यते—एकशब्दाभिधेयत्वमनयोर्धवखदिरयोः सम्बन्धः, तत्र द्वन्द्वसमासोऽभिप्रेतो भवति।** यदा चैवमेकशब्दाभिधेयत्वमेव धवखदिरयोर्द्वन्द्वसमासेऽभिप्रेतः सम्बन्धः, तदा युगपदधिकरणवचनता सिद्धेति।

**विग्रहस्त्वीदृशः कार्यः—धवौ च खदिरौ चेति।** एकैकस्यैव प्रातिपदिकस्य द्व्यर्थत्वादन्यथा युगपदभिधानाभावेन द्वन्द्वानुपपत्तेः। **द्विवचनबहुवचनोपपत्तेश्चेति** भाष्यस्यायमर्थः—**यदि धवेन** धवशब्देन **केवलो धव एवाभिधीयते खदिरेण खदिरः। एवं** सति **खदिरात्परं द्विवचनं न प्राप्नोति,** तस्य द्वित्वाभावात्। न च धवापेक्षया द्वित्वसम्भवः, तद्बुद्धेः खदिरबुध्यवस्थायामतीतत्वात्। द्वित्वस्य चैकबुद्धिगोचराश्रयत्वेनैव प्रतीतेः। **अतो द्वावपि द्वाभ्यामभिधीयेते।** एवं **लौकिकोऽयं न्यायः प्रदर्शितः। वैदिकमपि** लिङ्गं प्रदर्श्यते—**प्र मित्रयोर्वरुणयोरिति** च **दर्शनात्।** इह च **मित्रस्यैकत्वाद्वरुणस्य** च युगपद्वचनानभ्युपगमे प्रत्येकं **द्विवचनं न प्राप्नोति।** तेन विग्रहेऽपि युगपदभिधानदर्शनात् सुतरां समासे तदस्तीति गम्यते। **इतरेतरयोगे चार्थे द्वन्द्वविधानादित्यनेन** भाष्येण **'चार्थे द्वन्द्वः'** इत्यस्य **सूत्रस्यार्थः प्रदर्श्यते।** न सर्वेषु चार्थेषु द्वन्द्वः, किन्त्वितरेतरयोग एव। तेनापि युगपदधिकरणे द्वन्द्व इति।

एतदेव प्रपञ्चयति—**चशब्दः समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। तत्र समुच्चये धवमानय खदिरमानयेति** निरपेक्षयोः क्रियान्वयाद् व्यस्तयोरेव प्रयोगः, अतः **समासो नास्ति। अन्वाचये**ऽरण्यं गत्वा **काष्ठान्याहर शाकमप्याहर्तव्यमिति।** तत्रापि समासो नास्तीत्यनुषङ्गः। कः पुनः समुच्चयान्वाचययोर्भेदः? तं दर्शयति—**तत्र काष्ठान्यरण्यगमनस्य प्रयोजकानि, इतरत् शाकमप्रयोजकम्।** धवमानय खदिरमानयेति तु **समुच्चये** द्वयमपि **प्रयोजक-**

1. 'प्रागेव समासात्' अधिकः-ख०।

मिति विशेषः। इतरेतरयोगं दर्शयति—**द्वयोः सहानीयमानयोरितरेतरयोगोऽनुनिष्पादी भवति।** यत्र द्वयोः सहितयोरेकक्रियान्वयस्तत्रेतरेतरयोग इत्यर्थः। तत्रैव च समास इत्याह—**चकारस्य तत्फलम्।** तदितरेतरयोगाख्यं फलं चकारस्यैव—नान्तरेण चकारं लभ्यते। समुच्चयस्त्वहरहर्नयमाने[1] गामश्वं पुरुषमिति विनापि चेन लभ्यमानो न चकारस्यैव फलम्। इतरेतरयोगस्तु धवं च खदिरं चानयेति चेन विना न लभ्यत इति तत्फलमिति।

तथापि कथं तत्रैव समासोऽत आह—**तत्कृते चार्थे द्वन्द्व इति।** तत्कृते चार्थे द्वन्द्व इत्यस्यायमर्थः—चेनैव यः कृतोऽर्थस्तत्र द्वन्द्व इति। तेनेतरेतरयोग एव समासो न समुच्चय इति। एवमपि किमित्यन्वाचये समासो न भवति, सोऽपि हि चेनैव कृत इति? सत्यम्, तथापि सामर्थ्याभावान्न तत्र समासः। तत्र ह्येकस्य प्राधान्यम्, इतरस्य तु तदनुरोधेन वर्तमानत्वाद् भिन्नकक्षतया न सामर्थ्यम्। अपि च, अत्रानेकग्रहणानुवृत्तेरनेकस्य चार्थे वर्तमानस्य समासः। अन्वाचये चैकमेव शाकपदं चार्थे वर्तते न प्रधानवाचि काष्ठपदमिति न तत्र समास इतीतरेतरयोग एव समास इति।

ननु समाहारेऽपि द्वन्द्वो दृश्यते। तत्कथमितरेतरयोग एव द्वन्द्व इत्युच्यते? अत आह—तत्रैवेतरेतरयोग एव। **कदाचिदितरेतरयोगो विवक्षितः, समाहारस्तु प्रचयादवगम्यमानश्चशब्देनाविवक्षितः। कदाचित्तु समाहारो विवक्षितः।** तत्र त्वितरेतरयोगो **नान्तरीयको**ऽविवक्षितः। **तेनैतयोरर्थयोः द्वन्द्वः।**

एतदुक्तं भवति—इतरेतरयोगे चार्थे द्वन्द्वविधानादित्यनेन भाष्येण समाहारोऽपि गृह्यते, तत्रापीतरेतरयोगसद्भावात्। इतरेतरयुक्तयोरेव हि[2] क्रियान्वये सत्यवान्तरविभागोऽयमितरेतरयोगः समाहार इति। तेन द्वयोरपि द्वन्द्वोऽनेनोक्त इति। तत्र **समाहारविवक्षायां धवखदिरमिति प्रयोगः** समाहारस्यैकत्वात्।

---

१. नयमानो–ग०।

२. 'हि' नास्ति–क०।

**इतरत्र** त्वितरेतरयोगे समाह्रियमाणप्राधान्यात्, तयोश्च द्वित्वाद्धवखदिराविति **प्रयोगः**। तदेवमितरेतरयोगे द्वन्द्वविधानात्, इतरेतरयोगस्य चाभिधानैक्यमन्तरेणाप्रतीतेः पृथगभिहितयोः समुच्चयवत् पृथगेव क्रियान्वयादेकैकेनैव शब्देन द्वयोरभिधानात् सिद्धं धवौ च खदिरौ चेति विग्रह इति। भवत्वेवम्, प्रकृते किमायातमित्याह—**द्वन्द्वापवादत्वाच्चैकशेषस्य**। कथमित्यत आह—**यथा द्वन्द्वे यौगपद्येन द्वावप्यभिधीयेते विग्रहश्च** तदनुरूपः, **तथैकशेषेऽपि** यौगपद्येनार्थद्वयाभिधानम्। [1] **वसानाविति चैकशेषः**। वसानौ च वसानौ चेत्येवमेव विगृह्य एकशेष इत्यर्थः। तेन विग्रहेऽपि **द्वौ पुमांसाविति** न विग्रहालोचनयापि स्त्रीसद्वितीयपुमभिधानसिद्धिः।

एवं भाष्यं व्याख्याय चोदयति—**ननु यदि धवोऽपि द्वित्वाभिधायी खदिरश्च**, ततस्तयोः समुच्चितयोर्**बहुवचनं स्याद्**र्थचतुष्ट्वात्। **उच्यते—द्वयोर्द्वित्वयोर्बहुवचनं न द्वयोर्द्विवचनयोः। यदि हि द्वयोर्द्विवचनयोर्बहुवचनं स्यात्** ततो **ब्राह्मणौ शोभनौ** विज्ञाताराविस्यत्रापि **बहुवचनं स्यात्**। यदि च[2] शोभनौ च तौ विज्ञातारौ च तौ ब्राह्मणाविति विगृह्य कर्मधारयः क्रियते तदापि बहुवचनं स्यात्। तस्माद् द्वयोर्द्वित्वयोर्बहुवचनम्। धवौ च खदिरौ चेत्यत्र तु न द्वे द्वित्वे स्तः, एकेनैव च द्वित्वेनोभयत्रापि द्विवचनमिति न बहुवचनप्रसङ्गः। पुनश्चोदयति—**सैषा युगपदधिकरणवचनता दुःखा** बुद्धावनारोहात्; **दुरुपपादा च** युक्त्यभावात्। **कथम्?** तस्यां खल्वभ्युपगताया**मेकैकस्य शब्दस्य द्वे द्वे अभिधेये स्याताम्**। ततः किमित्यत आह—**यदि च स्यातामुक्तार्थानामप्रयोग इति** न्यायाद् **धवस्य** धव[3]शब्दस्य **अप्रयोगः स्यात्**।

परिहरति—यस्मादेवमुभयोरुभयाभिधायित्वे दोषः, **तस्मादेवं वर्णयन्ति**

---

१. 'वसानाविति चैकशेषः' नास्ति–ख०।

२. यदा–ख० ग०।

३. शब्दस्यैव–ख०।

**धव आत्मीयमभिधेयमितरसहित**मितरेण येन केनचिद् [1]द्वितीयेन सद्वितीयं **ब्रवीति,** न तु प्रतियोगिविशेषमभिधत्ते । **एवं खदिरशब्दोऽपि** । तत्र **स कतरो** योऽर्थो **द्वितीय इत्या**काङ्क्षा भवति । **तत्र खदिरशब्देन** समानाधिकरणेन नीलेनेवोत्पलं **धवो विशेष्यते,** अनेनासौ सद्वितीय इति । तथा **धवेनापीतरः** खदिरो विशेष्यते । अतो नान्यतरप्रयोगदोष इति । सेयं युगपदधिकरणवचनता पूर्वपक्षौपयिकतया प्रदर्शिता, न तु पारमार्थिकी प्रमाणाभावात् । यत्तु कात्यायनीयं स्मरणम्, तदपि पातञ्जलस्मरणेन सत्प्रतिपक्षं न प्रमाणं भवितुमर्हति । तेन ह्युक्तं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति । न्यायमूलं च तदिति न्यायाभावादनादृत्यम् । यश्चात्र न्याय उक्तो द्विवचनबहुवचनोपपत्तेश्चेति, अन्यथा हि खदिरशब्दाद् द्विवचनं न प्राप्नोतीति[2], सोऽपि न युक्तः, नहि खदिरशब्दाद् द्विवचनमिदम्, किन्तु समासात् । स च द्व्यर्थाभिधायीति युक्तं द्विवचनम् । यदप्युक्तं पर्यायाभिधाने युगपदनवगमाद् धवखदिरयोर्न द्वित्वान्वयः सम्भवतीति । तदतिमन्दम् । यथैव हि—

एकयैव च बुद्ध्यासौ गृह्यते चित्ररूपया ।
पदार्थाहितसंस्कारचित्रपिण्डप्रसूतया ॥

इत्यनेन न्यायेनारुणादिभिः क्रमेणा[3]वगतैरप्येकस्मृत्यारूढैर्युगपदेव क्रयभावनान्वयमनुभवति । यथा च धवं च खदिरं च द्वावानयेत्यादौ वाक्ये क्रमाभिहितयोरपि धवखदिरयोर्द्वित्वान्वयः, तथा समासेऽपि धवखदिराभ्यां स्मृत्यारूढाभ्यां द्वित्वान्वयसम्भवान्न तत्सिद्ध्यर्थं युगपदभिधानं कल्प्यम् । प्र मित्रयोर्वरुणयोरित्येतत्तु छान्दसमिति पातञ्जल एवोक्तम् । तथा वार्त्तिककारेणापि लोक इत्यादिभाष्यं परिसंख्यार्थत्वेन व्याचक्षाणेन प्रसङ्गात् 'द्यावोस्तथेति चेत्' इत्यत्र द्यावापृथिव्योरित्यत्रार्थे

---

१. 'द्वितीयेन' नास्ति—क० ।

२. 'इति' नास्ति—क० ।

३. वगतान्तर्हितैः—क० । वगताहितैः—ग० ।

द्यावोरिति पदं वेदप्रस्थानाभ्यासवशात् प्रयुक्तमिति वदता छान्दसत्वमेवैवमादीनां दर्शितम् ।

तथा ह्येतत्पदादाद्यं यद्यावित्येदुद्धृतम् ।
द्वन्द्वविग्रहलभ्यं च तस्मिन्न् द्विवचनं कृतम् ॥

इत्युक्त्वा; कथं विग्रहलभ्यं द्विवचनम्? एकवचनेनैव हि लोके विग्रहो दृश्यत इत्याशङ्क्योक्तम्—

मित्रावरुणयोर्द्वन्द्वे विगृहीते प्र मित्रयोः ।
तथा वरुणयोश्चेति प्रत्येकं द्वित्वदर्शनात् ॥
जैमिनेर्वेदतुल्योक्तिविवक्षोत्सुकचेतसः ।
रूपाणि हि प्रवर्तन्ते शब्दानामीदृशान्यपि ॥ इति ।

यदि हि युगपदधिकरणवचनतां पारमार्थिकीं वार्त्तिककारोऽमंस्यत, ततो नैवमादीनां छान्दसत्वमवक्ष्यत् । तस्मादनभिप्रेतमेव युगपदभिधानम् । युक्तं चैतत्, नहि लोके धवखदिरावानयेत्येतमर्थं विगृह्य कथयन् कश्चिद्धवौ च खदिरौ चानयेति प्रयुञ्जानो दृश्यते । तस्मात् छान्दसमेवैतत् । यदप्युक्तम्—इतरेतरयोगे चार्थे द्वन्द्वविधानादितरथा समुच्चयेऽपि द्वन्द्वः स्यादिति । तदपि पतञ्जलिनैव चार्थे द्वन्द्व इत्यर्थग्रहणेनैवेतरेतरयोगो लभ्यत इति परिहृतम् । अनन्तरमेव च वार्त्तिककारेणाप्युक्तं तत्कृते चार्थे द्वन्द्व इति[1] ।

यत्त्वितरेतरयोगे एव युगपद्वचनतामन्तरेण न सिद्ध्यति, पृथगभिहितयोः समुच्चयवत् पृथगेव क्रियान्वयादित्युक्तम्; तदपि समासेनैव तल्लाभात् सुपरिहरम् । यथैव हि वाक्ये धवं च खदिरं चानयेत्यत्र युगपद्वचनताभावेऽपि चकारवशादेवेतरेतरयोगो गम्यते, तथा धवखदिराविति चार्थे [2]विधीयमानेन द्वन्द्वेनैव तत्सिद्धेर्न युगपदभिधानं कल्प्यम् ।

ननु युक्तं वाक्ये । तत्र हि चकारः श्रूयते, समासे तु चकाराश्रवणात् केन

---

१. स्यादिति—क० ।

२. विधीयमाने—क० ।

साहित्यं गम्यताम्। समासेनैवेति चेत्? न, समस्यमानपदातिरेकेण समासस्याभावात्। समस्यमानान्येव हि पदान्येकविभक्तिकत्वाद्युपाधिवशात् समाससंज्ञयाभिधीयन्ते; न तु समासो नाम शब्दान्तरमस्ति, यदितरेतरयोगं गमयेत्। तस्माद्धवखदिरशब्दाभ्यामेवेतरेतरयुक्तस्वार्थाभिधानात् सिद्धं युगपदभिधानम्। नैतदेवम्, यद्यपि समासो नाम नैव शब्दान्तरमस्ति, तथापि समस्यमानानां तावदेकविभक्तिसमन्वयो भवतैवोक्तः। ततः किम्? इदं ततो भवति—विभक्त्यभिहितकारकद्वारेण हि नामपदार्थानां क्रियान्वयो न तन्निरपेक्षाणाम्। ततश्च समासे विभक्त्येकत्वात्तदभिहितेनैकेन कारकेण प्रधानभूतेन प्रथममन्विताः समासपदस्थाः पदार्था गुणभावेन च कारकं प्रति विवक्षितसाहित्यास्तद्द्वारेण संहत्यैव क्रियान्वयमनुभवन्ति विनापि चकारेण। यत्र तु प्रधानभूताः पदार्थास्तत्र द्वन्द्वस्थानामपि साहित्यं नैव विवक्ष्यते। यत्रापि कारकविभक्तिर्न श्रूयते, सम्बन्धमात्रप्रतिपादिका तु षष्ठी, लिङ्गसंख्यामात्रप्रतिपादिका [1]वा प्रथमा श्रूयते धवखदिरयोः फलानि धवखदिरौ तिष्ठत इत्यादिषु, तत्रापि परिपूर्णस्य [2]पदस्य पदान्तरसम्बन्धात् स्वपदस्थेन विभक्त्यर्थेन संख्यादिना सम्बध्य पश्चादर्थान्तरसम्बन्धात् सिद्ध इतरेतरयोगः। वाक्ये तु विभक्तिपृथक्त्वात् पृथगेव सम्बन्धश्चकाराभावे स्यादिति चकारेणैवेतरेतरयोगसिद्धिरिति विशेषः। तेन समासेऽपि विनापि चकारेण विनापि च युगपदभिधानेन विभक्त्येकत्वादेवेतरेतरयोगसिद्धेरप्रमाणिकी युगपदधिकरणवचनता। यदप्युक्तं सम्बन्धोत्तरकालाः सर्वे समासाः, न च द्वन्द्वे धवखदिरयोरेकशब्दाभिधेयत्वव्यतिरेकेण सम्बन्धः समस्ति। तस्मात् समाससिद्ध्यर्थमेव युगपदभिधानमभ्युपेतव्यमिति।

तत्रोच्यते—इदं तावदत्र वक्तव्यम्। कथं धवखदिरयोरेकशब्दाभिधेयत्वम्? नहि लोके धवखदिरयोः पर्यायत्वं प्रसिद्धम्। लक्षणयेति चेत्? न, असम्बन्धात्। सम्बन्धनिमित्ता हि लक्षणा भवति। न च धवखदिरयोः कश्चिदस्ति सम्बन्ध इति

---

१. 'वा' नास्ति—ख०।

२. 'पदस्य' नास्ति—ख०।

कथमेकेनेतरो लक्ष्यते। तत्र यद्येकक्रियान्वयसम्बन्धेन भाविनापि विवक्षारूढेन लक्षणा सिद्ध्यति, तर्हि तेनैव समासस्यापि सिद्धेरलं युगपदधिकरणवचनतया।

प्रकृतमनुसरामः। **ननु तत्रौ**कारान्ते द्विवचने **पाणिनिस्मरणं पुमान् स्त्रियेति** ईदृशमप्यस्ति, अतः स्त्रीपुंसयोरप्यभिधेयत्वात् कथं पुंद्वयसिद्धिरिति। **उच्यते—न पाणिनिनार्थानुशासनं कृतम्**। **किं तर्हि? यथा लोकेऽवस्थितः** शब्दस्या**र्थस्तथास्थितस्यैव** तस्य **शब्दानुशासनं** केवलं **कृतम्**। लोके चान्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं चाभिधेयं प्रतीयते। तत्र चारुणैकहायनीन्यायेन परस्परनियमात् पुंद्वयसिद्धिरित्युक्तम्। कस्तर्हि पुमान् स्त्रियेत्यस्यार्थः? तं दर्शयति—**तत्र**। नियमः क्रियत इति वक्ष्यमाणेन सम्बन्धः। तत्र नियमस्यो[1]भयप्राप्त्यपेक्षत्वादुभयप्राप्तिमाह—**अकारात् पर औकारः श्रूयमाणः पुमांसं सद्वितीयं वदति** ब्राह्मणाविति। **यदा तु स्त्री सद्वितीयाभिधेया तदा औकार एकारीभवति** जाये इति। **यदा पुनः स्त्रीपुंसावभिधेयौ** विवक्षितौ, **तदा एकारौकारौ** द्वावपि **प्राप्नुतः**। कुतः? **द्वयोः** सद्वितीययोः स्त्रीपुंसयो**रभिधेययोर्विद्यमानत्वात्**। **तत्रौकारः शिष्यत इत्ययं नियमः क्रियते, न** त्वेतावता **पुंसा सद्वितीया स्त्री अभिधीयते**। तस्माद् द्वौ पुमांसावादधीयातामिति॥ २२॥

## गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात्॥ २३॥

न पुंद्वयमाधाने शक्यं विधातुम्। तथा हि—"वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्याद्युत्पत्तिवाक्यशिष्टैकत्वेनाधानस्यावरुद्धत्वात् तस्य चोपादेयगतस्याविवक्षायां प्रमाणाभावात्, तत्र द्वित्वस्यावकाशाभावात्, वाजिनयागवत् **कर्मान्तरं प्राप्नोति। न चेष्यते कर्मान्तरम्**, प्रकृताधानप्रत्यभिज्ञानाद् विशिष्टविधिगौरवाच्च। तस्मात् प्रकृते विधानम्। तच्चायुक्तम्, उत्पत्तिवाक्यशिष्टैकत्वविरोधात्। इतश्च न प्रकृते विधानम्, क्षौमयोर्विधेयत्वात्। विहिते च

---

१. भयांशप्राप्त्य–ख०।

कर्मण्यनेकगुणविध्ययोगात् । **न च क्षौमयोरनुवादो घटते,** यतस्ते अविधाय पुमानेव विधीयेत । कथं न घटते ? अत आह— **तत्रानुवादपक्षे शब्दवती वा क्षौमे स्यातां मलिने वा** । द्वेधापि चायुक्तमित्याह— **तत्र** शब्दवतोस्तावत् क्षौमशब्दः **'टुक्षु शब्दे'** इत्यस्माद् धातोर्मन्प्रत्ययोत्पत्तौ व्युत्पन्नोऽवयवव्युत्पत्त्या **वर्तते** । तच्चायुक्तम्, **रूढ्या** हि **क्षौममेव ब्रवीति** । **रूढ्या** चाक्षरश्रवणादेवार्थावगतेः सन्निकृष्टयाऽवयवव्युत्पत्तिरर्थभागोपसंहारसव्यपेक्षतया विप्रकृष्टा **बाध्यते** ।

ननु च लब्धात्मिका रूढिरवयवप्रसिद्धिं बाधते, न चात्र तदात्मलाभः, प्रसिद्धेऽपि क्षौमेऽवयवव्युत्पत्त्यैव प्रयोगोपपत्तेरत आह— **व्युत्पत्तौ** केवलायां शब्दनिमित्तत्वेनाश्री**यमाणायां शङ्खादीनामपि** शब्दवत्त्वात् **क्षौमशब्दवाच्यता स्यात्** । **न च तेषु** क्षौमशब्दो **वर्तते** । सोऽयं प्रवृत्तिनियमो[1]ऽन्यथा नोपपद्यत इति रूढिशक्तिः कल्पते, अवघातादिष्विव नियमादृष्टम् । एतेन पङ्कजादिशब्दानामुत्पलादिष्वप्रवर्तमानानां पद्मैकप्रवृत्तीनां प्रवृत्तिनियमाय रूढिरुपपादिता । यस्तु "अप्रयोगादेवाप्रयोगः" इति वदन्नेवमादिषु रूढिं नेच्छति, स वक्तव्यः—उपपद्यतां नाम पूर्वपूर्वेषामप्रयोगादेवोत्तरोत्तरेषामप्रयोगः, प्रतीतिस्त्वनन्यलभ्या शब्दशक्तिमेव कल्पयति । कथं खल्वशक्तात् पङ्कजशब्दात्[2] पद्मप्रतीतिरिति । शब्दप्रतिपादितपङ्कजननक्रियायोगवशादिति यदि ब्रूयात्, प्रतिब्रूयादेनम्—नानैकान्तिकत्वादिति । न खलु पद्मैकान्तिकं[3] पङ्कजननम्, यतस्तन्निश्चाययेत् । तस्माच्छब्दशक्तिरेव कल्पयितव्येति । स चेद्ब्रूयात्—सत्यं शब्दादेव पद्मप्रतीतिः । स तु प्रयोगवशादेव तत्प्रत्याययतीति[4] न वाचकशक्तिः कल्पनीयेति । प्रतिब्रूयादेनम्—कथमशक्तः प्रयोगमात्रादेव प्रत्याययेत् ? अतिप्रसङ्गो हि तथा

---

१. नियमो यत्—ख० ।

२. पङ्कजादि—क० ।

३. नैका—ग० ।

४. 'इति' नास्ति—क० ख० ।

स्यादिति। सर्वे हि गवादिशब्दाः शक्तिमन्तरेणैव प्रयोगवशादेव स्वार्थं प्रत्यायन्तीति शक्यं वदितुमिति। तस्मात् सिद्धा समुदायशक्तिरिति तद्बलेनावयवव्युत्पत्तिबाधान्न शब्दतत्त्वप्रतिपादकतयानुवादकत्वम्, नापि मलिनत्वप्रतिपादकत्वमित्याह—**मलिनवचने** सति **कार्पासादीनामपि मलिनत्वस्य विद्यमानत्वात् क्षौमशब्दाभिधेयता स्यात्। न च तेषु** वर्तते **क्षौमशब्दः।**

किञ्चैवम**मलिने क्षौमे** क्षौमशब्द**प्रयोगो न स्यात्, अस्ति च प्रयोगः।** किञ्चाभ्युपेतेऽपि मलिनवचनत्वे नानुवादकत्वम्। पक्षे हि मलिनं वस्त्रम्, पक्षे त्वमलिनम्। **अमलिनत्वपक्षे च विधिं प्रयोजयति।** न च नित्यवच्छ्रुतस्य पाक्षिकानुवादकत्वं युक्तम्। ननु यदिदमुक्तं मलिनवाचित्वे कार्पासादीनामपि प्रसङ्ग इति, तदयुक्तम्। यदि हि वाचकतया तत्प्रतिपादकत्वमाचक्ष्महे तत एवमुपालभ्येमहि, लक्षणया तु तत्प्रतिपादकत्वेन न कश्चिद्दोषोऽत आह—**लक्षणाप्यविनाभावादुपपन्ना भवति।** न च क्षौमं मलिनत्वेनाविनाभूतम्, अतो लक्षणाऽयुक्तेति भावः।

अथ गुणवृत्त्या क्षौमसदृशेषु कार्पासादिष्वर्थप्राप्तेष्वनुवादकतया वर्तत इत्युच्यते, तत्राह—**न चोपपदेन सहानुच्चरितत्वात् क्षौमसदृशं कार्पासादि शक्नोत्यवबोधयितुम्। यथा सिंहो देवदत्त इति** देवदत्तपदेन सह **सिंहशब्दोच्चारणे** सति **सिंहसादृश्यं देवदत्ते**ऽवगम्यते, **एवमिहापि** गौणत्वाश्रयणे भवितव्यमुपपदेन। न चेह कार्पासाद्युपपदं श्रुतम्। तस्मान्न गुणवृत्त्या सादृश्यप्रतिपादकत्वम्। एवमपि चेत्सादृश्यं गृह्येत, ततः क्षौमसदृशानामपि क्षौमशब्दो वाचक [1]इत्यापद्येत। तच्चायुक्तम्, अनेकार्थत्वस्यान्याय्यत्वादित्यभिप्रायेणाह—**तस्मादुपपदाभावात् सादृश्ये गृह्यमाणे साधारणशब्दता स्यात्।** सा चायुक्तेति। तस्मान्न वाचकतया नापि गौणतया मलिनप्रतिपादकत्वमिति पारिशेष्याल्लक्षणया तत्प्रतिपादकत्वमङ्गीकर्तव्यम्। तदपि न युक्तमविनाभावा-

---

१. इत्याद्या—क०।

भावादिति पूर्वोक्तमेव व्यनक्ति—**अविनाभावेन मलिनत्वमवबोधयेताम्**[1] । [1]क्षौमद्वयाभिप्रायं द्विवचनम् । **न च मलिनत्वेन विना क्षौमं नोपपद्यते । तस्मा**दनुवादकत्वानुपपत्ते**रप्राप्तत्वात् क्षौमं विधीयते** । तद्विधौ च न पुंद्वय-विधानं शक्यमिति ।

ननु पुंद्वयप्रतिपादकस्य शब्दस्य का गतिरित्यत आह—**वसानाविति पुंस्त्वं द्वित्वं च वदति । तच्च** द्वयमपि **प्रकरणे प्राप्तत्वादनूद्यते** । क्षौमस्य तु नानुवादकत्वं सम्भवतीत्युक्तम् । अतः क्षौमं विधेयं न पुंद्वयमिति । अथ **यदुक्तं** वसने विधीयमानस्य क्षौम**स्याधानसम्बन्धो न प्राप्नोति**, ततश्चानर्थक्य**मिति**, **तत्रोच्यते—आधाने क्षौमं कुर्यादिति विधीयते**, न तु वसने, तस्माददोष इति । चोदयति—**तत्** क्षौमं **कथमाधाने** कृतं **भवति**, तत्र हि क्रियमाणमधि-करणं स्यात् । तच्चानिष्टम् । उत्तरम्—**तत्साधनस्य** पुरुषस्य **भवत्तदर्थं भवति**, न तु साक्षात् । नह्यत्रात्यन्ताप्राप्तं क्षौमं विधीयते, किन्तु पक्षे प्राप्तमेव नियम्यते । प्राप्तिश्च पुरुषसंस्कारतयेति तादृशस्यैव नियममात्रमत्राधानाङ्गतया विधीयत इति नाधिकरणत्वप्रसङ्गः । एवं चाधानाङ्गतया वाक्येन क्षौमप्रातिपदि-कार्थमात्रं विधीयते, तद्गता च द्वितीया विभक्तिः सकलं च वसानपदमनुवाद इति । **अथवास्तु** वाक्येन **क्षौमवसनसम्बन्धविधानम् । ननु वसनमात्रे स्यात्**, ततश्चानर्थक्यमिति । **उच्यते—आधानप्रकरणे समाम्नानात् तदीयस्य पुरुषस्य यद्वसनं तत्र भविष्यति । यथा "प्रकरणविशेषाद्वा तद्युक्तस्य [2]तत्संस्कारो द्रव्यवत्"** इति न्यायाद् जञ्जभ्यमानमन्त्रवचनं प्रकरण एव व्यवतिष्ठते, **एवमत्रापीति सिद्धम्** ॥ २३ ॥

---

1. **क्षौमद्वयेति । लक्षणास्थले वाच्यार्थस्यैवार्थान्तरलक्षकत्वादिति भावः ।**
2. **संस्कार इति तत्पदरहित एव पाठः प्रसिद्धः ।**

१. **मेयाताम्—क० ।**

**तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥**

सर्वं याजमानमुभाभ्यामपि कर्तव्यमुभयोरपि यजमानत्वादिति प्राप्ते सिद्धान्तमाह—"**शुक्रं यजमानोऽन्वारभते**" **इत्येवमादिषु** तावद्यजमानस्योपादेयत्वात् तद्गतयोः **पुंस्त्वैकत्वयोर्विवक्षितत्वात् पुमानेव प्रत्येतव्यः** । स्त्रियास्त्वाशीराद्येव भवति । न चाशीःशब्देन "आयुर्दा अग्नेऽस्यायुर्मे देहि" इत्यादिमन्त्रवचनमुच्यते, विद्याभावेन तस्या मन्त्रोच्चारणासम्भवादित्याह—**न चाशीर्वचनं तस्याः** । **कुत** इति । "स्वाध्यायोऽध्येतव्यः" इत्यविशेषश्रवणात् स्त्रिया अप्यध्ययनमस्त्येव । न च "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत" इत्यत्र पुल्लिङ्गश्रवणादुपनयनमध्ययनं च पुंविषयमिति वाच्यम्, उपनयने ब्राह्मणस्य संस्कार्यत्वेनाविवक्षितलिङ्ग[1]संख्यत्वात् । तत्सहैवोपनयनेन स्त्रीपुंसविषयमध्ययनमिति कथं तस्या नाशीर्वचनमित्यभिप्रायेण प्रश्नः ।

तत्रोत्तरमाह—"**ब्राह्मणमुपनयीत**" **इत्याचार्यकरणे** नयतेरात्मनेपदं **भवति** । तेनात्मनेपदश्रुतिवशाद् [2]**देवदत्त** उपनयनेनात्मन **आचार्यत्वं भावयेदि**ति । **तत्र देवदत्तः** स्वर्गकामवदु**पनयनफल**माचार्यत्वं **भजमानः प्रधानभूतः**, अष्टवर्षस्य **माणवकस्य तु** देवदत्तार्थमुपनयनं प्रत्यु**पादीयमानत्वाल्लिङ्गसंख्यं विवक्षितम्** । ननु भवतूपनयनमाचार्यत्वनिष्पादकतया देवदत्तार्थम्, अध्यापनं तु द्वितीयासंयुक्तमाणवकार्थम् । तत्र त्वध्यापको याजकवद् गुणभूतः, अध्याप्य एव तु माणवकस्तत्र प्रधानं याज्यवत् । ततश्च यथैव "एतयान्नाद्यकामं याजयेत्" इत्यादिष्वन्नाद्यकामस्य याज्यस्य लिङ्गमविवक्षितम्, तथैव तमध्यापयीतेत्यपि तच्छब्दगतं लिङ्गमविवक्षितं स्यात् । अत आह—**स तु** देवदत्तो **वेदमध्यापयन्न**ध्यापनमपि **कुर्वन्नाचार्यो भवति, नान्यथा** नोपनयनमात्रेणेत्यर्थः । तथा च मनुः—

---

१. संख्या–ग० ।

२. देवदत्तोपनयनेनाचार्यत्वम्–क० ग० ।

उपनीय गुरुः शिष्यं वेदमध्यापयेद् द्विजः ।
साङ्गं च सरहस्यञ्च तमाचार्यं प्रचक्षते ॥ इति ।

ततश्चाध्यापनस्याप्याचार्योत्पादकतयाध्यापकशेषत्वाद् माणवकस्य तु तत्राप्युपादेयत्वाद्विवक्षितमेव लिङ्गम् । न चैतावताध्यापनविधिप्रयुक्तमध्ययनमिति मन्तव्यम्, स्वयमेवाध्ययनस्य फलवत्त्वात्प्रयोजका[1]न्तरानपेक्षत्वात् । यथैव ह्यध्यापनमाचार्यकार्थं तेनैवानुष्ठाप्यते, तथाध्ययनमप्यर्थज्ञानेनैवानुष्ठाप्यते । नहि स्वप्रयोजने प्रयोजके सम्भवत्युपकार्यमात्रतयावस्थितमाचार्यकरणं प्रयोजकं युक्तमङ्गीकर्तुम् । तेनोभयोरप्यध्ययनाध्यापनयोः स्वप्रयोजनप्रयुक्तयोर्मिथः संश्लेषः । उपनयनं त्वध्यापनाङ्गं तेनैव प्रयुज्यते, नाध्ययनेनेति । **तस्मादु**पनयनाध्यापनयोः पुंविषयत्वात्तदपेक्षत्वाचाध्ययनस्य **पुंस** एवाध्ययनं **विहितम्**, [1]**इतरस्यास्तु** स्त्रिया **विधानाभावादवैधता । न चाशीर्वचनान्यथानुपपत्त्याध्ययनं तस्याः** कल्पयितुं शक्यम्, **अन्यथापि** पुंविद्वत्तयैवाशीर्वचनस्यो**पपद्यमानत्वात्** । ननु प्रतिषेधादनध्ययनं भाष्यकारेणोक्तम्, तत्कथं न्यायादेवानध्ययनं स्त्रिया उच्यते, [2]अत आह । यत एवं न्यायादेव सिद्धमनध्ययनम**तः प्राप्तोऽध्ययनप्रतिषेधः** । अनुवादकं स्मृतिवचनमित्यर्थः ।

पक्षान्तरमाह—**अथवा स्मृतेः प्रतिषेधः** । अथवेति पक्षव्यावृत्तिः । न न्यायसिद्धोऽध्ययनप्रतिषेधः, किन्तु वाचनिक एव, न्यायासम्भवात् । कथमसम्भवः ? उपनयनेऽष्टवर्षस्याध्ययनोपयोगिनो द्वितीयाप्रतिपादितसंस्कार्यत्वेनाविवक्षितलिङ्गसंख्यत्वात् । न चात्मनेपदश्रुत्याचार्यार्थमुपनयनम्, अकर्त्रभिप्रायार्थत्वान्नयतेरात्मनेपदविधानस्य । तेन माणवकसंस्कारद्वारेणाध्ययनाङ्गमुपनयनमनुषङ्गाद् वाजिनवद्ध्यानयनमाचार्यकं निष्पादयतीत्येतावदात्मनेपदाद् गम्यते, न तु तादर्थ्यम् ।

---

1. 'इतरस्य' इति पू॰ मु॰ पाठः ।
१. प्रयोजना–क॰ ।
२. 'अतः' नास्ति–क॰ ।

ननु तादर्थ्येनाविधीयमानस्योपनयनस्य तन्निष्पादकता कथमवगम्यते ? नह्यदृष्टसाधनता विधिमन्तरेण सिद्ध्यति । सत्यम्, न त्वाचार्यकं नामादृष्टमस्ति यद्वैधं साधनमाकाङ्क्षेत् । क्रियानिमित्तो ह्ययं शब्दः पाचकादिवदुपनीय वेदं ददतो वाचकः। अत एव तमध्यापयेदित्यपि नाध्यापनविधिरयं दृष्टार्थत्वादध्यापनस्य विध्यपेक्षाभावात्, किन्त्वविवक्षितप्रयोजकव्यापारं विवक्षितप्रयोज्यव्यापारं याजयेदित्यादिवद् विधत्त इति न्यायरत्नमालायामेव निर्णीतमित्यलमनेन । तस्मात् प्रतिषेधादविद्या स्त्री नाशीर्वचनमर्हति । कथं तर्हि सूत्रमत आह—**एवं चेदाशीःशब्देन संस्कारा लक्ष्यन्ते। ते तूभयोरपि भवन्ति।** कुतः ? तत्र हि **लिङ्गसंख्यमविवक्षितं** संस्कार्यगतत्वात् । संस्कारेष्वपि **न पत्न्या वपनम् । किं कारणम्** ? वपनविधौ **केशश्मश्रु** इति **द्वन्द्वोऽयम्** । ततः किमित्यत आह—**तत्र** केशश्मश्रुणो**रितरेतरयोगे** सति शास्त्रोक्तं **वपनं निष्पद्यते** । न च पत्न्यास्तयोः साहित्यमस्ति, श्मश्रुणोऽभावात्। अतस्तस्या न वपनम्, असामर्थ्यात्।

**ननु केशश्मश्रुणोः संस्कार्यत्वात्तद्गतं साहित्यं** द्वन्द्वावगत**मविवक्षितम् ? उच्यते**—न तयोः संस्कार्यत्वम्, भूतभाव्युपयोगित्वाभावात् । तत्र भाव्युपयोगित्वं [1]तावन्नास्तीत्याह—**तयोरपनीतयोरन्यन्न किञ्चित् प्रयोजनं श्रूयते, येन संस्क्रियेयाताम्**। न केवलमश्रुतप्रयोजनता तयोः, किन्त्वयोग्यतापीत्याह—**वपनेनापनीताश्च** [2]श्मश्रुकेशा **अमेध्या** मेधानर्हा **भवन्ति** । तन्न तावद्भाव्युपयोगित्वम्, नापि भूतोपयोगित्वमित्याह—**न च कृतप्रयोजनाः** । ततः किमित्याह—**ततः पुरुषो वपनेन संस्क्रियते, तस्मात् केशश्मश्रुणोः पुरुषसंस्कारार्थत्वेनोपादानाद् विवक्षितं साहित्यम्**। अतोऽसम्भवाद् वपनस्य निवृत्तिः स्त्रियाः । एवमाशीःपदमनुसन्धाय ब्रह्मचर्यपदमनुसन्धत्ते । तत्र पर्वणि ब्रह्मचर्यस्य पुरुषार्थतयैव विहितत्वात् प्राकरणिकस्यापि वचनस्य तदनुवादमात्रत्वात् कथं क्रत्वर्थत्वाङ्गीकरणेन द्वाभ्यामनुष्ठानमुच्यत इत्याशङ्क्याह—**ब्रह्मचर्यं**

---

१. 'तावत्' नास्ति–क० ।

२. 'श्मश्रु' नास्ति–क० ।

**क्रत्वर्थतया यदि न विधीयते, ततस्तल्लोपेऽपि क्रतुरविगुणः, किन्तु पुरुषस्य वैगुण्यम्** । विधाने तु सति क्रत्वर्थतया तद्धानौ क्रतुवैगुण्यं स्यात् । **तस्मादस्या-** र्थस्य पुरुषार्थवाक्येनाप्राप्तत्वात् "विधिर्वा संयोगान्तरात्" इति न्यायात् **विधेयमेव** क्रत्वर्थतया ब्रह्मचर्यम् ।

[1]एवं ब्रह्मचर्यपदं यथाश्रुतं व्याख्यायाक्षिपति—**संस्कारेण गतार्थत्वादवाच्यम्** । आशीर्ग्रहणं हि संस्कारार्थमित्युक्तम् । ब्रह्मचर्यमपि च संस्कारः । तेनाशीर्ग्रहणेनैव सिद्धत्वात् पृथगवाच्यं ब्रह्मचर्यमिति । अन्यथा व्याचष्टे —**अतो ब्रह्मचर्येण कामा लक्ष्यन्ते** ब्रह्मचर्यसाध्यत्वात्, कार्ये च कारणवदुपचारात् । **ते हि पत्न्या अपि भवन्ति**, तदभावेऽधिकारानुपपत्तेः । अतोऽन्यत्तु पुंस एव विवक्षितलिङ्गत्वाद् विद्वत्त्वाच्चेति । चोदयति—**येषु नावैधत्वादोषः, अमन्त्रकत्वात्; न चोपादीयमानता** शुक्रान्वारम्भणादिवत्, **तत्रानियमः** । स्त्रीपुंसयोर्याजमानसमाख्याया विशेषाभावादिति चेत्? [2]**न, तत्रापि मुख्यत्वात्** प्रधानत्वात्, स्वतन्त्रत्वादिति यावत् । **यजमान एव भवति** कर्ता न पत्नी, परतन्त्रत्वात् स्त्रियाः । नहि स्वतन्त्रकर्तृत्वे सम्भवति परतन्त्रकर्तृकताश्रयणं युक्तम् । परिहारान्तरमाह— **अथवा यद्यप्यमन्त्रकास्ते पदार्थास्तथापि विद्वत्तया** कारणेनावधृतेषु निरूपितेषु[1] **यजमानेन** क्रियमाणेषु पदार्थेषु **प्रमादो न भविष्यति**, पत्न्यास्त्वविद्वत्तया क्रियमाणेषु प्रमाद्येत । **न च** पदार्थकरणान्यथानुपपत्त्या **तस्या** अध्ययनादिकल्पनया **विद्वत्ता शक्या कल्पयितुम्, तदीयया** यजमानसम्बन्धिन्या विद्वत्तया **क्रतोर्निराकाङ्क्षत्वात्** । प्रधानभूता हि पदार्था गुणभूतं यं कञ्चित्

---

**1. अत्र 'अवधृतेषु निरूपितेषु' इति मातृकासु दृश्यमानः पाठ एव शोभनः, न यथा पूनामुद्रितः 'तथा अवधृतेषु' इति पदरहितः पाठः; निरूपितेष्विति व्याख्यानस्य व्याख्येयपदसापेक्षत्वादिति ।**

**१. 'एवं' प्रभृति 'ब्रह्मचर्यमपि च' इत्यन्तं नास्ति–ग० ।**

**२. 'न' नास्ति–ख० ।**

कर्तारमपेक्षमाणाः प्रसिद्धविधेनैव यजमानेनानुष्ठानलाभाद्विद्वत्तां न स्त्रियाः कल्पयितुमलमिति ।

परिहारान्तरमाह—**अथवा** योऽयं **याजमानमिति** समाख्यागतस्तद्धितः स **स्त्रीप्रातिपदिकाद्वा** यजमान[माना]शब्दादुत्पाद्यः[1], **पुंप्रातिपदिकाद्वा** यजमानशब्दात् । **तत्र स्त्रीप्रातिपदिकादुत्पत्ता**वभ्युपगम्यमानायां **समन्त्रकेषु विरोधः** स्यात्, स्त्रियास्तत्र कर्तृत्वासम्भवात् । **न तु पुंप्रातिपदिकादुत्पत्तौ कश्चिद्विरोधः**, पुंसः सर्वकर्तृत्वोपपत्तेः । **तस्मात्** पुंप्रातिपादिकात्तद्धितोत्पत्तेः **सर्वं** समन्त्रकममन्त्रकं च **याजमानं यजमानेनैव कर्तव्यम्** । **आहत्य विहितं** त्वाज्यावेक्षणादि [2]**पत्न्या** । किमिति पुनरन्यतरस्मादेव तद्धितोत्पत्तिः ? यावता कृतैकशेषाभ्यां यजमानयजमानाशब्दाभ्यां तद्धितोत्पत्तिर्युक्ता, अत आह—**न च कृतैकशेषयोस्तद्धितोत्पत्तिः, प्रमाणाभावात्** । सर्वा हि वृत्तिरेकवचनान्तानामेव स्वरसतो भवति, प्रमाणान्तरवशात्तु क्वचिद् द्विवचनबहुवचनान्तानामपि वृत्तिर्भवति । न त्विह प्रमाणान्तरमस्तीत्येकवचनान्तादेव तद्धितोत्पत्तिः । तत्र च विद्वत्त्वाद्यजमानस्य पुंप्रातिपदिकादेव तद्धितोत्पत्तेर्यजमान एव कर्ता न तु पत्नीति ॥ २४ ॥

( ७—अपशूद्राधिकरणम् )

## चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ पू०

द्वितीयेऽध्याये ब्राह्मणादिश्रवणान्यग्न्याधानस्य प्रापकाणि, न निमित्तार्थानीत्युक्तम् । न च शूद्रस्याधाने विधिरस्ति । तदभावाच्चानग्निः सन् कथमग्निसाध्यानि कर्माणि कुर्यात्, अकुर्वंश्च कथमधिक्रियेत । तस्मात्पुनरुक्तत्वादनारभ्यमेवेदमधिकरणम् । उच्यते—हेत्वन्तरेणाप्यनधिकारं वक्तुं पुनरारम्भः विद्याभावादिति । तस्य च प्रयोजनमनग्निसाध्येष्वपि "पञ्चहोतारं मनसानुद्रुत्य दर्भस्तम्बे जुहुयात्" इत्यादिष्वनधिकारसिद्धिः । ननु च तत्रैवोपनयनश्रवणान्यपि प्रापकाणि, न तु निमित्तार्थानि तुल्यन्यायत्वादित्युक्तम् । अतश्चोपनयनाभावादविद्यः शूद्रः । तस्मात् सिद्धोऽनधिकारः । उच्यते, सिद्धेऽप्यस्योपनयनाभावेऽनुपनीतस्यैव विद्यासम्भवादधिकारं

---

१. 'उत्पाद्यः' इत्यतः 'शब्दात्' इत्यन्तं नास्ति—क० । २. पत्न्या च—क० ख० ।

पूर्वपक्षवादी मन्यते। द्वेधा चात्र पूर्वपक्षो भविष्यति। क्रत्वङ्गमध्ययनमनारभ्याधीतमपि तदनुष्ठानौपयिकज्ञानोपयोगित्वात् तत्प्रयुक्तम्। अतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामप्यध्ययनं प्रयुञ्जते। तत्र त्रयाणामुपनयनसंस्कारोऽध्ययनाङ्गतया विहितः। चतुर्थस्तु संस्कारविध्यभावादसंस्कृत एव स्वयमुपगतोऽधीत्य विद्यां लभते। अथवानारभ्यविधानात् सहैवोपनयनेनाध्ययनं पुरुषार्थम्। ततस्तदभावेऽपि क्रतुवैगुण्याभावादनधीतवेदोऽपि शूद्रः पुस्तकनिरीक्षणादिना विद्यां लब्ध्वाधिक्रियते।

ननु पुरुषार्थताप्यध्ययनस्य विद्योपकारेणैव, नादृष्टार्थतया। तस्मात्तदभावे विद्यैव विगुणा स्यात्। नैवम्, किन्नाम विद्याया वैगुण्यम्? सा ह्युपायान्तरेणापि प्रत्यक्षमुपजायते। स्वाध्यायविधिस्तु तस्यामेवाध्ययनमुपायं पुरुषार्थतया नियच्छति न विद्यार्थतया, तत्स्वरूपस्य कारणान्तरेणापि दर्शनात्। नापि क्रत्वर्थतया, श्रुत्याद्यभावात्। यथा दृष्टार्थेऽपि शब्दप्रयोगे साधुभाषणनियमोऽदृष्टाय भवति, तथा ज्ञानार्थमप्यध्ययनमाश्रितो नियमः पुरुषार्थ इति तल्लोपेऽपि न क्रतोर्वैगुण्यमिति सर्वेषामधिकार इति। इममेव पूर्वपक्षं हृदि निधाय चातुर्वर्ण्यमधिकृतं स्वर्गकामादिश्रुतीनामविशेषादित्याह ॥ २५ ॥

सिद्धान्तवादी तु स्थूलेनैव तावद् द्वितीयसिद्धेन न्यायेनाग्निसाध्येषु शूद्राधिकारं वारयति—

## निर्देशाद्वा...॥ २६ ॥ इति।

तद्व्याचष्टे— **वसन्तब्राह्मणकर्तृत्वविशिष्टमाधानमग्न्युत्पत्त्यर्थम्। स चाग्निर्यज्ञाङ्गम्। न च शूद्रस्याग्निरस्ति। कथं विशिष्टेन कारणेन** ब्राह्मणादिकर्तृकेणाधाने**नोत्पाद्यमाना आहवनीयादयो भवन्ति, अलौकिकत्वात्**। तेन यद्यपि कामश्रुतिभिराहवनीयादय आक्षिप्येरन्, तथाप्युपायाभावान्न शूद्रस्य सन्ति। न चात्राक्षेपोऽपि सम्भवतीत्याह— **न च यूपतुल्योऽयमाहवनीयः**। यथा बन्धनविधानाद्यूप आक्षिप्यते, न तथा होम-

विधानादाहवनीयः[1]। कुतः? तत्र हि यूपे पशुबन्धनसमर्थं यत्तत्सामान्यतोऽवगतम्, नह्यन्यथा पशुर्बन्धुं[2] शक्यते। विशेष एव त्वनवगतः। स ह्युपपदात् 'खादिरे बध्नाति' इत्यादिकाद्वाक्यान्तराद्वा छेदनजोषणादिविधायकादवधार्यते—अयं खादिरादिश्छेदनादिसंस्कृतो यूप इति। इह तु होमेनाहवनीयस्यानाक्षेपात् सामान्यावगतिर्नास्ति। तस्मादन्येन प्रमाणेन सामान्यतोऽप्यनाक्षेपाद् वेदाद्योऽवगम्यते स आहवनीयः। स च वसन्तब्राह्मणकर्तृकोऽवगम्यते वेदान्नान्यादृशः। तेनान्यकालकर्तृको न भवत्याहवनीयः। तदभावे च शूद्रस्य होममात्राद् विगुणात् फलाभावः। तस्मात् फलाभावात् शूद्रस्यानधिकारः। [3]फलोपभोग एव ह्यधिकार इति॥ २६॥

## निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात्॥२७॥ पू०

यद्यपि होमेनाहवनीयादयो नाक्षिप्यन्ते, तथापि वचनैस्तावत्ते विहिताः "यदाहवनीये जुहोति" इत्यादिभिः। तैश्चाहवनीयादिभिरर्थाक्षिप्तमाधानम्। नहि तेन विनाहवनीयादयः सन्ति तदेकोपायत्वात्। तस्मात् प्राप्तमाधानमनूद्य तत्र वसन्तादिस्तु गुणो विधीयते निमित्ते ब्राह्मणश्चेदादधीत वसन्त इति। ततश्च तस्यैव तेन गुणेन सगुणमाधानम्, तदभावे च विगुणं भवति। शूद्रस्य तु गुणाभावादगुणमेवाधानमग्नीनुत्पादयतीत्यग्निमत्त्वादसावप्यधिक्रियेतेति॥ २७॥

## अपि वान्यार्थदर्शनाद्यथाश्रुति प्रतीयेत॥ २८॥

निमित्तार्थता न घटते। कुतः? नह्यर्थादाधानं प्राप्नोति। कुतः? नहीदं लोके विज्ञायते आधानेनाहवनीयो भवतीति। यदि विज्ञायेत, ततस्तदनुवादेन निमित्ते कालविधिः स्यात्। तदभावात्तु निमित्तार्थतानुपपत्तिः।

---

१. नीयादयः—क०।

२. बंद्धुं—ग०।

३. फललाभ—ख० ग०।

कुतस्तर्ह्यवगम्यते ? अत आह—**शास्त्रादवगम्यते**। **तच्च शास्त्रादवगम्यमानं विशिष्टकालकर्तृकमेवाधानमाहवनीयमुत्पादयतीति** गम्यते। **अन्यकालकर्तृकं कथमुत्पादयेत्, शास्त्रेणाचोदितत्वात्**। किञ्च, यद्यपि लोकादवगम्येताधानमग्नीनामुत्पादकमिति, तथापि न निमित्तार्थानि ब्राह्मणादिश्रवणानि, किन्तु प्रापकाण्येवेत्याह—**आधानोत्तरकालाः कामश्रुतयः**। वसन्तादिविधिप्रयुक्तयैव सिद्धमग्निमत्त्वमधिकृत्य कामश्रुतयः प्रवर्तन्ते। न तु तदाक्षिप्तमाधानमूरीकृत्य पश्चाद्वसन्तादिविधिः, श्रुते सति विधावाक्षेपायोगात्। न चाक्षेपोऽप्यैकान्तिको येन [1]न विधीयेत। आहिताग्निभ्यः क्रीत्वाऽपि तत्सम्पादनसम्भवादित्याह—**न चाधानमेव केवलोऽभ्युपायोऽग्नीनाम्**। अशक्तं चेदं वाक्यं गुणविधावित्याह—**गुणद्वयविधानाच्च वाक्यभेदः स्थित एव**। नहि प्राप्तमाधानमुद्दिश्य ब्राह्मणः कर्ता वसन्तश्च कालो विधातुं शक्यते। ननु न ब्राह्मणो विधीयते तत्कर्तृकस्याधानस्य कालमात्रं विधीयते, तथापि विशिष्टानुवादाद्वाक्यभेद एव। न च प्रकरणप्राप्तमाधानमङ्गीकृत्य ब्राह्मणो वसन्त इत्येतावन्मात्रं विधातुं शक्यम्, प्रकरणाभावात्। अर्थप्राप्तं हि तद्भवतेष्यते, न तु केनचिद्वचनान्तरेण प्रकृतम्। तस्मादस्ति वाक्यभेद इति विशिष्टाधानविधानम्॥ २८॥

अत्र भाष्यकारेणान्यार्थदर्शनं व्याचक्षाणेनोदाहृतं ब्रह्मसामादौ शूद्रस्याननुक्रमणादिति। तत्परिहारार्थं चेदं पूर्वपक्षसूत्रम्—

**न काम्यत्वात्[1] ॥ ३१ ॥ इति। पू०**

तद्व्याचक्षाणेनाभीवर्तादिकं सामान्यविहितं ब्रह्मसामादि भविष्यतीत्युक्तम्। तत्र ब्रह्मसामोदाहरणमाक्षिपति—**बार्हद्गिरं गवामयने समाम्नायते, अभीवर्तो ज्योतिष्टोमे, पार्थुरश्ममश्वमेधे। [2]एवं विदेशपाठादनुदाहरणम्।**

---

**1. अत्र टुपटीकायां कानिचित् सूत्राणि तद्भाष्याणि च न व्याख्यातानि। तानि च उत्तरतत्तत्सूत्रटीकाविवरणव्याजेन तन्त्ररत्ने विशदीकृतानि। अतोऽयं सूत्रपौर्वापर्यविनिमयः प्राप्त इति द्रष्टव्यम्।**

**१. 'न' नास्ति—क०। २. 'एवं' नास्ति—क०।**

यदि ह्येकत्रैव बार्हद्गिरं पार्थुरश्मं रायोवाजीयं च ब्राह्मणादिविषयं श्रूयेत, अभीवर्तं चानारभ्य, तत इदं युक्तं भवेत्। तदभावात्त्वयुक्तम्। अतः पयो व्रतमित्याद्येवोदाहरणमिति। अत्र—

**निर्देशात्तु पक्षे स्यात् ॥ २९ ॥ पू०**

इति पूर्वपक्षसूत्रम्। सामान्येनाप्याधानं निर्दिष्टम्—"य एवं विद्वानग्निमाधत्ते" इति। ततः प्राप्तत्वादाधानस्य वसन्तादिश्रवणं निमित्तार्थमिति शूद्रोऽप्यधिक्रियेतेति। तस्योत्तरं सूत्रम्—

**अपि वा वेदनिर्देशात्¹... ॥ ३३ ॥ इति। सि०**

तस्याभिप्रायः—"य एवं विद्वानग्निमाधत्ते" इत्यस्य सम्भारविधिस्तुत्यर्थत्वेनाविधायकत्वादप्राप्तमेवाधानम्। अतो न निमित्तार्थं श्रवणम्। भवतु वा निमित्तार्थता, तथापि विद्याभावादेवानधिकार इति। तद्व्याचष्टे— कथं विद्याभावः? स्वाध्यायविधौ हि न ब्राह्मणादिश्रवणमस्तीत्याशङ्क्याह—**वसन्ते गर्भाष्टमे ब्राह्मणमुपनयीतेत्यत्र वसन्तो गर्भाष्टमत्वमन्ये च** ब्राह्मणादि**नियमा अध्ययनाङ्गम्**। अयमर्थः—"ब्राह्मणमुपनयीत" इत्यत्र द्वितीयाश्रुत्या माणवकसंस्कारार्थं तावदुपनयनं प्रतीयते। तस्य संस्कृतस्य किं कर्त्तव्यमित्यपेक्षायां 'स्वाध्यायोऽध्येतव्यः' इति तत्प्रक्रमे विधीयमानमध्ययनमनिर्दिष्टकर्तृकं कर्तारमपेक्षमाणमुपनीतकर्तृकत्वेन निश्चीयते।

किञ्चात्मनेपदादध्ययनमेव कर्तुमुपनीयत इति गम्यते। तद्धि आचार्यकरणे वर्तमानान्नयतेरकर्त्रभिप्राये क्रियाफले भवति। तेन तद्दर्शनादुपनयनमुपनेयसंस्कारार्थमप्युपनेतृगतमाचार्यकमप्यनुषङ्गात् साधयतीति गम्यते। तत्साधनत्वञ्च न केवलस्योपनयनस्य सम्भवति, किन्त्वध्ययनसहितस्य। तेनाध्ययनमेवोपनीतस्य कर्मेत्युपनीतकर्तृकमध्ययनमुपनयनस्य ब्राह्मणादिविषयत्वात्तेषामेव विहितं भवतीति। तदनेन प्रकारेण ब्राह्मणत्वादयोऽध्ययनाङ्गमिति न शूद्रस्याध्ययनसम्भवः। ननु ज्ञानमुखेन क्रत्वङ्गमध्ययनं क्रतुप्रयुक्तम्। क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वन्तश्चतुर्णामप्यध्ययनं प्रयुञ्जते। ततश्च ब्राह्मणादीनामुपनयनसंस्कारो विहितो न शूद्रस्य।

१. 'अपि' नास्ति—क०।

अतः सोऽनुपनीतः स्वयमुपेत्याध्येष्यते, अत आह—**पुरुषस्य च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनं चोद्यते,** न क्रतोः, श्रुत्याद्यभावात्। तेन पुरुषाभिलषितज्ञानार्थमध्ययनं न क्रत्वङ्गम्। तदेतदर्थवादाधिकरणे 'सर्वत्रैवैतल्लक्षयितव्यम्' इत्यादिना विस्तरेण वर्णितम्। अस्माभिश्च न्यायरत्नमालायाम्। ततश्च न क्रतुप्रयुक्तमध्ययनम्, किन्तु स्वविधिप्रयुक्तमिति।

ततः किमित्यत आह—**अत ईदृश्या विशिष्टयेतिकर्त्तव्यतया वेदोपादानं पुरुषार्थम्,** तादृशस्यैव स्वाध्यायविधिना विधानात्। अतो न शूद्रस्यास्तीति। ननु स्वाध्यायविधिविहितमध्ययनं मा नाम शूद्रस्य भूत्, अन्यदेव त्वध्ययनं क्रतवस्तस्याक्षेप्स्यन्ति। अत आह—**क्रतुनाऽर्थाद्वेदोऽपेक्षित आत्मनिर्वृत्त्यर्थं** न तु श्रुत्या तदर्थमध्ययनं विहितमिति। तथापि किमित्यत आह—**अतः स वेदाध्ययनमप्रयोजयन् प्रसङ्गात् पुरुषार्थेन निराकाङ्क्षीक्रियते,** गोदोहनमिव क्रियापेक्षं क्रत्वर्थेन प्रणयनेन। ततोऽपि किमित्यत आह—**अतो यादृशं** ब्राह्मणादिकर्तृक**मध्ययनं** स्वाध्यायविधिनावगतम्, **तादृशेनैव** क्रतूनां **निराकाङ्क्षत्वात् शूद्रस्य**[1] **चाध्ययनस्य** विधिविहितत्**वाभावात्** तादृशाध्ययनोपात्तज्ञानसाध्येषु कर्मसु शक्त्यभावाद**नधिकार इत्येवमन्तर्नीताभिप्रायः सिद्धान्तवाद्याह**—अपशूद्रमधिकार इति। **इतरस्त्वविदिताभिप्राय आह**—

## गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ पू०

**क्रत्वङ्गमध्ययनं** तदनुपनीतस्यापि शूद्रस्य सम्भवति। तस्मादनुपनीतः पठिष्यति॥ ३४ ॥

## [2]तदर्थत्वात् संस्कारस्य ॥ ३५ ॥ सि०

1. शूद्रस्येति। शक्त्यभावादनधिकार इत्युत्तरेणान्वयः।

१. र्णीताभिप्रा—क० ग०।

२. 'तदर्थत्वात्' नास्ति—क०।

इति सिद्धान्ताभिप्रायविवरणम्। सूत्रं व्याचष्टे—उपनयनसंस्कारो ब्राह्मणादिनियतः। स हि[1] विद्यार्थः, प्रकरणादात्मनेपदाच्चेत्युक्तं प्राक्। तदुक्तं भाष्यकारेण—उपनयनसंस्कारस्य विद्यार्थत्वादित्यादिना। अस्माच्च ग्रन्थादवगम्यते—यत्[2] [3]पत्न्यधिकरणे उपनयनसाध्याचार्यकाङ्गत्वमभिहितम्, तत्परमतमिति। स्वच्छन्दचारिणामेव त्वेकदेशिनामुत्सूत्रमुद्भाष्यं च प्रवर्तमानानामिदमुचितं वक्तुम्, आचार्यकाङ्गमुपनयनं नाध्ययनाङ्गमिति। न च क्रत्वङ्गमध्ययनं येनानुपनीतस्यैव शूद्रस्य स्यादित्याह—विद्या च पुरुषार्था। कुत [4]इत्याह—इत्यत्र पूर्व एव न्यायो द्रष्टव्यः। वर्णितं ह्येतद्यथा—अर्थज्ञानपर्यन्तमध्ययनं स्वाध्यायाध्ययनविधिना विधीयते, न [5]तु तद्द्वारेण क्रत्वपूर्वपर्यन्तम्। तन्मात्रपर्यवसानेनापि प्रयोजनावाप्तेः, न तदतिलङ्घनेन दूरस्थं क्रत्वपूर्वं यावद् गन्तव्यम्। तस्मात् स्वाध्यायविधिप्रयुक्ता[6] विद्या कामश्रुतिभिर्विद्यार्थिनीभिरुपजीव्यते। शूद्रस्य तु स्वाध्यायविधिप्रयुक्तविद्याभावादनधिकार इति ॥ ३५ ॥

सम्प्रति द्वितीयं पूर्वपक्षमाह—

## विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥ पू०

यत एव पुरुषार्थमध्ययनम्, अत एव शूद्रस्याप्यधिकारः। यदि हि क्रत्वङ्गमध्ययनं स्यात् ततस्तल्लोपे क्रतुवैगुण्यं स्यात्। अक्रत्वर्थत्वे त्वनधीतवेदेनापि शूद्रेण पुस्तकनिरीक्षणोपदेष्टृवचनादिना विद्यां लब्ध्वा क्रियमाणस्य न किञ्चित् क्रतोर्वैगुण्यमिति। तदाह—यस्य ब्राह्मणादेरुपनयनादयः संस्कारा विहिताः। आदिशब्देनाध्ययनव्रतादीनां ग्रहणम्। तस्य ते भवन्तु; इतरस्तु शूद्रोऽनुपनीत

---

१. नियमैः सह विद्यार्थः—ख० ग०। २. 'यत्' नास्ति—क०।

३. पत्त्यधिकरणे—ग०। ४. 'इत्याह' नास्ति—ख० ग०।

५. च—ख०। ६. विहिता—ख० ग०।

उपनयनाध्ययनशून्यः स्वयं पुस्तकनिरीक्षणादिना **पठिष्यति**, विद्यां प्राप्नोतीत्यर्थः। नन्वनधीतवेदेनानुपनीतेन वा कर्त्रा क्रियमाणस्य क्रतोर्वैगुण्यं स्यात्। तत्राह—

**न च क्रतुवैगुण्यमुपनयनादीनां पुरुषार्थत्वात्तल्लोपेऽपि** क्रत्ववैगुण्यात् ॥३६॥

**[1]अविद्यत्वादभावः कर्मणि स्यात् ॥३७॥ सि०**

**अनुपनीताध्ययने क्रतोर्वैगुण्यम्**। विद्यार्जनोपलक्षणार्थमध्ययनग्रहणम्। उपनयनसंस्कृतब्राह्मणादिकर्तृकं यदध्ययनं विहितं तद्व्यतिरेकेणोपायान्तरेण क्रियमाणेनापि विद्यार्जनेनानुष्ठितस्य क्रतोर्वैगुण्यं भवति। **कथम्—'स्वाध्यायोऽध्येतव्यः' इति यमनियमादिभि**[1]**रुपेतमध्ययनं पुरुषार्थत्वेनावगतम्**। मधुमांसादिवर्जनं यमः। समिदाधानाद्यनुष्ठानं नियमः। तथापि कथं क्रतोर्वैगुण्यमत आह— **तादृशमेव प्रसङ्गात् क्रतुर्गृह्णाति**। किमिति प्रसङ्गाद् गृह्णाति न तु स्वयमेवोपायान्तरं विद्यार्थमाक्षिपतीत्यत आह—**न चान्यथानुपपत्त्याक्षिपति**। कुतः? **अन्यथापि** स्वाध्यायविधिप्रयुक्तविद्योपजीवनेनाप्युपपद्यमानत्वात्। **अतो विशिष्टेनाध्ययनेन निराकाङ्क्षीकृतत्वादन्यादृशमध्ययनं न गृह्यते** क्रतुभिः। ततश्च **यथा गोदोहन**माश्रयापेक्षं **दर्शपूर्णमासाङ्गभूतेन प्रणयनेन नैराकाङ्क्ष्याद् वहिःप्रणयनेन विगुणं भवति**, न चैतावता तत्प्रणयनं गोदोहनाङ्गं भवति; **एवमिहाप्य**क्रत्वर्थत्वे[2]ऽप्यध्ययनस्य स्वाध्यायविधिप्रयुक्ताध्ययनसम्पादितविद्योपजीवित्वा**दनियताध्ययनेन** विद्यार्जनेन **विगुणो भवति** क्रतुः, असत्यप्यध्ययनस्य क्रत्वङ्गत्वे विशिष्टाध्ययनसम्पादितस्य ज्ञानस्य क्रत्वङ्गत्वात्। यथा असत्यपि प्रणयनस्याङ्गत्वे तत्करणीभूतमेव गोदोहनं पश्वङ्गं तद्वदिहापि। **अत आह** भाष्यकारः—**अधीयानस्यापि** शूद्रस्या**ध्ययनफलं** कर्माधिकारित्वं **न भवतीति**। तस्मादनधिकारः शूद्रस्येति सिद्धम्।

---

1. अवैद्यत्वादिति प्रसिद्धः पाठः।

१. दभ्युपेत—क०।

२. त्वेन—क०।

[1]द्रव्यार्जनानाक्षेपेऽप्ययमेव न्यायः। यथाग्निविद्ये विध्यन्तरसिद्धे न क्रतुभिः प्रयुज्येते, तथा द्रव्यमपि पुरुषार्थत्वेनैवार्जितं क्रतुविधिभिरङ्गीक्रियते, न तु तैराक्षिप्यते। एतच्चोत्तराधिकरणपूर्वपक्षौपयिकतयोक्तम्। यथैव ह्यनग्नेरविद्यस्य चानधिकारः, न तु तमप्यधिकृत्य तस्याग्निविद्ये आक्षिपन्ति क्रतवः, तथैव नाद्रव्यमधिकृत्य तस्य द्रव्यार्जनमाक्षिपन्ति, किन्तु द्रव्यवन्तमेवाधिकुर्वन्तीत्यद्रव्यस्यानधिकार इति ॥ ३७ ॥

( ८—अद्रव्यस्याप्यधिकाराधिकरणम् )

**त्रयाणां द्रव्यसम्पन्नः [2]कर्मणो द्रव्यसिद्धित्वात् ॥३९॥ पू०**

वर्णितः पूर्वपक्षः। सिद्धान्तमाह—

**अनित्यत्वात्तु नैवं स्यात् ॥४०॥ सि०**

**न च जात्या कश्चिदद्रव्यो नामास्ति, येनेतरेऽधिक्रियेरन्। न च द्रव्यवान्, येनेतरे नाधिक्रियेरन्। तस्माद् द्रव्यवत्त्वस्यानवस्थितत्वात् कारणस्य सर्वेऽधिक्रियेरन्।** अस्यार्थः—न द्रव्यवत्त्वमधिकारिविशेषणं प्रमाणाभावात्। यो हि यजेतेति नियुक्तः शक्नोति यागं निर्वर्तयितुं स नियुज्यते नान्य इत्येतावदेवात्र प्रमाणवत्। शक्नोति चाद्रव्योऽपि द्रव्यमर्जयित्वा यष्टुम्। न चैवं निरूपयितुं शक्यतेऽस्य न सम्भवत्येव द्रव्यमिति। यद्येवं निरूप्येत ततस्तद्वर्जमितरेऽधिक्रियेरन्। न त्वेतदस्तीति। नन्वेवं तर्हि शूद्रोऽपि विद्यामर्जयित्वा शक्नोत्येव यष्टुमिति सोऽपि नियुज्येत। नैष दोषः, नह्यविद्यस्य शक्तिरस्ति। न चास्य क्रतुभिर्विद्याक्षेप्तुं शक्यते, विध्यन्तरसिद्धविद्यैरेव क्रतूनामनुष्ठानोपपत्तौ तदाक्षेपायोगात्। द्रव्यवत्ता तु न विध्यन्तरेण केषाञ्चित् क्लृप्ता, यतस्तानधिकृत्य [3]क्रतवो नान्यानधिकुर्वीरन्। असत्यपि विध्यन्तरे जीवनायैव येषामस्ति द्रव्यं तेऽधिक्रियन्तामिति चेत्? न, अविशेषात्। नहि क्रतूनां

---

१. द्रव्यताक्षेपे—ग०।

२. कर्मणां—ख० ग०।

३. ततो—ख०।

जीवनस्य च कश्चिद्विशेषः, येन जीवनं प्रयोजकमर्जनस्य न क्रतुरित्युच्यते, द्वयोरपि पुरुषार्थत्वात्। अतो यावत्किञ्चित्पुरुषस्य द्रव्यसाध्यं प्रयोजनं तत्सर्वमविशेषेण द्रव्यार्जनं प्रयुङ्क्ते। न चैवं द्रव्यार्जननियमस्य क्रत्वङ्गत्वप्रसङ्गः, श्रुत्याद्यभावात्। अर्जनस्य क्रत्वक्रतुसाधारणत्वेनानैकान्तिकत्वात्। अतोऽविशेषात् सर्वेषामधिकार इति सिद्धम् ॥ ४० ॥

( ९–प्रतिसमाधेयाङ्गवैकल्यस्याधिकाराधिकरणम् )

## अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥ सि०

( १०–अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मानधिकाराधिकरणम् )

## उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥ सि०

अधिकरणद्वयमपि सह व्याचष्टे—जात्यन्धादीनामनधिकारोऽप्रतिसमाधेयत्वादङ्गवैकल्यस्य केनचिदपि प्रकारेण तेषामाज्यावेक्षणाद्यङ्गवति क्रतौ सामर्थ्याभावादितरेषां तु प्रतिसमाधेयाङ्गवैकल्यानामनवस्थितत्वादशक्तेः पूर्व एव न्यायः। योऽद्रव्यस्योक्तो न्यायः स एव तेषां न्यायः। शक्नुवन्ति हि ते नियुक्ताः सामर्थ्याधानेन क्रतुमभिनिर्वर्तयितुम्, अद्रव्य इव द्रव्यार्जनेन। तदिदमुक्तम्—**अङ्गहीनश्च तद्धर्मेति**। किंधर्मा?[1] अधिकारीत्यर्थः। किमर्थं तर्ह्यधिकरणान्तरम्? द्रव्यं ह्यत्यन्तबहिर्भूतं मा नामाधिकारिणमवच्छैत्सीत्, अङ्गवत्ता त्वात्मवर्तित्वादवच्छिनत्तीति विशेषाशङ्कायामुक्तमङ्गहीनश्च तद्धर्मेति।

यद्यङ्गहीनोऽप्यधिक्रियेत, ततोऽप्रतिसमाधेयाङ्गवैकल्योऽप्यधिक्रियतामित्याशङ्क्याऽभिहितम्—उत्पत्तित एव[1] येषामङ्गवैकल्यं ते नाधिक्रियन्त इति ॥ ४१-४२॥

---

1. सूत्रस्थेनोत्पत्तिशब्देन स्थितिर्लक्ष्यते, 'जायते अस्ति' इत्यादिभावविकारपरिगणनस्थले स्थितेरुत्पत्त्यनन्तरत्वेन सामीप्यसम्बन्धस्य विद्यमानत्वात्। तेनाङ्गवैकल्यस्याप्रतिसमाधेयत्वं लभ्यते। तद् येषां भवति ते नाधिक्रियन्त इत्यर्थः प्रतिभाति।

१. 'धर्मा' नास्ति–ख०।

( ११–दर्शपूर्णमासयोस्त्र्यार्षेयस्यैवाधिकाराधिकरणम् )

## अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥ सि०

दर्शपूर्णमासयोस्तद्विकारेषु[1] च किमत्र्यार्षेयोऽप्यधिक्रियते, उत त्र्यार्षेयं एवेति चिन्त्यते। पूर्वपक्षमाह–**'आर्षेयं वृणीते'** इति **सामान्येनार्षेयवरणस्य विधिः**, न तु संख्याविशिष्टस्य। अतस्तावन्मात्रस्याङ्गत्वात् सर्वाधिकारः। ननु 'त्रीन् वृणीते' इत्यादिवचनात्[2] त्र्यार्षेयवरणमेवाङ्गमत आह–**एकत्वादयस्तु**[3] सामान्यविधिनैव **प्राप्तत्वात् स्तुत्यर्थाः**। यथा सिद्धान्त एकत्वद्वित्वश्रवणमर्थवादः[१], त्रित्ववचनेनैव प्राप्तत्वात्; तथा त्रित्वमपि सामान्यविधिनैव[२] प्राप्तत्वा[३]दनुवादार्थमेव। [४]तेनैकत्वादीनां सर्वेषामर्थवादत्वाद् वरणमात्रमङ्गम्। **चतुरादिप्रतिषेधश्चास्मिन्नेव पक्ष उपपद्यते**। त्रित्वविशिष्टे तु वरणे विहिते कः प्रसङ्गश्चतुरादीनाम्, येन "न चतुरो वृणीते न पञ्चातिवृणीते" इति प्रतिषिध्येरन्। तेन प्रतिषिद्धचतुरार्षेयषडार्षेयवर्जमेकद्वित्रिपञ्चार्षेयाणामधिकारः।

अथवा मा नाम भूवन्नेकत्वादयोऽर्थवादाः, किन्तु संख्यया वरणं विशेष्यते।

---

1. तद्विकारेषु चेति। दर्शपूर्णमासावधिकृत्य चिन्तायां विहितायां यत् सिद्ध्यति, तदेव तद्विकृतिष्वपीति स्फुटप्रतिपत्त्यर्थमिदं विकारग्रहणम्, न तु विकृतीनामपि पृथग्विचारविषयत्वप्रतिपत्त्यर्थम्। तेन विकृतिग्रहणस्यानुपपन्नत्वप्रतिपादनं श्रीशम्भुभट्टस्य प्रभावल्यां नातीव शोभामावहति।
2. अत्र आदिपदार्थश्चिन्त्यः।
3. एकत्वादय इति। आदिशब्देन द्वित्वत्रित्वयोर्ग्रहणम्। तत्रैकत्वद्वित्वयोरुपादानं दृष्टान्तार्थम्। प्रकृतं तु त्रित्वमेवेति मत्वा वाक्यार्थमाह—यथेति।

१. मनुवादः–क०।

२. वचनेनैव–क०।

३. दर्थवादा–ख० ग०।

४. एतेन–क०।

तथापि न त्र्यार्षेयस्यैवाधिकारः, किन्त्वेकद्वित्र्यार्षेयाणामपि[1]। पञ्चार्षेयस्त्वेको मा नामाधिकारी, पञ्चत्वस्याश्रवणात्। तदाह—**अथवा सामान्येन** वरणे **विहिते सत्येकत्वादिभिः सर्वैर्विशेष्यते** विशेषणं क्रियते, न तु त्रित्वेन केवलेन। अस्मिंश्च पक्षे "न चतुरो वृणीते न पञ्चातिवृणीते" इति[1] नित्यानुवादः। तस्माद्-त्र्यार्षेयस्याप्यधिकार **इत्येवं प्राप्ते ब्रूमः—'आर्षेयं वृणीते' इति** सामान्यं विशेषं प्रति **साकाङ्क्षं** वाक्यात् **त्रीन् वृणीत इति** त्रित्वेन **विशेष्यते,** अन्यथा त्रित्वश्रुतेरानर्थक्यात्, नित्यवत् प्राप्त्यभावेनानुवादासम्भवात्, पाक्षिकानुवादत्वे वा नित्यवच्छ्रवणबाधप्रसङ्गात्।

नन्वेकत्वाद्यपि श्रूयते तत्कथं त्रित्वेनैव विशेष्यते? अत आह—**एकत्वादयस्तु** त्रित्वचोदनयैव नित्यप्राप्तत्वा**दव्युत्यानुवाद**त्वेनार्थ**वादाः,** वैश्वानरद्वादशकपालेऽष्टत्वादिश्रवणवत्। **इतरथा** यद्येकत्वाद्यपि विधीयेत, ततो **वाक्यभेदोऽदृष्टकल्पनाऽश्रुतविधिकल्पना च** प्रसज्येत। नहि सम्भवत्येकवाक्यत्वे वाक्यभेदो युक्तः। तद्भेदाच्चादृष्टभेदोऽप्यवश्यं कल्प्यः, सोऽप्यन्याय्यः। विधिश्चात्र न श्रुतः, 'एकं वृणीते' इत्यादिषु सर्वेषु वर्तमानापदेशात्। स्तुत्या तु विधिः कल्प्यः। स चैक एव कल्पयितुमुचितो न बहव इति। अथ[2] **सामान्येन विधिरेकत्वादयस्तु सर्वेऽर्थवादा इति चेत्?** एवं ह्यत्यन्तलाघवं भवतीति। उत्तरम्—**एवमपि चतुरादिप्रतिषेधाद्वाक्यभेदः स्थित एव।** नहि प्रतिषेधद्वयस्य परस्परैकवाक्यत्वम्, आर्षेयवरणविध्येकवाक्यत्वं वा सम्भवति। अथ नानुयाजेष्वितिवत्पर्युदासेनैकवाक्यत्वम्, तथापि पर्युदासद्वयाश्रयणाद्वाक्यभेद एव। **अस्मत्पक्षे पुनरार्षेयं** वृणीते। किंसंख्यम्? त्रीनित्येवमेक**वाक्यत्वान्न कश्चिद्दोषः**। तस्मान्नैकार्षेयद्व्यार्षेययोरधिकारः। चतुरार्षेयपञ्चार्षेयादयस्त्वधिक्रियन्त एवेत्याह—

---

1. **अपिशब्देन समुच्चेतव्यमिह नास्ति। त्र्यार्षेयस्य, तथा एकार्षेयद्व्यार्षेययोरपीत्यर्थः।**

१. इत्यनि—क० ग०।

२. अथवा—क०।

**त्रीण्यार्षेयाणि यः सम्पादयितुं शक्नोति सोऽधिक्रियते। चतुरार्षेयस्य च त्रित्वसम्पादनेऽस्ति सामर्थ्यम्, न चेद्‌वाक्यमस्ति त्र्यार्षेय एवाधिक्रियत इति।**

**नन्विदमेव वाक्यमस्ति 'त्रीन् वृणीते' इति।** अनेन हि त्र्यार्षेयस्यैवाधिकारः प्रतीयते। परिहरति—**त्रीण्यार्षेयाणि यः सम्पादयितुं शक्नोति तस्य वरणमुच्यते, न तु यस्य त्रीण्येवेति।** 'त्रीन् वृणीते' इति हि त्रयाणां वरणमुच्यते। तच्च चतुरार्षेयोऽपि शक्नोत्येव सम्पादयितुम्। न च यस्य यावन्त्यार्षेयाणि तस्य तानि सर्वाणि वरयितव्यानीति प्रमाणमस्ति। तेन चतुरार्षेयोऽपि त्रीनेव वृण्वानः समर्थ एवानुष्ठातुम्। किमिति पुनर्यस्य त्रीण्येवेति नोच्यते? तत्राह—**गुरु वाक्यमेवं** सति **भवति,** अनेकार्थप्रतिपादनात्। **अनपेक्षितश्च सम्बन्धः स्यात्।** न खल्वार्षेयं वृणीत इत्यस्य चतुरार्षेयो नाधिक्रियत इत्येवंविधे विशेषेऽस्त्यपेक्षा, स्वविशेषमात्रापेक्षत्वात्। तस्मादस्त्येवाधिकारः। चोदयति—**'न पञ्चातिवृणीते' इति पञ्चातिक्रमणप्रतिषेधादिदमवगम्यते—अस्ति पञ्चानां वरणमिति**[1], इतरथा न पञ्च वृणीत इत्येवावक्ष्यत्। **नैतदेवम्, अनुमानादेव तद्वरणं कल्प्यते** पञ्चानाम्। न तु शास्त्रेण। **न चानुमानेन शक्यः शास्त्रार्थोऽनुष्ठातुम्।** अनैकान्तिकं चानुमानमित्याह—[2]**त्रिवरणे हि** क्रियमाणे सति **न पञ्च व्रियन्ते, नाप्यतिक्रम्यन्ते।** तेन न पञ्चातिवृणीत इत्यस्य त्र्यार्षेयवरणेन प्राप्तानुवादत्वेनोपपन्नत्वात् न पञ्चानां वरणम्। **एवं** त्र्यार्षेयवरणे [3]विधीयमाने **लघुत्वेन** विधेयस्यैकत्वादिभिस्तस्यैव **स्तुतौ** सत्या**मेकवाक्यत्वं घटते, इतरथा वाक्यभेदादिति स्थितमेव प्राक्। तस्मात् त्रित्वसम्पादनसमर्थोऽधिक्रियते।**

---

१. 'इति' नास्ति—क०।

२. त्रित्ववरणे—क० ख० ग०।

३. विधाने—क०।

नन्वस्य वचनस्य त्र्यार्षेयवरणविधायकत्वे न्यायेन साधितेऽपि नात्र्यार्षेयस्यानधिकारः, ताण्डके मनुवत्पक्षस्य विहितत्वात्, तदाश्रयणेनान्येषामप्यधिकारसम्भवात्। तस्मादनर्थकमिदमधिकरणम्। अत आह—**भार्गव इत्येतावन्मात्रं वरणं न कर्तव्यम्।** पूर्वपक्षे हि येऽपि मनुवत्पक्षमनाश्रित्य भार्गवादिरूपं वरणमाश्रयन्ते, तेषामपि भार्गव इत्येतावन्मात्रं वरणं स्यात्। तन्निवृत्त्यर्थमधिकरणम्। **मनुवत्पक्षे** त्वाश्रीयमाणे **यस्याप्येको यस्यापि पञ्च तस्य** सर्वस्यापि **सकृदेवोच्चारणं मनुवदिति।** पक्षान्तरे तु त्र्यार्षेयवरणमेवेति सिद्धम्॥ ४३॥

(१२—रथकाराधिकरणम्)

## वचनाद्रथकारस्याधाने[1] सर्वशेषत्वात्॥ ४४॥ सि०

यद्यपि रूढ्या जातिवचनः, तथापि विद्याभावेन[2] सौधन्वनानामसमर्थत्वेनापशूद्राधिकरणन्यायेनानधिकारात् [1]त्रैवर्णिक एवावयवव्युत्पत्त्या रथकारशब्देन [2]निर्दिश्यते। तेषामेव रथकरणे निमित्ते वसन्तादिकालमौत्पत्तिकमपि बाधित्वा नैमित्तिकबलीयस्त्वेन वर्षा विधीयन्ते। सत्यपि च ब्राह्मणादिसंयुक्तानां वाक्यानां प्रापकत्वे रथकारसंयुक्तमेकं निमित्तार्थं भविष्यति। नह्यैकरूप्यं नाम केनचिन्नियतम्। तस्माद्वर्षाधानेऽपि त्रयाणामेवाधिकार इत्येवं प्राप्ते ब्रूमः—रथकारस्यैव ऋभुसौधन्वनसात्त्वताद्यपरनामधेयस्याधानान्तरमिदं वर्षासु विधीयते वचनात्। नहि वचनस्य किञ्चिदशक्यमस्ति। तेन तावद्रूढिबलेन योगं बाधित्वा सौधन्वनानामाधाने विहिते तद्बलेनैव यथाकथञ्चित् तन्मात्रौपयिकं विद्यार्जनमपि विनोपनयनेनाक्षिप्यते स्वाध्यायविधिविहिताध्ययनाङ्गत्वादुपनयनस्य, रथकारस्य च

---

1. अस्येत्यधिकः पाठो मुद्रितपुस्तके।

2. विद्याभावेनेति। रथकारशब्दार्थस्यावान्तरवर्णस्यापशूद्राधिकरणन्यायेनाविद्वत्तया यथाऽत्र्यार्षेयस्यासामर्थ्यादनधिकारः, तथासामर्थ्येनानधिकार इति दृष्टान्तसंगत्या पूर्वपक्ष इति सूचितम्।

१. त्रैवर्णिकाः—क०।

२. निर्दिश्यन्ते—क०।

तदभावाद् आधानविधिनैव विद्यार्जनमात्रमाक्षिप्यते। न चास्याधानसद्भावेऽपि[1] क्रत्वधिकारः सम्भवति, विद्याभावात्। आधानविधिस्तु तावन्मात्रोपक्षीणत्वान्न क्रतुष्वधिकारं कल्पयितुमर्हति। तेन प्रधानकर्मेदमाधानं विश्वजिदादिवत् कल्प्यफलम्। न चास्याहवनीयाद्युत्पादकत्वम्, अर्थकर्मत्वेनाग्निसंस्कारार्थत्वाभावात्। किमिति पुनः संस्कारार्थत्वं न भवति? क्रत्वधिकाराभावेनाग्नीनामनुपयोगित्वेनासंस्कारार्हत्वात्। तस्माल्लौकिकाग्निमात्रगुणकमाधानं प्रधानकर्म रथकारस्य विधीयते। रथकार इति चात्र सौधन्वनानां ग्रहणम्, "ऋभूणां त्वा" इत्याधानमन्त्रवर्णात्। सौधन्वनाश्च ऋभवः, "सौधन्वना ऋभवः" इति मन्त्रे सामानाधिकरण्यनिर्देशात्। तेन योऽनेन वचनेन कथितः—

व्रात्यात्तु जायते वैश्यात् सुधन्वाचार्य एव च।
कारूषश्च[2] विजन्मा च मैत्रः सात्वत एव च॥
(मनु० १०।२३)

इति, सोऽत्राधिक्रियते। यस्त्वनेन[1] [अन्येन] निर्दिष्टः—

माहिष्येण करण्यां तु रथकारः प्रजायते।
माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्॥
शूद्रायां करणो वैश्यात्

इति, न तस्यात्राधिकारः। सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णाच्छागन्यायेन सौधन्वनानामेवाधिकार इति॥ ४४॥

(१३–निषादस्थपत्यधिकरणम्)

## स्थपतिर्निषादः[2] स्यात् शब्दसामर्थ्यात्॥ ५१॥ सि०

पक्षद्वयेऽपि निषादस्थपतिशब्दस्य यौगिकत्वान्न पूर्वाधिकरणतुल्यत्वम्[3]। न च

---

1. अन्येनेति। वचनेनेति विशेष्यपदमनुषज्यते।
2. ब्राह्मणात् शूद्रायामुत्पन्नो निषादः। स्थपतिरित्यधिपतिरित्यर्थः।
3. तुल्यत्वमिति। अतः प्रत्युदाहरणसंगतिरिति भावः।

१. सद्भावमात्रेऽपि–क०।
२. भारुष–क० ख० ग०।

षष्ठीसमासेऽपि पूर्वपदस्य लक्षणा, वृत्तिवाक्ययोर्ह्येकार्थत्वं विभाषाध्ययनादवगम्यते। अर्थभेदे हि विभाषाध्ययनमनर्थकं स्यात्, अर्थभेदादेव समासेन [1]वाक्यस्यानिवृत्तिसिद्धेः। तेन यथा निषादानां स्थपतिरिति वाक्ये नास्ति लक्षणा, तथा निषादस्थपतिरिति समासेऽपि नैव कस्यचिल्लक्षणा। तेन कर्मधारयषष्ठीतत्पुरुषयोर्बलाबलविशेषाभावादग्निविद्याशालिनां त्रैवर्णिकानामेव षष्ठीसमासाश्रयणेन स्थपतीष्टाधिकारो न निषादस्य, अग्निविद्ययोरभावादिति पूर्वः पक्षः। सिद्धान्तमाह— **कर्मधारयोऽयं न षष्ठीतत्पुरुषः**। कुतः? **एवं हि** सति **पदद्वयमपि स्वार्थवृत्तं** भवति। **इतरथा** यदि षष्ठीसमासः स्यात्, ततो **निषादशब्दो लक्षणया स्थपतावध्यारोपितः स्यात्**। सा च न युक्ता सम्भवन्त्यां श्रुतौ। किमिति लक्षणेत्यत आह—**सामानाधिकरण्यसमासप्रतिपत्त्यर्थम्**। नह्यसत्यां लक्षणायां सामानाधिकरण्यं पदद्वयं प्रतिपद्यते। तदभावाच्च समासमपि न प्रतिपद्यते। व्यधिकरणसमासेऽपि समासावस्थायां समस्यमानानि पदानि समानाधिकरणान्यभ्युपेतव्यानि समाससिद्ध्यर्थम्। इतरथा ह्येकार्थीभावलक्षणसामर्थ्याभावात् समासो न स्यात्। तदाह—नीलोत्पलसमासे **ह्युत्पलशब्दस्यापि तदेवाधिकरणं** प्रतिपाद्यम्, **नीलशब्दस्यापि** तदेव। **अत ऐकाधिकरण्यादे**कार्थीभावलक्षणं सामर्थ्यं सिद्ध्यति, **सामर्थ्याच्च समासः**। तेन षष्ठीसमासे चैकार्थ्यसिद्ध्यर्थं लक्षणाश्रयितव्या। अन्यथा [2]**यदि निषादशब्देन निषाद एवोच्यते, स्थपतिशब्देन स्थपतिरे**वार्थान्तरभूत उच्यते, **ततो भिन्नाधिकरणत्वात् सामर्थ्याभावः। सामर्थ्याभावाच्च समासाभावः। तस्मात्** समाससिद्ध्यर्थं **निषादशब्देन स्थपतिं यावद् गन्तव्यमित्येषा लक्षणा**।

यत्तूक्तं वृत्तिवाक्ययोरैकार्थ्याद् यथा निषादानां स्थपतिरित्यत्र न लक्षणा, तथा निषादस्थपतिशब्देऽपीति। तत्राह—**न चात्र षष्ठी विद्यते,** कुतः? **अनुपलभ्यमानत्वात्**। वाक्ये तु षष्ठीसद्भावान्निषादशब्दे श्रुतिवृत्तेऽपि षष्ठ्यैव तत्सम्बन्धिस्थपत्यभिधानान्नास्ति लक्षणा। समासे तु षष्ठ्यभावाद् निषादशब्देनैव

१. वाक्यार्थस्य–क०। २. यदि च–ख० ग०।

लक्षणया तत्सम्बन्धी प्रतिपादयितव्यः। न चैतावता वृत्तिवाक्ययोर्भिन्नार्थत्वम्, उभाभ्यामपि निषादसम्बन्धिनः स्थपतेः प्रतिपादनात्। प्रकारभेदमात्रं त्वेतत् क्वचित् श्रुतिः क्वचिल्लक्षणेति, न त्वेतावतैकार्थत्वहानिः। चोदयति—**लुप्ता षष्ठीति चेत्**। तेन षष्ठीस्थानपतितेन लोपेनैव तदर्थावगमान्न निषादशब्दस्य लक्षणार्थत्वमिति। **उच्यते—यद्यत्राश्रवणेन कारणेन लोपः** षष्ठ्याः कल्प्यते, ततः **स्वादयः**[1] शब्दा **लुप्ता** इति **किमिति न कल्प्यते**, अश्रवणाविशेषात्। **तस्माल्लोपे नास्ति प्रमाणम्**। तदुक्तं भाष्यकारेण—लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यते। सत्यं षष्ठ्यर्थोऽवगम्यते, न तु लोपसामर्थ्यात्, लोपे प्रमाणाभावात्, अभावात्मकत्वाच्च तस्याप्रतिपादकत्वात्। नहि शब्दाभावेन शब्दार्थोऽभिधीयते। तस्मान्निषादशब्देनैव लक्षणया षष्ठ्यर्थः प्रतिपादनीय इति।

नन्वेवं राजपुरुषसमासेऽपि राजशब्देनैव पुरुषः प्रतिपाद्यते। ततश्च [1]विग्रहोऽपि तस्य राजा चासौ पुरुषश्चेति स्यात्, न तु राज्ञः पुरुष इति, समासे षष्ठ्यभावात्, समासानन्तर्भूतस्य च विग्रह[हे] प्रयोगाभावात्। तदिदमङ्गीकृत्यैवाह—**ततो राजपुरुष इत्यत्रापि राजा चासौ पुरुषश्चेतीदृशो विग्रहः कर्तव्यः। तत्रापि** हि **षष्ठ्यश्रवणादेव नास्ति** षष्ठी। कथं तर्हि षष्ठीसमासः? नन्वेवं सर्व एव समानाधिकरणसमासः स्यात्। अत आह—**किन्तु स्वस्वामिसम्बन्धाद्**राजपुरुषयो [2]राजशब्दे **षष्ठ्यर्थमध्यारोप्य तदा** षष्ठीसमासवेलायां **समासो भवति**।

एतदुक्तं भवति—समासवेलायां समस्यमानपदानां सर्वेषां सामानाधिकरण्यमेव, अन्यथा सामर्थ्याभावेन समासानुपपत्तेः। किन्तु क्वचिल्लक्षणया सामानाधिकरण्यम्, क्वचिच्छ्रुत्या। यत्र श्रुत्या सामानाधिकरण्यम्, स समासः कर्मधारयः। यत्र तु षष्ठ्यर्थलक्षणया सामानाधिकरण्यम्, स षष्ठीसमास इति विवेकः। नन्वेवं

---

1. **स्वादय इति। स्वम्, स्वामिकः, अधीनः, निघ्नः, सम्बन्धी इत्यादिषु शब्देष्वन्यतमस्य कल्पनाप्रसङ्ग इत्यर्थः।**

1. विग्रहे—क०। 2. राजन्शब्दे षष्ठ्यभावात् समासो—ख०।

लक्षणापि शास्त्रानुगता स्यात्, ततश्च यत् तद्भूताधिकरणे "लक्षणादिप्रवृत्तिश्च न शास्त्रेणानुगम्यते। तत्संकरे च नैवास्ति वाच्यवाचकनिर्णयः" इत्युक्तम्, तन्न घटते। नैष दोषः, अत्यन्तावाचकस्य साधुत्वानभ्युपगमात्। राजशब्दो हि स्वार्थस्य वाचक एव। षष्ठीसमासे तु लक्षणया वर्तत इत्येतावत्। सर्वमेव हि पदं स्वार्थस्य वाचकमन्यत्र लक्षणया वर्तते। यथा गङ्गायां घोषः, सक्तीऽपदधातीत्यादिषु। न चैतावता तेषामसाधुत्वं भवति। ये त्वत्यन्तावाचका गाव्यादयः, तेषामेवासाधुत्वमित्यनवद्यम्।

यदि षष्ठीसमासेऽपि राजा चासौ पुरुषश्चेति विग्रहः, कथं तर्हि व्याख्यातारो राज्ञः पुरुष इति विगृह्णते ? अत आह—**राज्ञः पुरुष इति** विग्रह**वाक्यमिदमर्थप्रदर्शनार्थम्,** विस्पष्टीकरणार्थमिति यावत्। अन्यथा हि कर्मधारयसम्भावनया षष्ठीसमासता नाभिव्यज्येत। यदार्थस्पष्टीकरणमतन्त्रीकृत्य वृत्तिविग्रहयोरत्यन्तैकरूप्यं विवक्षितम्, तदा वृत्ताविव विग्रहेऽपि राजपदं लक्षणया तत्सम्बन्धिपुरुषप्रतिपादकमङ्गीकृत्य राजा चासौ पुरुषश्चेति विग्रह उक्त इति। तत्सिद्धं निषादशब्दस्य षष्ठीसमासे लक्षणेति। अथ न निषादशब्देन षष्ठ्यर्थो लक्ष्यते, किन्तु षष्ठ्यैवाध्याहृत्य(त)या तदर्थोऽभिधास्यते। निषादशब्दे ह्यश्रुतविभक्तित्वेऽवश्यमध्याहर्तव्या विभक्तिः। तत्र षष्ठीमध्याहरिष्यामो न द्वितीयामितीमामाशङ्कामपनुदन्नुपसंहरति—**तस्मात् स्थपतिशब्दे या** द्वितीया **विभक्तिः, सैवे**तरत्र निषादशब्दे**ऽप्यनुषज्यते** निषादं स्थपतिमिति। कुतः ? **अन्यस्याः** षष्ठ्या **अश्रवणात्**। अश्रुताध्याहाराद्वरं श्रुतानुषङ्ग इति भावः। एतच्चान्वारुह्यवादमात्रम्। परमार्थतस्तु अनुषङ्गोऽप्यत्र नास्तीत्याह— **अथवा समुदायादुत्पादात्** समस्तान्निषादस्थपतिशब्दादेकार्थप्रतिपादकादुत्पन्नत्वाद् द्वितीया विनैवानुषङ्गेणो**भयत्रापि द्रष्टव्या।**

अतो नान्यो निषादार्थात् स्थपतिर्लक्षणाभयात्।
भवेन्निषाद एवासौ स्थपतिः शब्दशक्तितः॥

इत्युपाध्यायश्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
षष्ठस्याध्यायस्य प्रथमः पादः॥

( १–सत्रे प्रत्येकं कृत्स्नफलकामानामधिकाराधिकरणम् )

## पुरुषार्थैकसिद्धित्वात् तस्य तस्याधिकारः स्यात् ॥१॥ सि०

प्रयोजनाभावेनाऽधिकरणारम्भमाक्षिपति—**नन्वितरेतरयुक्ता** [1]**इतरत्रापि पक्षेऽनुतिष्ठन्तीतरत्रापि । तस्मात् प्रयोगे नास्ति विशेष** इत्यनर्थकमिदमधिकरणम् । अथ मा भूत्प्रयोगे विशेषः, तथाप्यधिकारविशेषसिद्ध्यर्थत्वात् कथमानर्थक्यम् ? अत आह—**प्रयोगगता चाधिकारविशेषचिन्ता युक्ता** । कर्तुमिति शेषः । याधिकारचिन्ता प्रयोगविशेषं गच्छति, तत्फलेति यावत् । सैव कर्तुं युक्ता, न त्वियं तथेत्याह—[१]**कृत्स्नफलेन व्याप्यन्ते फलावयवेन वेति काकदन्तपरीक्षा** । कुतः ? **प्रयोगाविशेषात्** । **उच्यते—किं कृत्स्नफलार्थिनो यागोपदेशः, उत फलावयवार्थिनोऽपीत्येवमुपदेशोऽधिकार एव चिन्त्यते** । कर्मोपदेशो योऽयम् [२]ऋद्धिकामाधिकारः स एव चिन्त्यते । **सत्यपि वाचिककायिकानुष्ठानाविशेषे** मानसी [2]प्रवृत्तिः किं कृत्स्नर्द्धिविषयाधिकारिविशेषगमुत तदवयवविषयेति युक्ता चिन्तेति । एतेन लक्षणसङ्गतिरपि विचारस्य दर्शिता ।

**अथवा क्रियाफलं कर्तृगामि भवत्येकस्मिन् पक्षे, इतरत्राकर्तृगामि** । तत्र पूर्वपक्षवाद्यभिप्रायोऽयमुक्तः । स हि पर्षदः कर्तृत्वं [३]मन्यमानः स्वपक्षे कर्तृगामि फलम्; सिद्धान्ते तु प्रत्येकं भोक्तृत्वात्तेषामकर्तृत्वान्न कर्तृगामि फलं स्यादिति मन्यते । एकग्रन्थेनाह—**एवं चेद्** यथा पूर्वपक्षवादी मन्यते तथा चेत्

---

1. इतरत्रापि पक्षेऽनुतिष्ठन्तीतरत्रापीति । पूर्वपक्षे सिद्धान्तपक्षे चोभयत्रापि परस्परसंबद्धा एवानुतिष्ठन्तीत्यर्थः ।
2. 'प्रवृत्तिः = कामना' इति क० टिप्पणी ।

१. कृत्स्नेन–क० ग० ।
२. 'ऋद्धिकाम' नास्ति–क० ।
३. मन्वानाः–ख० ग० ।

शास्त्रार्थः, तदा **समुदायस्य कर्तृत्वान्न ते** समुदायिनः **कर्तारः**। तथापि कोऽनुष्ठाने विशेषोऽत आह—**ईदृश्यां प्रतीतावस्ति विशेषः**। यदा समुदायः कर्ता प्रतीतो भवति तदास्त्यनुष्ठाने विशेष इत्यर्थः। कः पुनर्विशेषोऽत आह—समुदायस्य कर्तृत्वे **कर्ममध्ये एकस्मिन्** प्रमीते[1] **नान्य आनेतुं लभ्यते, सिद्धान्ते त्वेकैकस्य** कर्तृत्वादेकस्मिन् मृतेऽन्यः सप्तदशादि**संख्यापूरणार्थ-मानीयते**।

**नन्वितरत्र** पूर्वपक्षेऽप्य**विशिष्टं** [१]**संख्यापूरणम्**। उच्यते—**द्रव्य-भेदात्तत्र**[2] पूर्वपक्षे **संख्या, न तु कर्तृभेदात्**, समुदायस्य कर्तृत्वात्तस्य चैकत्वात्। ततः किमित्यत आह—**एवं चेत् 'सप्तदश प्राजापत्यान्' इत्यत्र यथा पूर्वपक्षे** सर्वेषां संहत्यसाधनत्वा**देकस्मिन् पशौ विनष्टे** साधनं विनष्ट-मिति **कृत्स्नः पशुगण** आदित आरभ्या**वर्तते, एवमिहाप्येकस्मिन्** विनष्टेऽन्यं संख्यापूरणार्थमानीय तेन सह **सप्तदश भूत्वा पुनरादावारभ्य यागमनु-तिष्ठन्ति**। कुतः? **ईदृशस्य** सप्तदशसंख्यस्य **साधनस्यावगमात्**। तस्य चैकविनाशेनैवविनष्टत्वात्। सिद्धान्ते तु प्रत्येकं साधनत्वादेकस्मिन् विनष्टेऽपी-तरेषां कर्तृणामविनष्टानामवस्थितत्वात् संख्यापूरणमात्रार्थमन्यमानीय कृतान्तादेव प्रक्रमितव्यमिति विशेषः।

**किं तावत् प्राप्तम्? फलावयवेनैव** प्रत्येकं **सम्बन्धो न** कृत्स्नेन फलेन। **कुतः? फलं** कृत्स्नं **प्राप्नुयाद्ध्येकैकः** ततः **पृथक् पृथक् प्रयोगः स्यात्**। कर्तृगामि हि फलम्। तत्र [२]यदि प्रत्येकं फलं भुञ्जीरन्, ततः प्रत्येकमेव कर्तृत्वं स्यात्। न च सहानुष्ठाने प्रत्येकं कर्तृत्वं सम्भवति। एकेन कृते कर्मणि अन्यस्य कर्तृत्वायोगात्। अतः पृथक् पृथक् प्रयोगः स्यात्। ततः किमित्यत

---

1. 'प्रसृते' इति पू० मु० पाठः।
2. द्रव्यभेदादिति। कर्तृत्वाश्रयव्यक्तिभेदादित्यर्थः।
१. 'संख्या' नास्ति–क०।
२. 'यदि' नास्ति–क०।

आह—**ततो बहुवचनं नोपपद्यते**। तस्माद्बहुवचनात् सहप्रयोगावगमात् पर्षदः कर्तृत्वम्। अतश्च पर्षद्गामि फलं कृत्स्नम्, प्रत्येकं तु फलावयवावाप्तिः। यथावाप्ति च कामनेति फलावयवकामस्याधिकारः। **अपि च यत्कर्म** ज्योतिष्टोमादि **बहुषु फलेषु** चोद्यते, तदपि तावदेकत्र **प्रयोग एकमेव फलं साधयती**त्युक्तं योगसिद्ध्यधिकरणे। **किमुत यदेकफलमेव चोदितं** सत्रादि। तेन[1] तदप्येकस्मिन् प्रयोग एकमेव फलं सर्वपुरुषसाधारणं जनयति, न तु प्रतिपुरुषं कृत्स्नं फलम्, एकस्मात्प्रयोगादनेकफलोत्पत्तिप्रसङ्गात्, तस्य च निरस्तत्वादिति।

एवं तावदाख्यातावगतसहप्रयोगबलेन फलेऽपि साहित्यमित्युक्तम्। इदानीं तु कामशब्दादपि बहुवचनान्तादयमर्थोऽवगम्यत इत्याह—**किञ्च, ऋद्धिकामा इत्येकशेषोऽयम्। तत्र यदीतरेतरयुक्ताः फलं कामयन्ते, तत इतरेतर**योगं प्रतिपादयन्**नेकशेष उपपद्यते**। कथमेकशेषादितरेतरयोगावगम इत्यत आह—**द्वन्द्वापवादो ह्ययमेकशेषः**। तस्मादनेनेतरेतरयोगस्य प्रतीतेः संहतानामेव फलम्।

**ननूद्दिश्यमानत्वादृद्धिकामानामेकशेषावगतेतरेतरयोगाविवक्षा** स्यात्। **उच्यते**—[1]**यद्यप्यस्मिन् पदेऽविवक्षित** इतरेतरयोगः, **तथाप्याख्याताद्यादृशानां साधनभावः** कर्तृभावोऽवगतः, **तादृशानामेव फलसम्बन्धो** युक्तः, कर्तृगामित्वात्फलस्य। **इतरेतरयुक्ताश्च साधनत्वेनाख्यातेनावगताः**। तदितरेतरयुक्ता **एव फलेन सम्भन्त्स्यन्ते**। कामशब्दावगतस्त्वितरेतरयोगोऽभ्युच्चयमात्रत्वेनोक्त इति। **एवं प्राप्ते ब्रूमः—"यस्मिन् प्रीतिः पुरुषस्य" इत्यनेन न्यायेन** फलस्याविधेयत्वात्। **एकैकस्य** पुरुषस्य कृत्स्नं **फलं प्रार्थयमानस्य सत्रमुपायो विधीयते; न तु सत्रं प्रति ते विधीयन्ते**। यदि हि सत्रं प्रति गुणत्वेन फलकामा विधीयेरन्, ततस्तेषामेकशेषावगतमितरेतरसाहित्यं विवक्ष्येत। तेषां तु सत्रं प्रत्युद्दिश्यमानत्वादविवक्षितं साहित्यम्। अतः प्रत्येक-

---

1. **तेनेति। एकफलकत्वचोदनेनेत्यर्थः।**

१. यदापि—क०।

मधिक्रियन्ते। कृत्स्नर्द्धिकामानां चाधिकारः कामशब्देनाभिधीयते, न तु तदवयवकामानाम्, लक्षणाप्रसङ्गात्। अतः परिषदोऽपि कर्तृत्वे शब्दप्रामाण्यादे[1]कैकस्यैव कर्तृत्वाभावेऽप्यधिकारावगमात् प्रत्येकं कृत्स्नं फलमिति।

इतश्चैवमित्याह—**कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति**। कर्तृत्वं च प्रत्येकमेवेति दर्शयति—**यदि चैकैकः कर्ता स्यात्, ततो बहुत्वात् कर्तृणामा**सीरन् यजेरन्निति **बहुवचनमुपपद्यते**। **इतरथा** यदि प्रत्येकं कर्तृत्वं न स्यात्, ततः **परिषदः** कर्तृत्वात्तस्याश्चै**कत्वात् कर्तृभेदाभावः**। **कर्तृभेदाभावाच्चा**ख्यातोपात्तं कर्तृबहुत्वम**नुपपन्नं** स्यात्। **अथ कर्तृत्वे** कर्तृरूपे **श्रुतं** बहुत्वं **द्रव्येषु कल्प्येत**। यद्यपि कर्तृरूपेण बहुत्वं नास्ति, व्यासज्य वर्तमानत्वात् कर्तृत्वस्य; [2]तथापि कर्तृत्वाधिष्ठानानां द्रव्याणां बहुत्वाद् बहुवचनोपपत्तिरिति। तन्निराकरोति—**ततोऽयमेव दोषो यदन्यत्र श्रुतमन्यत्र कल्पितम्**। कर्तृसंख्यावाचि ह्याख्यातं न द्रव्यसंख्यावाचि, तत्र तु लक्षणया वर्तते। न च तस्यां प्रमाणमस्ति। तस्मात् प्रत्येकं कर्तृत्वात् प्रत्येकमेव फलमिति।

अत्र भाष्यकारेण 'नन्वेकैको बहुकर्तृकं न शक्नोति कर्तुम्' इति चोदयित्वा 'शक्नोत्येकैकस्य स्वातन्त्र्यविवक्षायाम्। यदा ह्येकः स्वातन्त्र्येण प्रवर्तते तदान्ये संख्यानिर्वृत्त्यर्थं सामादिभिः प्रयोक्ष्यन्ते' इति परिहृतम्। तदयुक्तम्। यदि ह्येक एव स्वतन्त्रः स्यादितरे तु तत्प्रयुक्ताः प्रवर्तन्ते, ततस्तेषां परतन्त्रत्वेन कर्तृत्वाभावात् पूर्वपक्षवद् बहुवचनानुपपत्तिः स्यादित्याशङ्क्य व्याचष्टे—**सामादिभिः प्रयोक्ष्यत इति**। अयमर्थः—**फलं प्रार्थयतः सत्रमुपायो विधीयते**। **तच्च** सत्रं **बहुकर्तृकं फलसाधने समर्थ**माख्यातोपात्तस्य बहुत्वस्य विवक्षितत्वात्। **तत्रैकः** स्वतन्त्रः प्रवर्तमानोऽन्यमपि स्वतन्त्रं प्रवर्तमानं सहायापेक्षिणमेवं ब्रवीति—**मया सह भवता यष्टव्यं नान्येनेति**। **अस्मिन्** सहायनियमविषये **सामाद-**

---

१. देकस्यैव—क०।

२. तथापि—क०।

**योऽवतरन्त्युपायाः** पथिकवत् । यथा दुर्गं पन्थानमभिप्रतिष्ठमानाः सर्वे स्वतन्त्रा एव मिथः सहाया भवन्ति, तद्वदिहापीति ।

किमिति पुनरेवं व्याख्यायते ? तत्राह—**यद्येकस्य** स्वतन्त्र**कर्तृत्वमितरे** तु **संख्यापूरणार्था** ऋत्विक्स्थानीयाः **स्युः**, ततस्तेषां स्वतन्त्र**कर्तृत्वाभावाद्** भिन्नव्यापारत्वेन ऋत्विग्बहुत्व इव तद्बहुत्वेऽपि **बहुवचनाभाव इति स एव** पूर्वपक्षोक्तो **दोषः** स्वपक्षेऽपि स्यात् । तस्माद्यथोक्त एव भाष्यार्थ इति । **यदुक्तं** प्रत्येककर्तृत्वे **प्रयोगभेदाद् बहुवचनाभाव** इति । **तदुच्यते—स एव प्रयोग एकैकस्य तुल्यः**, न व्यस्तः । **तत्र न गम्यते विशेष इतरस्य प्रयोगो नेतरस्येति** । कथं न गम्यतेऽत आह—**देवतोद्देशेन यो द्रव्यस्य संकल्पः स एकैकस्याविशिष्टः** । साधारणं हि द्रव्यं साधारणेनाध्वर्युणा प्रक्षिप्यमाणं सर्वे ते देवतायै प्रत्येकं सङ्कल्पयन्ति । एवं च सत्येकस्मिन्नेव प्रयोगे सर्वेषामेव कर्तृत्वोपपत्तेः **प्रयोगभेदो न लभ्यते** न प्रसज्यते ॥ १ ॥

## अपि चोत्पत्तिसंयोगाद् यथा स्यात् सत्त्वदर्शनं तथा भावोऽविभागे स्यात् ॥ २ ॥

इदं पदोत्तरं सूत्रम् । नन्वेकस्मिन् प्रयोगे न बहूनां [2]प्रत्येकं कर्तृत्वं सम्भवत्येकेन कृते कर्मण्यपरस्य कर्तृत्वायोगादिति पदानि । तत्र चोत्तरम्—अपि चोत्पत्तिसंयोगादिति । तत्र भाष्यम्—नैतद्विरुद्धमित्यादि सर्वे कर्तारस्तन्त्रेण भवन्तीत्यन्तमेकस्मिन्नप्युपपन्नं बहूनां कर्तृत्वमित्येतत्प्रतिपादनार्थं सुगमम् । उत्पत्तिसंयोगादिति [3]सूत्रपदव्याख्यानार्थं भाष्यम्—"**नात्रोत्पन्नसंयोगः, किन्तूत्पत्त्यैवात्र संख्यया कर्म संयुज्यते**" इति । तदनुभाष्य व्याचष्टे—**ऋद्धिकामा इत्यत्रोत्पत्तिवाक्य एव** फलवाक्य एव स्वतन्त्र**कर्तृगामिनीयं संख्या श्रूयते**।

---

१. यथाभागं—ख० ग० ।

२. 'प्रत्येकं' नास्ति—क० ।

३. 'पद' नास्ति—क० ।

**यदि हि गुणवाक्ये श्रूयेत**, एककर्तृके कर्मण्युत्पन्ने सति [1]पश्चाद्बहुत्वगुणविधानार्थे वाक्ये यदि बहुवचनं श्रूयेत, **न** तूत्पद्यमाने **यागे, तत** एकैकस्य **क्रियाफलेन संयोगो न स्यात्**। कथमित्यत आह—**तस्मिन्नुत्पन्नसंयोगपक्षे न फलेन व्याप्यमानाः स्युरित्येवमर्थं** बहव **उच्चार्यन्ते। किं तर्हि? यागो बहुसंख्याविशिष्टः कार्य इत्येवमर्थमुच्चार्यन्ते**। नहि तदा कर्तृबहुत्वं विधातुं शक्यमुत्पत्तिशिष्टैककर्तृत्वविरोधात्, किन्त्वेककर्तृकस्यैवोत्पन्नस्य यागस्य ऋत्विक्स्थानीया [2]बहवोऽङ्गकर्तारो विधीयेरन्। ततश्चैकस्यैव स्वतन्त्रकर्तृत्वात् स एवैकः फलेन व्याप्यते, न तु बहवः प्रत्येकं कृत्स्नेन फलेन व्याप्येरन्। उत्पत्तिवाक्यस्थस्य तु बहुवचनस्य श्रुत्या स्वतन्त्रकर्तृबहुत्वाभिधायिनो बलवद्विरोधाभावात् कर्तॄणामेव बहुत्वात् प्रत्येकमेव फलम् ॥ २ ॥

( २—दर्शपूर्णमासादीनां नियतैककर्तृत्वाधिकरणम् )

## प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥ पू०

'ननु तृतीय उक्तम्' इत्यादिभाष्योक्तमाक्षेपमाह—**ननु यागनिर्वर्तकत्वेनोपादीयमानत्वाद् विवक्षिता संख्या। कुतः संशयः?** तृतीये हि शास्त्रफलं प्रयोक्तरीति वदता प्रयोक्तृत्वं कर्मणि पुरुषस्य शास्त्रार्थ इत्युक्तम्। चतुर्थाद्ये चाहत्य प्रयोजकत्वं विधेः साधितम्। प्रयोक्तुश्च प्रयोगनिर्वर्तकत्वेनोपादीयमानत्वात् संख्याविवक्षा सिद्धैवेति पुनरुक्तप्रायमेवैतदिति। **उच्यते—फलेन व्याप्यमानत्वात् कर्ता प्रधानभूतः**। क्रियाजन्यफलभागितया हि फलं तत्साधनं च प्रति प्रधानभूतः कर्तेति स्थितम्। **प्रधानभूतस्य चाविवक्षिता संख्योद्देश्यगतत्वात्। नात्र यागस्य फलस्य वा प्रयोगो** विधीयते यागं कुर्याद् यागेन वा फलं कुर्यादिति, **नतरां तत्कर्ता; किन्तु यागेन स्वर्गं पुरुषः प्राप्नुयादिति। फलप्राप्तौ च प्रधानभूत एव पुरुषो न गुणभूत इत्यविवक्षिता संख्येति।**

---

१. 'बहुत्व' नास्ति—क०।

२. 'बहवः' नास्ति—क०।

यदि च न प्रयोगं प्रति कर्ता विधीयते, किमिति तर्ह्यनुतिष्ठतीत्यत आह—**तत्रासौ नान्तरीयकत्वाद् यागमनुतिष्ठति** फलमिच्छन् स्वयमेव विधिना विनापि, प्रयोक्तृत्वमन्तरेण फलानवाप्तेः प्रयोक्ता भवति। चतुर्थ्याद्युक्तमपि प्रयोजकत्वं विधेरेवमेवोपपद्यते। एतदेव पुरुषस्य कर्मणि प्रवृत्तिकारणं यदात्मार्थत्वावगमो न पुनरात्मनः कर्मणि शेषत्वावगमः। यो हि मदर्थमिदं कर्म ममोपकरिष्यतीति जानाति स तदनुतिष्ठति। यस्त्वेवं विजानाति नानेन कश्चिन्ममोपकारः समस्ति, मया त्वस्य कर्मणोऽस्त्युपकारः, मया कृतमिदं स्वतन्त्रं भवतीति नासौ तदनुतिष्ठति। तस्मात् प्रधानभूतः कर्ता। **तस्यां च** प्रधानत्व**विवक्षायामविवक्षिता संख्या**।

यद्येवं कथं तर्हि संशयः सिद्धान्तासम्भवादत आह—**अथवा यागप्रयोगनिर्वर्तकत्वेन कर्तोपदिश्यते** उपादीयते, [1]**उपदेश्यत्वाच्च विवक्षिता संख्या**। अयमर्थः—यद्यपि कामपदोपात्तः पुरुषः प्रधानत्वेनैव सम्बध्यते, तथाप्याख्यातेन यागानुरक्तां क्रियां विदधता क्रियागुणभूतस्य कर्तुराक्षेपात् तदुपात्ता संख्या गुणभूतकर्तृपरिच्छेदकत्वेन [2]विवक्षिता प्रतिभातीति युक्तः संशयः।

तदिदमुक्तं भाष्यकारेण—**यदा च प्रयोक्तरि, तदा विवक्षितमेकत्वं यथा तथा वक्ष्यामः**। इदानीन्तु **तदेवाक्षिप्यते, पुनश्च निर्णेष्यत इति**। अयमर्थः—सत्यं प्रयोक्तरि फलम्, तावता चौचित्यात् प्रयोक्तुर्गुणता विवक्षितसंख्यता च प्राप्ता। इदानीमेव विचारपूर्वं निर्णेष्यते न तु [3]पूर्वतरं साधितेति। **किं तावत्प्राप्तम्? अविवक्षिता** संख्या। कुतः? **"यजेत स्वर्गकामः"** इति पदद्वयस्य **सामानाधिकरण्यम्**। ततः किमित्यत आह—**स्वर्गेण च कर्ता व्याप्यते,** यः स्वर्गेणाहं व्याप्तः स्यामिति कामयते स स्वर्गकामशब्देनोच्यत इत्यर्थः।

---

१. उपदेशाच्च—ख० ग०।

२. विवक्षार्हा—क०।

३. पूर्वम्—ख० ग०।

तथापि किमित्यत आह—**भवति व्याप्यमानश्च** स्वर्गं तत्साधनं च प्रति **प्रधानभूतः । ततोऽस्मिन्** स्वर्गकामपदे तावद**विवक्षिता संख्या** । एवं च **यजेत इत्यत्रापि यद्यविवक्षितैव** भवति, **ततः सामानाधिकरण्यमुपपद्यते,** एकार्थवृत्तित्वात् । **एकत्र** त्वाख्याते **विवक्षिता संख्या न त्वितरत्र** स्वर्गकामपद इत्यभ्युपगम्यमाने सति **नास्ति सामानाधिकरण्यम्** । तदा ह्याख्याते गुणभूतः पुरुषः कामपदे प्रधानभूत इति भिन्नार्थवृत्तितया नास्ति सामानाधिकरण्यम् । **किञ्च, सर्वः फलेनाहं व्याप्येय इत्येवमर्थं**[1] **यतते,** न तु फलं वा यागो वात्मानं लभतामिति कश्चिदपि प्रेक्षापूर्वकारी प्रवर्त्तते । तेन यदि यागे फले वा गुणभूतः कर्त्ता नियुज्येत, नियुक्तोऽपि न कुर्यात् । तत्र वचनमेवानर्थकं स्यात् । तेन यागेन फलं प्राप्नुयादित्येवं प्रधानत्वेनैवान्वयः पुरुषस्य । कथं तर्ह्यनुष्ठानसिद्धिरत आह—**तत्रेतरथा** यदि नानुतिष्ठामि, ततः **फलमहं न प्राप्नुयामित्यर्थाद्यागमनुतिष्ठति । एवं चेदचोदितत्वाद् यागे** पुरुषस्य **कथं तस्य संख्या विवक्ष्येत ?** तस्मात् सामानाधिकरण्यादर्थवत्त्वाच्चाख्यातेऽपि प्रधानभूत एव पुरुषः सम्भवतीति तत्रापि प्राधान्यम्, यथैव हि क्रियायाः कर्त्रपेक्षा तथैवापुरुषार्थस्य विध्ययोगात् प्रधानभूतोऽपि पुरुषोऽपेक्षित इत्युभयथापि सम्भवे यथोक्तेन न्यायेन प्राधान्यमेव विवक्ष्यत इत्यविवक्षिता संख्या । **प्रयोगेऽपुरुषश्रुतेः । प्रयोगे पुरुषस्याश्रवणादित्यर्थः ।** पुरुषश्रुतेरिति वाच्छेद [ वा छेदः ] इत्याह—**अथवा प्रयोगे पुरुषश्रुतेः प्रयोगे पुरुषं श्रावयित्वा कृतार्थः शब्दो** न तु तस्य गुणभावं प्रतिपादयति । **तेन यागः कार्य इति यदीदृश उपदेशो भवेत् ततो निर्वर्तकत्वेन** गुणभावाद् **विवक्षिता संख्या स्यात्, न चेदृश उपदेशोऽस्ति** । अर्थवत्त्वेन तु प्राधान्यमेवान्यथा वचनानर्थक्यादित्यभिप्रायः ॥ ३ ॥

**प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥ सि०**

यदुक्तं **फलेन व्याप्यमानस्य नान्तरीयकत्वाद् यागे गुणभाव इति,**

---

१. यजते—क०

**एतन्नोपपद्यते।** कथम्? **स्वर्गः साध्यो यागः साधनमि**ति तावदविवादन्। **तत्र च साध्यसाधनसम्बन्धो विधीयते** यागेन[१] फलं साधयेदिति, साध्यं प्रति साधनं विधीयत इत्यर्थः। किमिति विधीयतेऽत आह—**नहि** विधिमन्तरेण **अर्थाद्यागः साधनं प्राप्नोति**। तेनाख्यातेन यागो विधीयते।[२] हन्त! आख्यातेन यागो विधीयताम्, तथापि किमित्यत आह—**अतो विधीयमानो** यागो **निर्वर्तकं कर्त्तारमपेक्षते तत्परिच्छेदिकां च संख्याम्। तस्मादपेक्षावशादस्मिन्नाख्यातपदे तावद्विवक्षिता संख्या**। अयमर्थः—यद्यप्याख्याते विध्यन्विता क्रिया पुरुषार्थतयावगता प्रधानभूतमपि पुरुषमाक्षिपति, तथाप्यनुष्ठेयतयावगमादनुष्ठातारं गुणभूतमप्याक्षिपत्येव। नहि 'यजेत' इत्यस्यायमर्थो यागेन प्राप्नुयादिति। किं तर्हि? यागेन कुर्यादिति। तत्र प्राधान्यांशेनाविवक्षितापि गुणांशे परिच्छेदकत्वेनापेक्षिता संख्या विवक्षामर्हतीति।

यत्त्वविवक्षितसंख्येन कामशब्देन सामानाधिकरण्यादत्राप्यविवक्षितत्वमुक्तम्, तत्राह[३]—**पदार्थपूर्वकत्वाच्च वाक्यार्थस्य यादृशोऽर्थः** संख्याविशिष्टः **पदवेलायामवगतस्तादृश एवोत्तरेण** कामपदे**न सम्बध्यते**। एककर्तृको यागः स्वर्गकामार्थतयोपदिश्यत इत्यर्थः।

नन्वेवं कथं सामानाधिकरण्यमत आह—**तस्माद्यद्यपि स्वर्गकामपदेनानियता संख्या प्राप्ता, तथाप्यनयाख्यातनियतविशेषणविशेष्यतया** आख्यातेन सह या विशेषणविशेष्यता नियताऽवश्यंभाविनी तया **सामानाधिकरण्यमुपपत्स्यते** कर्त्रधिकारिणोरैक्यादाख्यातोपात्ता [४]कर्तृसंख्यार्थादधिकारिणमवच्छिनत्तीति विशेषणविशेष्यभावेनैकार्थवृत्तित्वाद्युक्तं सामानाधिकरण्यम्।

---

१. 'व्याप्यमानस्य नान्तरीय' अधिकं—ख०।

२. 'हन्त आख्यातेन' नास्ति—क० ग०।

३. 'आह' नास्ति—ख०।

४. 'कर्तृ' नास्ति—क०।

तद्यथा "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र राजा द्रव्यकर्मसंयोगन्यायेन क्रियां प्रति शेषभूतः, स्वाराज्यकामस्तु "असाधकं तु तादर्थ्यात्" इति न्यायात् प्रधानभूत इत्येवं प्रकारभेदेऽपि सत्यार्थिकैकार्थवृत्तितया सामानाधिकरण्यम्, एवमिहापि विवक्षिताविवक्षितसंख्यत्वेन गुणप्रधानभावेन च प्रकारभेदेऽपि युक्तं सामानाधिकरण्यम्। एवं तावत् प्रधानभूतस्यापि[1] पुरुषस्य गुणभावोऽप्यस्तीति कृत्वा संख्याविवक्षोक्ता।

**अथवोपादीयमानस्य**[2] विशेषणस्य **विवक्षिता संख्या,** कामपदेन तु **व्याप्यमानत्वादविवक्षिता। न चान्यसंख्यायुक्तेन क्रियमाणो यागः फलं साधयति यदा विवक्षिता स्याद् आख्याते संख्या।** अस्यार्थः—यद्यपि पुरुषस्य नास्ति गुणत्वम्, तथापि यागस्तावत् फलार्थिनं प्रत्युपादीयमानो विवक्षितविशेषणो भवति। तस्य चैककर्तृत्वं विशेषणत्वेन श्रूयते। न चासति कर्तुर्गुणत्वे संख्याया अङ्गत्वमनुपपन्नम्, प्रधानस्यापि पुरुषस्य कर्तृत्वद्वारस्य सम्भवात्।

नन्वेवं वाक्यभेददोषः स्यादत आह—**न च वाक्यभेददोषः,** कुतः? **यत्र हि सकृदुच्चरिते शब्दे द्वे रूपे विवक्षितत्वाविवक्षितत्वे भवतस्तत्र वाक्यभेददोषः स्यात्, इह तु भिन्नपदोपादानाद् विवक्षाविवक्षाभेददोषो नास्ति।** कामपदे ह्यविवक्षाख्यातपदे च विवक्षेति। **यदुक्तं न यागः कर्त्तव्य उपदिश्यते यागेन वा कर्त्तव्यं** फलमिति। नोपदिश्यत इत्यनुषङ्गः। यद्येवमुपदेशः स्यात्, ततस्तन्निर्वृत्तौ पुरुषस्य गुणभावाद् विवक्षिता संख्या स्यात्। न त्वेवमस्ति, किन्तु फलं प्राप्नुयादिति व्याप्यमानतया पुरुषस्य प्राधान्यादविवक्षिता संख्येति। **उच्यते। यागं कुर्यादिति सत्यं नोपदिश्यते। यागेन कुर्यादिति तु यदि नोपदिश्येत ततः साध्यसाधनसम्बन्धाभावात फलमेव न स्यात्।** नह्यभिधीयमानस्य यागस्य फलसाधनभावसम्भवः। न

---

१. 'अपि' नास्ति—क०।

२. 'मानत्वात्' इत्येव—क० ग०।

चासति साधने फलसिद्धिः। **ततश्च सर्वमेव** वाक्यं **नोपपद्यते**। अनर्थकं स्यात्।

ननु स्वर्गकामशब्दार्थो[1] यः स्वर्गप्राप्तिः स विधीयते, कथमानर्थक्यमत आह— **स्वर्गकाम इति न विधीयते**, यस्मिन्प्रीतिरित्यत्र फलस्याविधेयत्वं प्रतिपादितं यतः। **तस्मादनर्थकं वाक्यं स्यात्**। **तस्मा**द्यागस्य विधेयत्वात् तन्निर्वर्तकस्य पुरुषस्य परिच्छेदकत्वेन **विवक्षिता संख्या**। **सिद्धान्तसूत्रमिदं न सुविवृतम्**। तेनेदं चोद्यपूर्वकं विवरीतुमुत्तरसूत्रद्वयम् ॥ ४ ॥

**तादर्थ्येन गुणार्थतानुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् ॥५॥**

**फलेन व्याप्यमानत्वात् प्रधानभूतः** पुरुषः। **प्रधानभूतश्चेदविवक्षिता संख्या**। ननु मा नाम कामपदे विवक्षिता भूत् संख्या। आख्यातगता तु गुणभूतांशेन किमिति न विवक्ष्यते? अत आह—**अतो 'यजेत' इति या संख्या प्रतीयते सा गुणभावांशेन विवक्ष्यते**। तन्न, कुतः? **अनुक्ते हि न्याये स्याद्विवक्षा**। **उक्त**श्चास्माभिरविवक्षितत्वे **न्यायो व्याप्यमानगता** कामपदस्था **संख्या** तावद**विवक्षिता**। अतस्तद्विरोधादितरदाख्यातगत[1]-मप्येकत्वम**विवक्षितम्**, विवक्षाविवक्षयोर्विरोधात्। तेनाविवक्षितैव संख्येति ॥५॥

**अपि वा [2]कामसंयोगसम्बन्धात् प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ॥ ६ ॥**

सत्यं **फलेन व्याप्यमानस्य** पुरुषस्य प्रधानभूतस्यैकत्वाद्यविवक्षा। यद्येवमविवक्षितैव तर्हि संख्या स्यात्, प्राधान्यस्यैवात्र विधित्सितत्वात्, इत्यत

---

1. "गतमप्यविवक्षितमेकत्वम्। गुणप्रधानयोरेकत्र समवाये विरोधः। तद्विरोधे च तन्निमित्तयोर्विवक्षाविवक्षयोरपि विरोधः। तेना" इति ख०पाठः क०पुस्तके पाठान्तरत्वेन स्थापितः।

१. र्थोऽयम्–ख०।

२. कामसंयोगे–मु० पा०।

आह—**स चार्थात्** स्वरसात् **फलेन व्याप्तिमात्मन इच्छति। तेन यात्र** कामपदे फलप्राप्तिं प्रति प्राधान्य**विवक्षा सा न शास्त्रात्**। नहि शास्त्रे केनचिच्छब्देन फलप्राप्तिरभिधीयते, अनभिहिता च कथं विधीयेत। सा हि न तावदाख्यातार्थः, तस्य करोतिसामानाधिकरण्येन भावनावाचित्वस्य स्थितत्वात्। नापि स्वर्गकामशब्दः प्राप्तिवचनः। स हि स्वर्गं कामयत इत्येतावन्मात्रमभिधत्ते, न त्वात्मनः परस्य वेति विशेषमवलम्बते। न च प्रमाणान्तरवशादपि विशेषलाभः, विशेषस्य शब्दैकगम्यत्वात्। तस्मान्न शास्त्रीया प्राप्तिः। **किं तर्हि ? अर्थात्** स्वर्गकामशब्देनानूद्यते। अनुवादत्वे हि यथाविधः स्वर्गकामः प्रमाणान्तरसिद्धस्तथाविधस्यैवानुवादः, अतोऽन्तरेणापि विशेषोपादानमात्मार्थता फलस्य सिध्यति। स्वार्थमेव हि फलं स्वरसतः पुरुषाः कामयन्त इति। तस्मान्न प्राधान्यं विधीयते।

किं तर्हि शास्त्राद्विधीयतेऽत आह—**'यजेत' इत्येकत्वविवक्षा तु शास्त्रात्**। एकत्वग्रहणमुपलक्षणार्थमाख्यातोपात्तकर्तृत्वसंख्ययोः। क्रियां प्रति गुणत्वं शास्त्रे विवक्षितमित्यर्थः। ततश्च नास्ति वाक्यभेद इत्याह-**तत्र यदि** शास्त्राद् **द्वे** अपि गुणप्रधानत्वे **विवक्षिते** विधेये **स्याताम्, ततोऽर्थान्तरत्वा**दर्थभेदाद्वाक्यभेदो **दोषो भवेत्**; न त्वेवमस्तीति। ननु यदि परस्यापि स्वर्गमिच्छन् स्वर्गकामः, कथं तर्हि यागस्य कर्तृफलसाधनत्वमत आह—यस्मात् स्वार्थमेव फलं काम्यते **तस्माद्यः स्वर्गं प्रार्थयमान आत्मसम्बन्धितयात्मन इच्छति तस्य यागोऽभ्युपाय इत्यर्थादेवा**[1]**वगम्यते। तस्मादनेन प्रकारेणाविवक्षितमेकत्वम्।**

ननु सम्भवति [2]कश्चित्परार्थमपि स्वर्गं प्रार्थयमानः। तेन नैकान्ततः फलस्यार्थात् स्वार्थत्वसिद्धिः। अतः शास्त्रेणैव यागेन फलं कुर्यात्, फलं च स्वयमेव प्राप्नुयादिति विधीयमाने वाक्यं भिद्येतैव, अत आह—**अथवा 'यजेत' इति भावना प्रतीयते कालोपग्रहनिमित्तादिविशिष्टा।** दर्शादिना कालेन, कर्तृगामिफलत्व-

---

१. 'एव' नास्ति-क०।

२. क्वचित्-क०।

रूपेण चोपग्रहेण, जीवनेन च निमित्तेन, आदिशब्दोपात्तैश्च प्रयाजादिभिरङ्गैः, [1]प्रयोगविधिना,[2] स्वर्गादिना फलेन, तद्भोक्त्रा च प्रधानभूतेन पुरुषेण, निर्वर्तकत्वेन च गुणभूतेन कर्त्रान्विता भावनावगम्यते ।

एतदुक्तं भवति—न फलप्राप्तिर्विधीयते फलस्याविधेयत्वात् । न चैवमात्मार्थता फलस्य न सिध्यति, [3]उपग्रहविशेषेण भा[व]नायाः कर्तृगामिफलत्वावगमात् । तेन तद्बलेन पुरुषस्य प्राधान्यं निर्वर्तकत्वेन च क्रिययापेक्षितं गुणत्वमवगम्यते । गुणभूतेन तेन[4] प्रधानभूतेन च पुरुषेण विशिष्टा भावना विधीयते । **तत्र संख्या** आख्यातोपात्ता **गुणभूतस्य** कर्तृरूपस्य **पुरुषस्य परिच्छेदि**कावगम्यमाना **येनांशेन** फलिरूपेण क्रियया **व्याप्यते** पुरुषस्तेनांशेनाविवक्षिता, कर्तृगामित्वेन तु विवक्षितैव । एकत्वाधिकरणादौ भाष्यकारेण शास्त्रफलं प्रयोक्तरीत्यनेनास्याधिकरणस्य यो विरोधः शङ्कितः स परिहृतः, प्रयोक्तृगामित्वस्यैकत्वविवक्षाविरोधात् । तदुक्तं भाष्ये—"यदा च प्रयोक्तरि तदा विवक्षितमेकत्वं यथा तथा वक्ष्यामः । इह तु तदाक्षिप्य समाधीयते" इति ।

नन्वेवमप्यनेकार्थस्य विवक्षितत्वाद् गौरवमस्त्येवाऽत आह—**तदुभयमपि** गुणत्वं प्रधानत्वं च । विवक्षितमिति वक्ष्यमाणेन सम्बन्धः । कुत इत्याह—**अनन्यप्रमाणगम्यत्वात्** । **उभयमस्मिन्नेव** वाक्ये **विवक्षितम्** । सत्यां हि गतौ विशिष्टविधानं नेष्यते, गत्यभावे तु तदङ्गीकरणं न दोषः । तत्र स्वर्गकामपदस्य भावनाक्षिप्तप्रधानभूतफलिप्रतिपादकत्वात् तद्गतं लिङ्गसंख्यमविवक्षितम् । आख्यातोपात्ता तु संख्या तदाक्षिप्तगुणभूतकर्तृगतत्वाद् विवक्षिता । तदयमर्थः—यः स्वर्गकामः स एकाकी सन्नात्मार्थं फलं यागेन कुर्यादिति ॥ ६ ॥

---

१. 'प्रयोग' नास्ति-ख० ग० ।

२. विधिना ज्योतिष्टोमेन स्वर्गं यजेतेत्यादिना-क० ।

३. आत्मनेपदादिना-क० टिप्पणी ।

४. तेन च पुरुषेण-ग० ।

## अन्यस्य[1] स्यादिति चेत् ॥ ७ ॥

यदि स्वर्गकामशब्दः परस्यात्मनो वा यः स्वर्गं कामयते तत्राविशेषेण वर्तते। एवञ्चेदनुवादपक्षेऽपि परस्यापि स्वर्गमिच्छन् यजेत इति। अभिधानं ह्यनुवादे विधौ च तुल्यम्। न च प्रमाणान्तरवशादपि विशेषलाभः। सम्भवति ह्यन्यस्यापि स्वर्गमन्यः कामयमानः। तस्मादेकान्ततः प्रयोक्तृगामिता फलस्य न स्यादिति ॥ ७ ॥

## अन्यार्थेनाभिसम्बन्धः ॥ ८ ॥

आत्मनेपदात् कर्तृगामि क्रियाफलम्। तस्माद्यो न कर्त्ता तस्य क्रियाफलं नास्ति। एतच्चानागतावेक्षणेन[2] प्रागेवोक्तम्। इदानीं तु सूत्रारूढं क्रियत इति वेदितव्यम्। यत्र तर्ह्यात्मनेपदं नास्ति सौर्यं चरुं निर्वपेदित्यादिषु, तत्र कथं कर्त्रभिप्रायं फलम्? अत आह—सौर्यादीनां त्वाधानगतेनात्मनेपदेनाधानकर्तुरेव फलं भवति नान्यस्य। नन्वाधानस्याग्न्युत्पत्तिरेव फलम्। अग्निगतादृष्टोत्पत्तिरित्यर्थः। तत्कथं तेन कर्तृगामित्वं क्रतुफलस्य नियम्यत इति। उच्यते। ज्वलनपचनप्रकाशनादीन्याधातुरनाधातुश्च तुल्यानीति हेतोर्न तद् ज्वलनादिफलमात्मनेपदेन कर्त्तरि नियन्तुं शक्यम्, तस्मादाहवनीयेन यानि साध्यन्ते क्रत्वपूर्वाणि तदभिप्रायमात्मनेपदम्। अस्यार्थः—यत्तावदाधानेन साक्षादुत्पाद्यं फलम्, तस्याग्निगतत्वाद् नाधातृगामित्वं सम्भवति। तेनाग्निसाध्यं यत्फलं तदभिप्रायमात्मनेपदम्। तदपि हि प्रणाड्याधानफलमेव। तत्रापि ज्वलनादीनामशक्यनियमत्वात् क्रतुफलनियमार्थमेवात्मनेपदमिति।

नन्वेवमनेनैव सर्वफलानां कर्तृगामित्वसिद्धेर्दर्शपूर्णमासादिष्वात्मनेपदं व्यर्थम्? अत आह—दर्शपूर्णमासज्योतिष्टोमादिषु यदाहवनीयसाध्यं प्रधानफलं गुणफलं वा तत्रानुवाद्येवात्मनेपदम्। नन्वेवमनर्थकं स्यादत आह—यानि

---

१. 'अन्यः' इति कोशेषु पाठः।

२. णन्यायेन—क०।

त्वनग्निसाध्यान्यङ्गफलानि 'गोदोहनेन पशुकामस्य' इत्यादीनि तदर्थमेव प्रधानवाक्यगतमात्मनेपदम्। यत्र तु नात्मनेपदमस्ति, न चाग्निसाध्यत्वं यथा जपादिषु, तत्र विधित एव फलस्य कर्तृगामित्वसिद्धिः। स हि प्रयोक्तृगामित्वे फलस्य प्रमाणं भवतीत्युक्तं चतुर्थाद्ये। नन्वेवं सर्वत्र तत एव सिद्धे किमात्मनेपदोपन्यासेन? सत्यम्, अन्वाचयत्वेनोपन्यासाददोषः॥ ८॥

( ३–प्रारब्धकर्मणः समाप्तिनियमाधिकरणम् )

## प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात्[1] ॥१३॥ सि.

ननु प्रतिपादितमेव स्मृतीनामाचाराणां च प्रामाण्यम्। इहापि तदेवोच्यते सिद्धान्ते–शिष्टविगर्हणाभयात् समापयितव्यमिति। तस्मात् पुनरुक्तमेतत्। उच्यते। मिथ्यासंकल्पदोषं मन्वाना हि विगर्हन्ते। न च परमार्थतो मिथ्यासंकल्पदोषोऽत्रास्ति। शास्त्रार्थो ह्यनुष्ठातुं संकल्पितः। न च वीतेच्छस्य समापनं शास्त्रार्थः। तस्मान्निर्मूलमिदं गर्हणमनादरणीयम्। अतो नावश्यं प्रक्रान्तं काम्यं समापयितव्यमिति केषाञ्चित् भ्रान्तिः स्यात्। तन्निरासार्थमिदमधिकरणमारभ्यते।

तत्र सिद्धान्तेन तावदुपक्रमते–**विगतायामपि फलेच्छायां समापनीयमेव प्रक्रान्तं कर्म। कुतः? आरम्भो निमित्तं कामश्च।** यथा कामो निमित्तमारम्भस्य समापनस्य च, तथारम्भः समापनस्य निमित्तं शिष्टस्मरणादित्यर्थः। **तत्र यथा कामे** सति **अनुष्ठातव्यं तथैवापगते कामे आरम्भस्य** निमित्तस्य **विद्यमानत्वान्नैमित्तिकी समाप्तिः कर्त्तव्या।** निमित्तत्वं च कामस्य तस्मिन् सत्यनुष्ठानादर्थात् सञ्जातं दृष्टान्तीकृतम्, न तु कामशब्दो निमित्तपरः, फलपरत्वस्य स्थितत्वादिति। भाष्ये तु सिद्धान्त्येकदेशिमतेनाधिकरणमुपक्रान्तम् "प्रजाकामो यजेत" इत्यादिषु वाक्यगम्यफलकर्तव्यताबाधेन पदश्रुत्या यागस्य कर्तव्यत्वावगमात्। तद्बलेन कामपदं निमित्तपरमङ्गीकार्यम्। निमित्ते चोत्पन्ने विनष्टेऽपि नैमित्तिकं कार्यं गृहदाहादिवत्। नन्वारम्भ[न त्वारम्भ]मात्रमत्र नैमित्तिकमुपक्रमप्रभृत्यपवर्गपर्य-

---

१. नियम्यत्वात्–मु० पा०।

न्तस्य क्रियानिचयस्याख्यातार्थतया लोकव्युत्पत्तेः। पचेदिति हि नियुक्तः काष्ठाहरणादि ओदनपर्यन्तमनुतिष्ठति। तस्मात् क्रियानिचय एवाख्यातार्थः। तत्रापि च समाप्त्यंश एव साक्षाद्विधीयते, तद्विशेषणभूतयोरारम्भमध्ययोस्तद्विधानादेवार्थाद्विधानसिद्धेः। तस्मात् कामेन निमित्तेन विहितं कर्म वीतायामपि कामनायां समापनीयमिति। तदिदमुक्तम्—**एवं हि श्रूयते** इत्यादिना **वीतायामपि फलेच्छायामुपक्रान्तं समापनीय**मित्यन्तेन भाष्येण। तत्र समाप्तिः शब्दार्थ इत्येतदुपपादयति—**सा समाप्तिः फले** फलकामे निमित्ते **विधीयते**। कुतः? **यदि ह्यारम्भो विधीयेत ततः समाप्तिरविहितत्वाद् नावश्यं कर्तव्या** स्यात्। ननु समाप्तिविधानेऽपि नारम्भः सिद्ध्येत्, अत आह—**समाप्तौ तु विधीयमानायामर्थाक्षिप्तत्वादारम्भमध्यौ लभ्येते**। नह्यनारब्धं समापयितुं शक्यते। **तस्मात् समाप्तिः शास्त्रचोदितत्वाद् वीतायामपि फलेच्छायां कार्या**।

नन्वयं निमित्तपक्षः पूर्वाधिकरण एव "फलकामो निमित्तमिति चेन्न, नित्यत्वात्" इत्यनेन निरस्तः किं पुनरुपन्यस्यते। सत्यम्। यत्र दर्शपूर्णमासादौ नित्यत्वमस्ति तत्र नित्यत्वव्याघाताद् नैमित्तिकत्वं निरस्तम्। प्रजाकामेत्या(म इत्या)दिषु तु नित्यत्वाभावाद् अविरुद्धं नैमित्तिकत्वमित्याशङ्कया पुनरुपन्यासः॥ १३॥

## फलार्थित्वाद्वाऽनियमो यथानुपक्रान्ते॥ १४॥

एकदेशिमतं तावत् पूर्वपक्षवादी निराकरोति—**फलमात्मन इच्छतः पुरुषस्य यागः** फलप्राप्त्युपायो **विधीयते**। न तु कामे निमित्ते यागः कर्तव्यतया[1] चोद्यते, कामपदस्य विध्यपेक्षितफलपरत्वे सम्भवत्यनपेक्षितनिमित्तपरत्वस्यान्याय्यत्वात्। तस्मात् स्वरसत एव फलस्य पुरुषेण कर्तव्यतया विदितस्योपायत्वेन यागो विधीयते। ततः किमित्यत आह—**वीतायां च** फलेच्छायां **नासावभ्युपायो भवति**। कुतः? **अभ्युपेयस्याभ्युपेतुमीप्सितस्य** फलस्या**भावात्**। अतः

1. 'कर्तव्यतया' नास्ति—ख०।

**कथमसौ** निष्फलः **क्रियते**। यत्त्वारम्भो निमित्तं समाप्तेरित्युक्तं तत्राह—**न चारम्भो निमित्तम्**। कुतः ? **यद्वृत्तसप्तम्योरभावात्**। नहि "प्रजाकामो यजेत" इत्यत्र यद्वृत्तेन सप्तम्या वा निमित्तत्वमारम्भस्य समाप्तिं प्रत्युच्यते।

किञ्चारम्भस्वरूपमेव तावन्नोच्यते, प्रागेव निमित्तत्वमित्याह—**न च केनचिच्छब्देनारम्भो निर्दिश्यते** येन निमित्तं स्यात्। न च शिष्टस्मरणान्निमित्तत्वं शक्यमभ्युपगन्तुं मिथ्यासंकल्पदोषभ्रान्तिनिमित्तत्वेन गृह्यमाणकारणत्वात् स्मरणस्यानादरणीयत्वात्। तस्मान्नारम्भः समाप्तेर्निमित्तमिति। अत्र भाष्यकारेण शास्त्रेण न कस्यचिदपि कर्तव्यता बोध्यते। तथा हि—फलस्य तावन्न बोध्यते, विदितत्वात् तत्कर्तव्यताया[1] इत्युक्तम्। तदुक्तम्—

साध्यांशे पुरुषाणां च प्रत्ययो न नियोजकः।
स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः फलम्[2] ॥ इति।

नापि यागस्य दुःखात्मकस्य चेतनकृत्युद्देश्यतात्मिका कर्तव्यता शक्या शास्त्रेण बोधयितुं प्रत्यक्षविरोधात्। सुखप्राप्तिदुःखपरिहारव्यतिरिक्तेषु हि वस्तुषु विमुखीभवति चेष्टेति सर्वेषामात्मप्रत्यक्षम्, अन्यत्र स्वतीर्थानुरागसञ्जातसन्तमसतिरस्कृतविवेकात् प्राभाकरात्। तस्मान्नात्र यागस्य कर्तव्यतेत्युक्ता [उक्त्वा] कथं तर्हि यागे कर्त्तव्यतावचनं लौकिकानामित्याशङ्क्य परिहृतम्—कर्तव्योपदेशश्च शक्यादिष्वर्थेषु भवतीति।

तदनुभाष्य व्याचष्टे—**यागः शक्यः कर्तुमित्यस्मिन्नर्थे कर्तव्यतावचनस्य कल्पना शक्या कर्तुम्**। तत्रापि हि स्मर्यन्ते कृत्प्रत्ययाः [ कृत्यप्रत्ययाः ]—"कृत्याश्च, शकि लिङ् च" इति। आदिशब्देन भाष्येऽर्हार्थस्य ग्रहणं कृतम्। शक्यते हि फलोपायत्वाद् यागः कृत्यर्ह इति वदितुम्, **न तु त्वदीयोऽर्थो यागः कर्तव्य इति**। कृत्युद्देश्यतारूपं कर्तव्यत्वं यागस्य न सम्भवति, प्रत्यक्षविरोधादित्यर्थः। तस्मान्न समापनीयमिति ॥ १४ ॥

---

१. तत्कर्मकर्तव्य–क०।
२. सदा–क०।

## नियमो वा तन्निमित्तत्वात् कर्तुस्तत्कारणं स्यात् ॥ १५ ॥

यदुक्तं कामे निमित्ते न कर्म विधीयते इति, तद्गृह्णीमः। यत्तु प्रक्रान्तं न समापनीयमित्युक्तं तदवजानीमहे। शिष्टविगर्हणात् समापयितव्यं नियमेन। न च निर्मूलं विगर्हणमित्याह—**न स्वाच्छन्द्येन** मूलाद्विना शिष्टा **विगर्हन्ते**। कुतः? **अशिष्टा एव ते स्युर्यदि विगर्हयेयुर्विना शास्त्रेण**। न च सर्वेषामार्याणां धर्मप्रणिहितचेतसामशिष्टत्वं शक्यमङ्गीकर्तुम्। अतः **शिष्टाचाराद्** विगर्हणरूपात् **स्मृतिः, स्मृतेश्च श्रुतिः** कल्प्यते—प्रक्रान्तं शास्त्रीयं कर्मावश्यं समापयितव्यमिति।

किञ्च, **तैत्तिरीयाणां चानन्यपरं वचनमस्ति** यत्प्रक्रम्यासमापयन्तं निन्दित्वा प्रायश्चित्तं विधत्ते—"देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते। त्रैधातवीयेन यजेत न देवताभ्य आवृश्च्यते" इति। दृश्यते चावाप्तेऽपि फले समाप्तिः कारीर्याम्, "यदि वर्षेत्तावत्येव होतव्यम्" इति। तस्मात् **प्रारभ्य यजेतैवेति सिद्धम्** ॥ १५ ॥

( ४—प्रारब्धलौकिककर्मसमाप्तेरनियमाधिकरणम् )

## लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥ पू०

ननु शिष्टविगर्हणात् समापनमुक्तम्। न च गृहादिषु सामिकृतेषु त्यक्तेष्वपि शिष्टा विगर्हन्ते। ततः कथं पूर्वः पक्षः? उच्यते। यथैव होलाकादिषु प्राच्यादिभिर्व्यवस्थितेष्वप्यनुष्ठीयमानेषु तत्कल्पितायाः श्रुतेः सर्वगामित्वात् सर्वधर्मत्वं स्थापितम्, तथैवात्रापि प्रक्रान्तं शास्त्रीयं कर्मावश्यं समापयितव्यमिति कल्पनात् 'देवताभ्यो वा एष आवृश्च्यते' इति [1]च वाक्याद्देवताश्रयव्यापारमात्रस्यावश्यं समापनीयत्वावगमाद् गृहादीनामपि शास्त्रीयत्वाद्देवताश्रयत्वाच्च कर्तव्यमेव समापनमिति पूर्वः पक्षः। तदुक्तम्—ततोऽधिपुरुषज्ञानमिति। पुरुषमधिकरोतीति व्युत्पत्त्या लौकिकं

---

१. 'च' नास्ति—क०।

गृहकर्माद्यधिपुरुषमुच्यते । तस्यापि ज्ञानं ततः शास्त्रादेव । गृहकर्माद्यपि पुरुषार्थतया शास्त्रेणैव विहितमित्यर्थः । शास्त्रीयं चेत्समापयितव्यमेवेति । सिद्धान्तस्तु सत्यं शास्त्रीयं समापयितव्यमेव । गृहादि तु न शास्त्रीयम् । कुतः ?

अप्राप्ते ह्यर्थवत् शास्त्रं गृहादि च न तादृशम् ।
अशास्त्रादेव हि प्राप्तिः सम्भवत्येवमादिषु ॥
तस्मादर्थसुखाङ्गत्वाच्छास्त्रमेषामकल्पकम् ।
देवताश्रयता नैषां विद्यतेऽन्याश्रया हि ताः ॥

पुरुषाश्रया हि देवताः स्मर्यन्ते[1], न तु गृहकर्माङ्गतया । तस्मादमीषां नावश्यं समापनमिति ॥ १६-१८ ॥

( ५–निषेधातिक्रमे पुरुषप्रत्यवायाधिकरणम् )

## प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥ पू०

ननु पर्युदासवादिनः पूर्वपक्षिणः 'प्रतिषेधेषु' इति 'प्रतिषिद्धानाम्' इति च वचनं विरुद्धमित्याशङ्क्य सिद्धान्ताभिप्रायं प्रतिषेधाभिधानमिति दर्शयन् पूर्वपक्षमारभते । **त्वन्मतेन प्रतिषेधोऽयं मम तु पर्युदास एव** भवति । कथम् ? **न कलञ्जं भक्षयितव्यमित्युपश्लेषलक्षणया** सन्निकर्षलक्षणया पदश्रुत्या **भक्षयतेः कर्तव्यतां तव्यो विदधाति, नकारश्च** कलञ्जभक्षयतिशब्दाभ्यां **व्यवहितत्वान्न कर्तव्यतावचनेन** प्रत्ययेन **सम्बध्यते ।** तुशब्दार्थे चशब्दः । **तस्माद्धात्वर्थाविरुद्धात्** कर्तव्यतावचनात् **प्रच्युतो** नञन्येन शब्देन **सम्बध्यमानः पर्युदास एव भवति** । विधिशब्दसम्बन्धे हि नञः प्रतिषेधः स्यात् । न चासौ सम्भवतीत्युक्तम् । अतोऽन्येन सम्बन्धात् पर्युदासः ।

केन पुनरन्येनास्य सम्बन्ध इति विवक्षुमाह—**तत्र नायं कलञ्जेनाव्यवहितेनापि सम्बध्यते । किं कारणम् ? असमासत्वात् । सुबन्तयोः** शब्दयोः

१. 'स्मर्यन्ते ....समापनमिति' नास्ति–ख० ।

**समासे सति पर्युदासो भवति** । सुबन्तयोर्हि न-कलञ्जशब्दयोर्मिथः सम्बन्धेन यः पर्युदासः स समासे सति भवति, **नासमासे** । नञो हि सुबन्तसम्बन्धे नित्यः समासो वाक्यकारेण स्मृतः [१]"वावचनानर्थक्यं च स्वभावसिद्धत्वात्" इति वदता । **अतश्चासमस्तत्वात् तस्मात्** कलञ्जशब्दात् **पर्युदस्तः** प्रच्युतो नञ् आख्यातस्थेन भक्षयतिना **धातुना सम्बध्यते** । **तत्र च सुबन्तत्वाभावात् समासो नास्ति** । न प्रसज्यत इत्यर्थः । **तस्मान्नञो** भक्षयतिना सम्बन्धात् तद्विशिष्टस्य भक्षयतेर्विधिना सम्बन्धाद् **अभक्षणं कलञ्जादिविशिष्टं** विहितमश्रुत-फलमपि विश्वजिन्न्यायेन स्वर्ग**फलार्थिना कर्त्तव्यमिति** ।

नन्वेवमप्यभक्षणस्य भक्षणाभावरूपस्य विधानात् कथं पर्युदासत्वम् ? उच्यते । नाभावस्य विधिः सम्भवत्यननुष्ठेयत्वात् । न खलु भक्षणप्रागभावः पुरुषस्यानुष्ठेयः । तेन विधिसम्बन्धयोग्यं भक्षणव्यतिरिक्तं क्रियान्तरं नञ्धातुभ्यां लक्ष्यत इति सिद्धं पर्युदासत्वम् ।

एवं तावत्सन्निकर्षात् पर्युदास उक्तः । तत्राशङ्क्यते—

ननु सर्वपदार्थानामरुणादिवत् सन्निकर्षविप्रकर्षावतन्त्रीकृत्य प्रत्ययार्थेन प्रधानभूतेन भावनया सम्बन्धाद् नञोऽपि तेनैव सम्बन्धो युक्तः, न धातुना । अतः कथं पर्युदासत्वमित्याशङ्क्य हेत्वन्तरमाह—**अथवा भवन्तु सर्वपदानि भावनोपनिपातीनीति** । तत्रापि पक्षे **यद्ययं नञ् स्वार्थवृत्तः** सन् भावनया **सम्बध्यते ततो भावनावैपरीत्येन** विरोधेन **प्रवर्तेत**, तद्विरुद्धनिवृत्तिप्रति-पादनात् । **तस्मात्** स्वार्थवृत्तौ **भावनाविरोधात्** तत्परिहाराय **स्वार्थं हित्वा लक्षणावृत्तः सम्बध्यते** । **न च केवलो नञ् लक्षणां प्रतिपत्तुं शक्नोति** । ततोऽर्थविशेषलक्षणासिध्यर्थं **धातुना सम्बध्यते** ।

किमिति पुनर्धातुना सम्बध्यते ? यावता कलञ्जेनैवाव्यवहितेन सम्बन्धो युक्तः, अत आह—**तेनैव न्यायेन** धातुना सम्बध्यत इति पूर्वेणान्वयः । उक्तो हि न्यायः—समासाभावान्न कलञ्जसम्बन्धो युक्त इति । किञ्च, प्रधानसम्बन्धा-

१. 'न' अधिकं—क० ।

भिलाषिणस्तदसम्भवे तत्प्रत्यासन्नेन सम्बन्धो युक्तो न विप्रकृष्टेन। धात्वर्थश्च शब्दतो वस्तुतश्च भावनायाः सन्निकृष्टो न तु नामार्थः। तस्मादपि न कलञ्जसम्बन्धो युक्तः। तदाह– **अर्थभावनाविरोधात् तस्याः प्रच्युतो नञनन्तरेण धातुना सम्बध्यते। तस्मा**न्नञ्भक्षयतिभ्यां मिथः सम्बद्धाभ्यां लक्षितो**ऽभक्षणं नाम मानसो व्यापारः** संकल्पाख्यः फलार्थिना**नुष्ठेयः**।

कथं पुनः संकल्पस्यैव लक्षणा, यावता भक्षणव्यतिरिक्तक्रियामात्रलक्षणात् स्पर्शादिक्रियाणामपि लक्षणा युक्ता। अत आह––**क्रियां कुर्वन् प्रथमं तावत् संकल्पं करोति, तदुत्तरकालं तस्यां प्रवर्त्तते**। तेन सर्वक्रियासाधारणरूप-संकल्पो भक्षयतावनुस्यूत इति। ततः किम्? इदं ततो भवति–**स्पर्शनादिक्रिया** भक्षयते**र्विप्रकृष्टा** सम्बन्धाभावात्। **मानसस्तु संकल्पोऽनन्तरः** संनिकृष्टः। **अतस्तमेव** संकल्पं सामान्यरूपं भक्षयतावप्यनुस्यूतं भक्षयतिना पर्युपस्थापितं पर्युदासवृत्तिर्नञा**तिष्ठते**। तेन स एव पर्युदस्तभक्षणो विधिना विधीयते, यथा अब्राह्मणमानयेत्यत्र नञ् व्युदस्तब्राह्मणं पुरुषसामान्यमित्येकः प्रकारः।

प्रकारान्तरमाह––**प्रतिषेधेऽपि प्रथमं संकल्पयति ततो निवर्तते**। तेन क्रियाया इव तद्वर्जनस्यापि मूलभूतः संकल्पः। **तदेवं चोदितत्वाद् नान्तरीयकः संकल्पः** क्रियाचोदनायां वर्जनचोदनायां चाविनाभूत इति। अस्मिंश्च पक्षे नञ्भक्षयतिभ्यां भक्षणाभावः प्रतिपादितः स्वयं विधिसम्बन्धायोग्यः स्वमूलभूतं संकल्पं लक्षयति।

पूर्वस्मिंस्तु पक्षे भक्षयतिनैव श्रुत्यर्थाभ्यां भक्षणे संकल्पे च सामान्यरूपे प्रति-पादिते नञा श्रुतिप्रतिपादितभक्षणव्युदासेन स एव संकल्पो न भक्षये इत्येवं विधि-विशेषणरूपेण प्रतिपाद्यत इति विवेकः। ननु तस्मिन् पक्षे किमिति भक्षणमात्रं पर्युदस्यते, यावता धातुसमभिव्याहृतो नञ्शब्दस्तत्प्रतिपादितं सकलमेव पर्युदसितु-मर्हति श्रौतमार्थं च। अतः संकल्पस्यापि पर्युदासान्न किञ्चिदनुष्ठेयमवशिष्येतेतीमा-माशङ्कां परिहर्तुं पुनरपि प्रथमपक्षमेवोपसंक्रम्याह––**यथैवाब्राह्मणमानयेत्यत्र नकारेण** श्रुतिप्रतिपादिताया **ब्राह्मणजातेरेवाभावः क्रियते**, तावतैव नञश्चरि-

तार्थत्वात्, **पुरुषजातेस्त्वार्थिक्या नाभाव उच्यते। तस्माद्यत्र पुरुषत्वं विद्यते** क्षत्रियादौ **ब्राह्मणत्वं पर्युदस्तं स आनीयते।** तदेतदपोहप्रस्तावे विस्तरेण वर्णितम्। **एवमिहापि नकारेण भक्षणमेव पर्युदस्तं** श्रौतम्। **यस्तु मानसो व्यापारः** संकल्पाख्यः सर्वक्रियास्वनुस्यूतः, **सोऽन्तरङ्गत्वाद्**पर्युदस्तत्वात् **कर्त्तव्यतावचनेन सम्बध्यते।** यथा-"**नोद्यन्तमादित्यमीक्षेत**" इत्यत्र प्रजापतिव्रतेषु संकल्पविधिरेवमत्रापि।

नन्वेवमपि [1]कथं काम्यत्वम्? प्रजापतिव्रतानां हि पर्युदासत्वेऽपि नित्यत्वमुक्तम्। एवमिहापि किं न स्यादत आह-**इयांस्तु विशेषः** प्रजापतिव्रतैः। **तत्र हि** प्रजापतिव्रतेषु क्रियालक्षणे विहितात् **शतृप्रत्ययाद् हेतोर्नोद्यन्तमित्यनेन** शब्देनानीक्षणादि[2]संकल्पस्यादित्योदयो **निमित्तमभिधीयते।** यस्मिन् खलु सम्प्राप्ते कर्तव्यतया क्रिया लक्ष्यते, तदेव निमित्तमित्युच्यते। तेन नेक्षेतेत्यनेन कर्त्तव्यतयोच्यमानस्यानीक्षणसंकल्पस्यादित्योदयो लक्षणत्वेनोच्यमानो निमित्तं भवति। सप्तमीयद्वृत्तयोरपि चैतावदेव निमित्तप्रतिपादकत्वम्। सप्तम्यपि हि भावलक्षणे विहिता तन्मात्रमेव श्रुत्याभिधत्ते, न निमित्तताम्। तथा यच्छब्दोऽप्यन्योपलक्षणत्वेनैव स्वार्थमभिदधाति, न तु निमित्ततया। कर्तव्यरूपभावलक्षणता तु निमित्तत्वेनैव घटते नान्यथेति विधिशब्दसमभिव्याहृताभ्यां ताभ्यां निमित्तत्वसिद्धिः। एवं शतृप्रत्ययेनापि। **अतस्तत्रागत**[3] आदित्योदये **नित्यं संकल्पानुष्ठानम्।** एनोनिर्बर्हणं चात्र फलं वाक्यशेषे श्रूयते। तच्च सर्वेषां सर्वदापेक्षितमिति फलवशादपि नित्यमनुष्ठानम्। अत्र तु निमित्ताभावादवाक्यशेषत्वाच्च विश्वजिन्न्यायेन स्वर्गस्यैव फलत्वात् स्वर्गकामाधिकारा एवंजातीयका न तु नित्या इति ॥१९॥

---

1. न-क०।
2. 'आदि' नास्ति-ख० ग०।
3. तत्रागतागत-क० ग०।

**शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ २० ॥**

यदुक्तं प्रजापतिव्रतवदिति तत्राह—**तस्य व्रतमित्युपक्रम्य "नोद्यन्तमादित्यमीक्षेत" इति श्रूयते । व्रतमिति च कर्म**नाम । तदेवं सति **यदि प्रतिषिद्ध्यते** प्रतिषेधः क्रियते, ततः **पूर्व**मुपक्रमस्थं व्रताभिधान**मुत्तरेण** नोद्यन्तमित्यनेन **न सम्बध्येत । तस्मात्त**त्रोपक्रम**विरोधाद् नञ्**प्रत्ययात् **प्रच्युतः प्रत्ययानन्तरेण धातुना सम्बध्यते । इह तु नास्ति व्रतस्थानीयं पूर्ववाक्यम्**, यद्वशेन धातुना सम्बन्धः स्यात् । **अतः श्रुत्या** श्रुत्यर्थलाभाय **कर्त्तव्यतावचनेन नञ् सम्बध्यते ।** किं[1] वान्यथा श्रुत्यर्थो हीयते ? [2]ओमित्याह—**धातुसम्बन्धे ह्युभे अपि** नञ्-भक्षयतिपदे **लक्षणावृत्ते स्याताम्**, सङ्कल्पप्रतिपादनात् । **किञ्चासमासे च[3] समासोऽध्यारोप्य प्रदर्शनीयः ।** यथावस्थितस्यासमस्तस्य नञः प्रधानभूतेन प्रत्ययार्थेनैव सम्बन्धोऽनभिप्रेतोऽपि बलात् प्रतीयते । अतस्तत्परिहारायाभक्षणं कुर्यादित्येवं नञ्धात्वोः समासोऽध्यारोप्यत इति । उपसंहरति—**इत्येते** पर्युदासपक्षे **दोषाः** ।

सिद्धान्ते तु न कश्चिद्दोषः, किन्तु गुण एवेत्याह—**तथा नञ्प्रत्यययोः सम्बन्धे सर्वाणि** पदानि **स्वार्थवृत्तानि** भवन्ति । यथा पूर्वपक्षे दोषस्तथास्मिन् पक्षे गुण इति तथाशब्दस्यार्थः । यत्तु व्यवहितत्वान्नञ्प्रत्ययसम्बन्धोऽयुक्त इत्युक्तम्; तन्न, श्रुत्यर्थानुग्रहाय व्यवहितसम्बन्धस्यैव न्याय्यत्वात् । वाक्यस्य हि तदा बाधः, पर्युदासत्वे तु श्रुतेर्बाधः । स चान्याय्यः । यत्तु प्रत्ययार्थेन सम्बध्यमानो वैपरीत्येन वर्तत इत्युक्तम्, तद्धात्वर्थसम्बन्धेऽपि तुल्यम् । स्वभावस्त्वयं नञो यदसौ

---

१. किञ्चा—क० ।

२. कथमि—ख० ।

३. 'च' नास्ति—क० ।

येनैव केनचित् सम्बध्यते तदर्थस्यैव प्रत्यनीकं प्रतिपादयति । तस्माद्धातुसम्बन्धे प्रत्ययसम्बन्धे चाविशेषः ।

सूत्रस्य चायमर्थः—प्रजापतिव्रतेषु हि त्रीणि शास्त्राणि । "तस्य व्रतम्" इत्याद्यमेकम् । "नोद्यन्तमादित्यमीक्षेत" इति मध्यमम् । "एतावता हैनसाऽयुक्तो भवति" इत्यन्त्यम् । तेषामर्थवत्त्वेनैकार्थ्यसिध्यर्थं युक्तं यत्पुरुषार्थः फलार्थः संकल्पो विधीयत इति । इह तु तयोरसमवायित्वात्तादर्थ्ये फलार्थसंकल्पविध्यर्थत्वे प्रमाणभूतयोः व्रतोपक्रम-फलश्रवणयोः समवायाभावाद् विध्यतिक्रम एव वाक्यार्थः । निषेध इति [1]यावत् ।

तस्मात् श्रुत्यर्थलाभाय नञः प्रत्ययसंगतिः ।
तत्राभावो विधीयेत विध्यर्थो वा निवार्यते ॥

केचित्तावद्धात्वर्थावच्छिन्ननञर्थानुरक्ता भावना विधीयत इति मन्यन्ते । तत्रैषा वचनव्यक्तिः—भक्षणवर्जनं कर्तव्यमिति । नन्वेवं विधिरेवायं वर्जनविषय इति कथं प्रतिषेधत्वम् ? नैष दोषः । न वयं विधेरत्यन्तपृथग्भूतं प्रतिषेधं सङ्गिरामहे, किन्तु विधिरेव विषयभेदाद् द्वेधा व्यपदिश्यते । यत्र धात्वनुरक्ता भावना विषयः, तत्र विधिरिति व्यपदिश्यते । यत्र तु नञर्थानुरक्ता भावना विषयो भवति, तत्र निषेधव्यपदेशं लभत इति ।

एकदेशिनामप्येतदेव मतम् । तेऽपि हि कार्यरूपमपूर्वं विध्यर्थं सर्वत्र वाक्यार्थं मन्वाना निषेधेष्वपि धात्वर्थावच्छिन्नो नञर्थः कृत्यवच्छेदमुखेन कार्यमवच्छिनत्ति यथान्यत्र धात्वर्थः, ततश्च तद्विषयो नियोगो वाक्यार्थ इत्याचक्षते । भक्षणप्रवृत्तश्च नियोज्यः । नन्वसौ विषयविशेषणं भक्षयतिः कथं नियोज्यविशेषणम् ? उच्यते । सत्यं प्रथमोपनिपाते विषयविशेषणमेव सन्नपेक्षावशाद् योग्यत्वाच्चाधिकृतविशेषण-मपि भवति । नियोगस्य हि नियोज्योऽपेक्षितः । स एव च भक्षणाभावविषये नियोगे नियुज्यता[ नियोज्यता ]मनुभवितुं भवति योग्यो यो भक्षणप्रवृत्तः । तदेवं क्रिया-[2]प्रवृत्तनियोज्यको नञर्थविषयो नियोगो निषेधेषु वाक्यार्थ इति ।

---

१. 'यावत्·····विधीयते' इति नास्ति–ग० ।
२. प्रवृत्ति–क० ।

तदिदं मतद्वयमपि शाब्दन्यायविदो नानुमन्यन्ते। तथा हि—धातुस्तावत् स्वपदस्थं प्रत्ययार्थमुल्लङ्घ्य न पदान्तरस्य नञोऽर्थमवच्छिनत्ति, श्रुतेर्वाक्याद्बलीयस्त्वात्। तथा प्रत्ययार्थोऽपि समानपदश्रुतिगम्यधात्वर्थातिक्रमेण न नञर्थं विषयीकरोति, तस्मादेव हेतोः। अपि चैवं प्रकृतिप्रत्यययोः सामर्थ्याभावान्नैकपद्यं स्यात्। 'समर्थः पदविधिः' इति पदविधिमात्रविषयेयं परिभाषा न केवलसमासविषया। सम् इति चैकीभावे सम्बन्धे वा। तेन ययोरेवैकार्थ्यम्, यथा नीलोत्पलशब्दयोः राजपुरुषशब्दयोश्च; यथा यजेत, वृक्षमित्यादिषु प्रकृतिप्रत्यययोः; ययोर्वा सम्बद्धार्थत्वं यथा द्वन्द्वे धवखदिरशब्दयोस्तयोरेव सामर्थ्यम्। तदिह यदि धात्वर्थो नञर्थेन सम्बध्यते नञर्थश्च प्रत्ययार्थेन, ततो धातुप्रत्यययोर्मिथः सामर्थ्यं न स्यात्[1]। तस्माद्धात्वर्थावच्छिन्नो नञर्थो विधिविषय इत्यनुपपन्नम्। विशेषतश्च शब्दानुबन्धवादिनो निबन्धनकारस्यायुक्तं शब्दविपरीतमभिधातुम्।

विवरणकारस्य तु वस्तुस्वभावबलेन सर्वत्र वाक्यार्थं नयतो नञर्थस्य प्रागभावरूपस्याननुष्ठेयस्य, अनुपाख्येयत्वेन चाभिमतस्यात्यन्तायुक्तं नियोगविषयत्वम्। ततो वरं पर्युदासत्वम्। तत्र हि नावस्तुनो विधिविषयत्वम्, नापि प्रकृतिप्रत्यययोरसामर्थ्यम्, नञ्सहायेन धातुनैव लक्षितस्य संकल्पस्य प्रत्ययार्थसम्बन्धात्। लक्षितार्थसम्बन्धेऽपि[2] हि सामर्थ्यं न विहन्यते। गङ्गायां घोष इत्यादिषु लाक्षणिकस्यापि तीरादेः सप्तम्यर्थेनान्वये सामर्थ्याविघातात्। तस्मान्न नञर्थस्य [3]विधिविषयता। विषयान्तरं तु न किञ्चिदपि श्रूयते। तस्माद्विषयासम्भवान्न निषेधेषु विधेर्वाक्यार्थता घटत इत्येवं वाच्यम्—यद् भक्षयितव्यमिति रागादिप्राप्तक्रियाकर्तव्यतानुवादेन नेति निषिध्यते = भक्षणस्य कर्तव्यता या भवतावगता सा नास्ति, सन्निहितसुखलवदर्शनात्तु मोहात्तस्य कर्तव्यता भवतावगतेति। अस्मिंश्च पक्षे न विधिनिषेधयोर्विषयभेदः,

---

१. 'स्यात्' इत्यतः 'विवरणकार' इत्यन्तं नास्ति–ग०।

२. सम्बन्धार्थे–क०।

३. 'विधि' नास्ति-क०।

किन्त्वेक एव भावनात्मा विषयः । तत्रैव प्रेरणं विध्यर्थः, निवारणं निषेधार्थ इति स्वरूपमेवानयोर्भिन्नं न विषय इति । आह च—

अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः ।
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥
अन्यथानागतोत्पाद्यभावप्रेरणवारिका ।
अन्तः[1] सङ्कल्पमूलात्मा वृत्तिर्विधिनिषेधयोः ॥
विध्यर्थमपि चैतेषामर्थप्राप्तमनूदितम् ।
प्रतिषिध्य कृतार्थो नञ्············॥ इत्यादि ।

सूत्रभाष्यकारयोरप्येतदेव दर्शनमभिमतम् । सूत्रकारस्तावद् विध्यतिक्रमो वाक्यार्थ इति वदन् विध्यर्थस्य कर्तव्यतात्मकस्य रागादिप्राप्तस्य निवारणमतिक्रमापरनामधेयं नञ्प्रतिपाद्यं वाक्यार्थं दर्शयति । तथा भाष्यकारोऽपि भक्षयितव्यमिति भक्षणं कर्तव्यमिति शब्देनोच्यते; नेति तत् प्रतिषिध्यते श्रुत्यैवेति स्पष्टमेव कर्तव्यतानिवारणं वाक्यार्थं दर्शयति । [2]तस्माद् यत्[3]कुर्यादिति रागादिप्राप्तक्रियाकर्तव्यतानुवादेन तन्नेति नञा निवारणं क्रियत इतीयमेव वचनव्यक्तिर्ज्यायसीति ।

तत्र भाष्यकारेण प्रतिषिद्धमपि भक्षणं दोषाश्रवणात् तत्कल्पनायां च प्रमाणाभावादनुष्ठातव्यमेव न तु वर्जयितव्यमिति परिचोद्य, सत्यं न कल्पनीयो दोषः, क्लृप्त एव त्वसौ । कथम्? अनन्तरमेवैनं शिष्टा विगर्हयेयुः पतितः कर्मफलेभ्य इति वदन्तः । महांश्चैष दोषो यच्छिष्टा वर्जयन्तीति परिहृतम् । तदयुक्तम् । नह्येतावन्मात्रेणात्यन्तसुखसाधनं सुरापानादि वर्जयितव्यम् । रहस्यं चानुतिष्ठतां विगर्हणमपि नास्तीति निरर्गलमनुष्ठानं स्यात् । तस्मादनुपपन्नमेतदित्याशङ्क्याह—**शिष्टविगर्हणा च दोषावगमोपायत्वेन वर्णयितव्या**, न स्वयं दोषत्वेन । यच्छिष्टा वर्जयन्तीति

---

१. अतः—क० ।

२. 'तस्मात्' इत्यतः 'ज्यायसीति' इत्यन्तः पाठो नास्ति—ग० ।

३. 'यत्' नास्ति—ख० ।

न प्रथमान्तो यच्छब्दः, किन्तु पञ्चम्यन्तोऽव्ययम्। यस्मात् शिष्टा वर्जयन्ति तस्मान्महान् दोष इति। [1]नह्यदुष्टं वर्जयन्ति। दोषमेव हि कर्मभ्यस्तत्फलेभ्यश्च हानिं जातिभ्रंशकरत्वमशुचिकरत्वं च स्मरन्तो वर्जयन्ति। "द्विजातिकर्मभ्यो हानि-र्निपतनं परत्र चासिद्धिर्नास्यास्मिन् लोके कर्मभिः सम्बन्धो विद्यते; तथा परस्मिन् कर्मफलैर्न पतितैः संव्यवहारो विद्यते; अतोऽन्यानि दोषवन्त्यशुचिकराणि कर्माणि भवन्ति" इत्यादिवचनात् सर्वेषामेव निषिद्धानां तारतम्येन नरकपात-फलत्वं स्मरन्ति। मानवो हि द्वादशाध्यायः सकल एव धर्माधर्म[2]फलप्रतिपादनपरः। तस्माद्दोषवत्त्वाद्वर्जयितव्यम्। एवं तावत् स्मृत्याचारप्रामाण्याद् दोषवत्त्वमुक्तम्। किमत्र स्मरणोपन्यासेन। निषेध एवानर्थफलत्वे निषिद्धानां प्रमाणं भवतीति मत्वा भाष्यकारेणोक्तम्—यथा न सर्पायाङ्गुलिर्देयेति दोषदर्शनाद् सर्पायाङ्गुलिर्नियोगतो न दीयते, कण्टको वा पादेन नाधिष्ठीयते, एवमिहापीति।

तस्यायमर्थः—यन्नियोगतो वर्जयितव्यं सर्पाङ्गुलिदानादि तद् दोषवदवगतम्। इहापि ( तद् ? ) भक्षणस्य निषेधेन वर्जनीयत्वावगमात्, तस्य च दोषमन्तरेणानु-पपत्तेः श्रुत्यर्थापत्त्या दोषवत्त्वमवगम्यते विश्वजिदादिष्विव स्वर्गफलत्वमिति। तस्याभिप्रायमाह—**चोदनायां फलाश्रुतेरित्यादिके** द्वे अपि पूर्वोत्तरपक्षसूत्रे विश्वजिदादिष्वश्रुतफलेष्वपि विधिवशादेव समीहितं फलं कल्प्यमित्येवं प्रतिपा-दनपरे कलञ्जभक्षणादिष्वप्यश्रुतफलेषु निषेधप्रामाण्यादेव प्रत्यवायरूपं फलं कल्प्यत इत्यस्मिन्नर्थे ऊहेन नेये तुल्यन्यायत्वात्। यथैव हि विधेः प्रवर्तकत्वं मा व्याघा-तीति विधेयस्य समीहितसाधनता कल्पिता, तथैव निषेधस्यापि निवारकता नासति दोषफलत्वे निर्वहतीति तद्बलेनाश्रुतोऽपि दोषः कल्प्यते।

कः पुनरत्र नञर्थः ? निवारणमिति ब्रूमः। तथा हि—येनैवासौ समभिव्या-हृतस्तस्यैव प्रतिपक्षमभिधत्ते। ततश्च यथैव 'नास्ति' इत्यत्रास्तिशब्दयुक्तः सत्त्वप्रति-पक्षमसत्त्वं प्रतिपादयति, तथैव प्रेरणात्मकविधिसमभिव्याहृतस्तत्प्रत्यनीकं निवारणं

---

१. नह्यन्यथा–ख० ग०।

२. 'फल' नास्ति–क०।

प्रतिपादयति। तद्वशेन दोषकल्पना। यदा त्विष्टसाधनता विधिरित्यभ्युपगमः, तदा नञ्सम्बन्धादनिष्टसाधनतैव श्रुत्याभिधीयत इति। सर्वथास्ति तावद्दोषः। कार्यवाक्यार्थवादिनापि [1]यथैवाश्रुतो नियोज्योऽपेक्षितत्वाद्विश्वजिदादिषु निषेधाधिकारेषु च स्वर्गकामो निषिध्यमानक्रियाकर्ता वा प्रकल्प्यते, नह्यसति नियोज्ये कार्यतैव घटत इति तथैव सुखदुःखप्राप्तिपरिहारातिरिक्तस्य वस्तुनः कार्यता नासति तदुपायत्वे घटत इति कल्प्यमेव फलम्। तदेव हि प्रेक्षापूर्विकायां कृतौ व्याप्यतामनुभवितुमर्हति, यस्मिन् कृते समीहितप्राप्तिरकृते वा प्रत्यवाय इति। तस्माद्भक्षणस्य प्रत्यवायकरत्वे सति तद्वर्जनस्य कार्यता तत्परिहारोपायतया घटते नान्यथेति सिद्धं प्रत्यवायकरत्वं निषिद्धानाम्। प्रत्यवायश्च सर्वैः परिहरणीय इति जीवदधिकारा एवंजातीयका नित्या न तु स्वर्गकामाधिकारा इति[1] ॥२०॥

[ ६—स्मार्तानामप्युपनयनोत्तरकालकर्तव्यत्वाधिकरणम् ]

## तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥२१॥ पू०

इह स्मार्ता यमा नियमाश्चोदाहरणम्। वृद्धवयःप्रत्युत्थानम्, प्राङ्मुखभोजनम्, उदङ्मुखस्य मूत्रकरणम् इत्यादयो नियमाः। "नानृतं वदेत्", "न कलञ्जं भक्षयेत्" इत्येवमादयो यमाः। ते प्रागप्युपनयनात् प्रवर्तन्ते। नह्यत्रोपनयनमधिकारिविशेषणतया श्रूयते। न चैषामध्ययनापेक्षा स्मार्तत्वादमन्त्रसाध्यत्वाच्च। अतः समर्थमात्राधिकारा एवंजातीयकाः। जननग्रहणं च सामर्थ्योपलक्षणार्थम्। न तावदुपनयनमपेक्षितव्यमित्यर्थः। तत्र सिद्धान्तमाह—

## अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥

अत्र भाष्यकारेण सामान्यतोदृष्टेन सिद्धान्तः कथितः। तमाक्षिपति—

---

1. पूर्वपक्षसूत्रे 'प्रतिषेधानाम्' इति पदं प्रतिषेधत्वेन सिद्धान्त्यभिमतानामित्यर्थकम्, पूर्वपक्षिणाम् "न कलञ्जं भक्षणीयम्" इत्यादीनां पर्युदासत्वाभिमानात्।

१. तथैव—क०।

**न सामान्यतोदृष्टेन शास्त्रे व्यवहारो युक्तः, येनोपनयनोत्तरकालं वैदिकानि कर्माणि** दृष्टानि, तस्मादियमपि वैदिकार्थविषयत्वादु**पनयनोत्तरकालमेव**[1] **प्रवर्तते स्मृतिरि**त्यनुमानमुच्यते। **तस्मान्न**[2] **सामान्यतोदृष्टेन** सिद्धान्तो **वर्ण्यते**। कथं तर्हि? **"सुरा न पेया", "ब्राह्मणो न हन्तव्यः" इत्येवमादयो जातमात्रेणैव न कर्तव्याः**, तथैव शिष्टैः स्मरणात्। **अन्यांस्तु** सामान्येन प्रतिषिद्धानपि **"प्रागुपनयनात् कामचारवादभक्षाः" इति** प्रतिप्रसूतत्वेना**प्रतिषिद्धत्वा**दनुपनीतः **करिष्यति**। उपनीत एव तु वर्जयति। तथोप**नयनोत्तरकालमेवाभिवादनप्रत्युत्थानादीन्युपदिश्यन्ते** स्मर्तृभिः, ब्रह्मचारिणं प्रकृत्य विधानात्, उत्तराश्रमेष्वप्यतिदेशाद् अनुपनीतस्य नाशङ्कितव्यानि।

कः पुनः सूत्रार्थस्तं दर्शयति—स्वाध्यायोऽपि तत्काल उपनयनोत्तरकाल एवोपदिश्यते। **अतो वेदाध्ययनकाल एवोपदेशाद्वेदतुल्यत्वादि**त्युच्यते। वेदाध्ययनतुल्यकालत्वादित्यर्थः। **अथवा विशिष्टकाला एवैते स्मर्यन्ते**। यथाह गौतमः—"उपनयनादिर्नियमः" इति। **स्मृतीनां च वेदमूलत्वाद्वेदतुल्यता**। वेदतुल्यत्वात् स्मृतीनां तासु चोपनयनोत्तरकालमेवाभिवादनाद्युपदेशादुपनयनेन सहैवैषां प्रवृत्तिरिति सूत्रार्थः ॥२२॥

[ ७—अग्निहोत्रादिकर्मणां विहितकालकर्तव्यत्वाधिकरणम् ]

## अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते ॥ २३ ॥

नैमित्तिकेऽङ्गत्यागेनापि प्रयोगः स्थास्यति। द्विविधानि चाङ्गानि। केषाञ्चित् प्रयोगवचन एव श्रुत्यर्थाभ्यामुपादानमपि प्रयुङ्क्ते, यथा प्रयाजादिकर्मणां व्रीहिसोमादिद्रव्याणां च। नहि द्रव्यवन्तमेवाधिकरोति विधिः, किन्त्वद्रव्यवन्तमप्यधिकृत्य तस्य द्रव्योपादानं प्रयुङ्क्त एवेत्युक्तम्। केषाञ्चित्त्वशक्यत्वाद्विध्यन्तरप्रयुक्तत्वाच्च न स्वयं सम्पादनं प्रयुङ्क्ते, किन्तु सिद्धे तस्मिंस्तत्साधनकं कर्मा-

---

१. 'एव' नास्ति-क०।

२. 'न' नास्ति-क०।

नुष्ठापयति यथा कालाग्निविद्यानाम्। नहि कालः सम्पादयितुं पुरुषेण शक्यते। तेन स्वयमागते तस्मिंस्तत्र कर्म कर्तव्यम्। तथाग्निविद्ये अपि आधान-स्वाध्यायविधिभ्यामेव प्रयुक्ते लभ्येते इति न क्रतुविधिना प्रयुज्येते।

तदेवं द्विविधेऽङ्गजाते सति सन्दिह्यते--किमङ्गान्तरवत् कालाद्यपि परित्यज्यानुष्ठातव्यम्, उत कालाद्यनुरोधेनैव प्रयोग इति। तत्र प्रधानवाक्यावगतनिमित्त-बलेन यथाङ्गान्तराणि यथाशक्त्युपसंह्रियन्ते, तथा कालाद्यपि, अङ्गत्वाविशेषात्।

नन्वेवं कालविध्यानर्थक्यं स्यात्; न, काम्यार्थत्वात्। तस्मादविदुषामप्यनग्नीनामप्यकालेऽप्यधिकारोऽस्त्येवेति पूर्वपक्षः। सिद्धान्तस्तु—यत्प्रयोगवचनेन कर्तव्यतया चोद्यते, तदेव यथाशक्त्युपबध्यते। अतस्तस्य सत्यां शक्तावनुष्ठानमसत्यां तु त्याग इति युक्तम्।

यत्तु स्वयंसिद्धं विध्यन्तरसिद्धं वोपजीव्य विधिः, तद्वतः पुरुषस्य केवलं कर्मानुष्ठानं प्रयुङ्क्ते, न तस्य यथाशक्त्युपबन्धसम्भवः। कर्तव्यविशेषणं खल्वेतद्यथाशक्तीति। न च कालाग्निविद्यानां प्रयोगविधिः कर्तव्यतां बोधयतीत्युक्तम्। अतो नैषां परित्यागः, किन्तु तद्वन्तमेवाधिकृत्य कर्मानुष्ठानविधानाद् नानग्नेरविद्यस्याकाले चास्त्यधिकार इति सिद्धम्।

यत्तु भाष्यकारेणोक्तम् 'न कालो गुणो निमित्तं ह्येतत्' इति। तदयुक्तम्, कथंभावापेक्षिताङ्गपरत्वे सम्भवत्यनपेक्षितनिमित्तपरत्वायोगात्। यदि च निमित्तपरा कालश्रुतिः, न तर्हि काम्यस्य तत्कालत्वं सिध्येत्। अपि चैवं यावज्जीवश्रुतेरानर्थक्यं स्यात्, प्रदोषादौ निमित्ते कर्मविधानादेव यथेष्टप्रयोगसिद्धेः। तस्मादयमर्थः—नाङ्गान्तरवद् गुण एव कालः, किन्त्वनुपादेयत्वात् तस्मिन् सति कर्म कर्तव्यमिति। अर्थात् तत्कालीनं जीवनं निमित्तं सञ्जातमिति निमित्तविशेषणत्वाद् निमित्तमित्युच्यते। तस्माददोषः॥ २३॥

---

१. 'इति' नास्ति–क०।

[ ८–अग्निहोत्रादिकर्मणां निमित्तानुरोधेनावृत्त्यधिकरणम् ]

## तेषामौत्पत्तिकत्वादागमेन प्रवर्तेरन्[1] ॥ २७ ॥ सि०

नैमित्तिकान्यग्निहोत्रादीनि कर्माणि सकृदेव कर्तव्यानि, न तु निमित्तावृत्तावावर्तयितव्यानि। कालशास्त्रानुरोधेन हि निमित्तसङ्कोचः पूर्वाधिकरणे दर्शितः। सकृत्कृतेऽपि च कालशास्त्रं कृतार्थं भवति। तस्मान्निमित्तमपि तावतैव कृतार्थत्वान्न नैमित्तिकमावर्तयितुमलम्। अतः सकृदेव कर्तव्यानीति पूर्वपक्षः।

[2]सिद्धान्तस्तु—सत्यं कालानुरोधेन निमित्तसङ्कोचः। तेन चैतावद्भवति यदुत तत्कालीनं जीवनं निमित्तमिति। ततश्च तथाभूतस्यैव जीवनस्य निमित्तभूतस्यावृत्तौ नैमित्तिकस्याप्यावृत्तिः केन वार्यते। यदि ह्येकैव कालव्यक्तिः कर्माङ्गं स्यात्, ततस्तद्वदेव जीवनं निमित्तमिति निमित्तावृत्त्यभावान्नैमित्तिकं नावर्तेत। प्रदोषादि[3]मात्रं त्विह कर्माङ्गं श्रूयते। ततश्च तद्वशेन सर्वप्रदोषवर्ति जीवनं निमित्तमिति तदावृत्तावधिकारावृत्तेः पुनः पुनर्नैमित्तिकमावर्तयितव्यमिति ॥ २७ ॥

[ ९–क्रत्वर्थनैमित्तिकानां निमितावृत्तावावृत्त्यधिकरणम् ]

## तथान्तःक्रतु[4]संयुक्तानि ॥ २८ ॥

युक्तं यत्पुरुषार्थं नैमित्तिकं[5] निमित्तावृत्तावावर्तते। तत्र हि प्रतिप्रयोगं फलभेदादैश्वर्यलक्षणस्याधिकारस्यावृत्तिर्भवति। क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारव्यतिरेकेण फलाभावात्तस्य चैकत्वात् सकृत्कृतेनै[6]वाङ्गेन निर्वृत्तेर्नावृत्तिर्युक्तेति विशेषाशङ्कायामतिदिश्यते। यथाशास्त्रं प्रयोजनकल्पनात् शास्त्रेण चागते निमित्ते नैमित्ति-

---

१. 'प्रवर्तेत' इति–मु० पा०।

२. 'सिद्धान्तस्तु' नास्ति–क०।

३. 'आदि' नास्ति–क०।

४. 'प्रयु'–मु० पा०।

५. 'नैमित्तिकम्' नास्ति–ग०।

६. 'एव' नास्ति–क०।

कस्यावश्यानुष्ठातव्यत्वावगमाद् एकोऽपि क्रतूपकारो यथैवासति भेदने विनापि भेदनहोमेनाङ्गान्तरैरेव जन्यते, सति तु भेदने भेदनहोमोऽपि सहायीभवति; तथैवावृत्ते भेदने सत्यावृत्तेनैव भेदनहोमेन क्रतूपकारः सम्पद्यत इति कल्पनादेतेषामपि निमित्तावृत्तावावृत्तिरिति ॥ २९ ॥

[ १०—गुर्वनुगमनादीनां निमित्तावृत्तावावृत्त्यधिकरणम् ]

## आचाराद् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥३०॥

गुर्वनुगमनादीनां तु दृष्टार्थत्वात् तद्वशेनैव सकृदसकृद्वानुष्ठानं न त्ववश्यं निमित्तावृत्तावावृत्तिरिति विशेषाशङ्का। तथा च स्मृत्यधिकरणेऽभिहितं प्रत्युपस्थितनियमानामाचाराणां[1] दृष्टार्थत्वादेव प्रामाण्यमिति। दृष्टार्थेष्वपि नियमादृष्टस्याप्रतिहतत्वात्, तस्य च यथाशास्त्रमवगमात्, शास्त्रे च "स्थिते तिष्ठेत् व्रजेद्याति" इत्यादौ सप्तमीबलेन गुरूपस्थानादीनां निमित्तत्वावगमात्, "अनूत्थाय तिष्ठन्तं गच्छन्तमनुगच्छेद्धावन्तमनुधावेत्" इत्येवमादौ लक्षणार्थेन शतृप्रत्ययेनानुगमनं प्रति गुरुगमनस्य निमित्तत्वप्रतीतेर्निमित्तावृत्तौ नैमित्तिकमप्यावर्तयितव्यमिति सिद्धान्तः ॥ ३० ॥

[ ११—ज्योतिष्टोमादीनां त्रैवर्णिकस्य नित्यताधिकरणम् ]

## ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥३१॥ सि०

आवश्यककर्मविशय[विषय]विचाराधिकारात् सोमादीनामप्यावश्यकत्वमस्ति

---

1. प्रत्युपस्थितनियमानामाचाराणामिति । यानि तावदाचाराद् गृह्यन्ते गुर्वनुगमनादीनि कर्माणि, तान्यधिकृत्य नियमा बहवो धर्मशास्त्रेषु विहिताः सन्ति । त एव शास्त्रविहितनियमसंबद्धा आचारा उपस्थितनियमा आचारा इत्युच्यन्ते । तेषां चैतदधिकरणविषयभूतानां 'व्रजेद्याति', 'गच्छन्तमनुगच्छेत्' इत्यादिवाक्येषु सप्तमीशतृप्रत्ययादिना नैमित्तिकत्वमवगन्तुं शक्यमेव । अतश्च सूत्रकारोक्तेष्वाचारप्रमाणकधर्मेषु वाक्याभावाद् न सप्तम्यादीनां संभव इति भाट्टदीपिकोक्तदूषणस्य नावकाश इति द्रष्टव्यम् ।

नास्तीति चिन्त्यते। लक्षणसङ्गतिस्तु स्पष्टैव। तत्र अग्निहोत्रस्य दर्शपूर्णमासयोश्च यावज्जीवचोदनया युक्तमावश्यकत्वम्, सोमविद्याप्रजस्य तु नावश्यकत्वे प्रमाणमस्ति। यत्तु "वसन्ते वसन्ते ज्योतिषा" इति वचनम्, तत्कालविधिपरं न निमित्तपरम्। विद्याप्रजयोस्तु नैवंविधमपि वचनमस्ति। तस्मात् "ज्योतिष्टोमेन स्वर्गकामो यजेत", "सप्तमे ब्रह्मवर्चसकाममुपनयीत" इति कामसंयोगेन श्रवणात्, प्रजायास्त्वसत्यपि कामसंयोगे विश्वजिदादिवत् फलकल्पनात् कामाधिकारा एते न जीवदधिकारा इति पूर्वः पक्षः। ननूपनयने कामसंयोगः श्रूयते न विद्यायाम्? सत्यम्, तथाप्युपनयनस्याध्ययनाङ्गत्वाद् न स्वयं फलसम्बन्ध उचित इति प्रधानद्वारेणैव तदुपनयनस्य फलम्। अतोऽध्ययनफलमेवैतदिति मन्यते।

अत्रोच्यते—ज्योतिष्टोमे तावद्वीप्सायुक्तः कालो निमित्तत्वेनैवान्वेतुमर्हति नाङ्गत्वेन। तथा हि—वीप्सार्थोऽयमनूद्यते विधीयते वा? न तावदनुवादः, प्राप्त्यभावात्। नहि कर्माङ्गत्वेन वसन्ते विहिते यावद्वसन्तमनुष्ठानं प्राप्नोति। नह्यङ्गमस्तीति कृत्वा प्रधानमनुष्ठातव्यं भवति। तन्न तावदनुवादः। नापि विधिः, अशक्यत्वात्। नहि सर्ववसन्तव्यापी ज्योतिष्टोमोऽनुष्ठातुं शक्यते, पञ्चाहादिसमाप्यत्वात् तस्य।

अथ यावद्वसन्तमभ्यस्येदिति विधीयेत, ततो यजेतेत्ययं शब्दोऽभ्यासलक्षणार्थः स्यात्। तस्मान्निमित्तमेव वसन्तः सप्तम्या प्रतिपाद्यते। तथा सति हि यावन्निमित्तं नैमित्तिकावृत्तिः प्राप्तैवेति वीप्सार्थोऽनुवादः। तस्मादागत आगते [1]वसन्तेऽवश्यं कर्तव्यः सोमः। तथाध्ययनमपि फलाश्रवणात्, ब्रह्मवर्चसादेरध्ययनाङ्गभूतोपनयनाश्रितसप्तमवर्षादिगुणफलत्वात्, विश्वजिदादिवत् स्वर्गकल्पनस्य च प्रथमसूत्र एव निरस्तत्वान्न काम्यम्, किन्तु [2]आवश्यकाग्निहोत्रदर्शपूर्णमासाद्यौपयिकज्ञानफलत्वादावश्यकजपयज्ञप्रायश्चित्तपारायणाद्युपयोगिग्रन्थावधारणफलत्वा-

---

१. 'वसन्ते' नास्ति-क०।

२. 'आवश्यक' नास्ति-ख०।

चावश्यकमेव[1] । अवश्यापेक्षितसाधनत्वमेव हि कर्मणामावश्यकत्वं नान्यत् । तथा प्रजोत्पादनस्याप्यकामसंयोगेन श्रवणात्,

……………अमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

इत्यवश्यापेक्षितामृतत्वप्राप्तिफलश्रवणात्,

अनुत्पाद्य सुतान्मोहात् मोक्षमिच्छन् व्रजत्यधः ।

इत्यकरणे प्रत्यवायश्रवणात्, स्वर्गकल्पने चैवमादिविधि[१]विरोधप्रसङ्गाद् आवश्यकत्वमेव कल्प्यते । एवं वर्ण[ऋण]श्रुतिरपि समर्थिता भविष्यति । तस्मादावश्यकाः सोमादयः ।

यत्तु भाष्यकारेण सिद्धान्तवेलायामग्निहोत्रादिवाक्यमुपन्यस्तम्, न तत्प्रतिपाद्यतया; किन्तु दृष्टान्तार्थम्[2] । यथाग्निहोत्रादेर्यावज्जीवचोदनावशेनावश्यकर्तव्यत्वं

---

१. 'विधि' नास्ति—क० ।

1. आवश्यकमेवेति । अत्रावश्यकक्रत्वनुष्ठानापेक्षितत्वेन वेदार्थज्ञानस्य वेदाध्ययनस्य च यन्नित्यत्वं प्रतिपाद्यते, तत् क्रतूनां विद्याप्रयोजकत्वस्य निरस्तत्वादुपेक्षणीयमिति भाट्टदीपिकायामुक्तम् । तत्रैतद् नः प्रतिभाति — सत्यम् अध्ययनसिद्धार्थज्ञानादेव सिद्धेरुत्तरे क्रतुविधयो न पृथगर्थज्ञानमाक्षिपन्ति, तथापि वेदार्थज्ञानं क्रत्वङ्गमिति, अध्ययनमर्थज्ञानाङ्गमिति च न विवादः । अतश्च "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः" इति ऋणसंस्तुतानां यज्ञानामवश्यकर्तव्यत्वे सिद्धे यत् प्रकृतं 'अवश्यापेक्षितसाधनत्वमेवेह कर्मणामावश्यकत्वं नान्यत्' इति निरुक्तरूपं नित्यत्वम्, तद् विद्यायाः सिद्ध्यत्येवेति न काचिदनुपपत्तिरिति ।

2. दृष्टान्तार्थमिति । 'ब्राह्मणस्य तु' इत्यस्मिन् अधिकरणसूत्रे 'ऋणवाक्यसंयोगात्' इति यो निर्देशः, नासौ हेतुप्रदर्शनपरः, किन्त्वन्यार्थदर्शनरूपलिङ्ग-

तथा सोमादेरपीत्यर्थः। ये त्वाचार्यकरणविधिप्रयुक्तमध्ययनं मन्यन्ते, ते कथमिवाध्ययनस्य नित्यत्वं समर्थयेरन्। नहि प्रयोजकाभावेऽनुष्ठानं सिद्ध्यति। न च सर्वदा

---

प्रतिपादनपरः। लिङ्गं च प्राप्तस्यैवार्थस्योपोद्बलनाय भवति। अतोऽत्र नित्यत्वप्रापकं किमित्याकाङ्क्षामवतार्य भाष्ये "वसन्ते वसन्ते ज्योतिषा यजेत", "यावज्जीवमग्निहोत्रं जुहोति", "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति यथाक्रमं ज्योतिष्टोम-अग्निहोत्र-दर्शपूर्णमासानां नित्यत्वप्रापकाणि वचनान्युपन्यस्तानि। परन्तु अग्निहोत्र-दर्शपूर्णमासनित्यतायाः पूर्वमेव यावज्जीववाक्यद्वयोपन्यासपुरस्सरं व्यवस्थापितत्वात् पुनस्तस्यार्थस्य कथनं पुनरुक्तं भवतीति कृत्वा तद् दृष्टान्तप्रदर्शनार्थं न तु स्थापनार्थमिति व्याख्यातं तन्त्ररत्ने। सर्वत्र चैवंविधेषु स्थलेषु प्रौढग्रन्थानामीदृश्येव व्याख्यासरणिर्दरीदृश्यते।

श्रीशम्भुभट्टस्तु अग्निहोत्रादीनामप्यस्मिन्नेवाधिकरणे नित्यत्वव्यवस्थापनं रोचयमानो दृष्टान्तार्थं तद्ग्रहणमित्येतदसृष्यमाणश्च कथयति—"सूत्रस्थ-ऋणवाक्यसंयोगरूपहेत्वभिधानबलादेव सोमपदस्य नित्ययज्ञमात्रोपलक्षणत्वप्रतीतेरग्निहोत्रादीनामप्येतदधिकरण एव नित्यत्वस्य वक्तव्यतौचित्यात्" इति। तत्र वयं पृच्छामः—अवश्यकर्तव्यत्वरूपनित्यत्वे साध्ये यदि नाम सर्वनित्ययज्ञसाधारणो हेतुः सूत्रेऽभिहितः, किं तावता ऋणवाक्यसंयोगरूपहेत्वाश्रयः सर्वोऽपि यज्ञः पक्षीकर्तव्यः, तदर्थं च सोमपदं सर्वयज्ञलक्षकं कल्पनीयम्? मा भूद् धूमवत्त्वहेतोर्महानसादिसाधारण्यात् पर्वतशब्दो महानसाद्युपलक्षणम्। वस्तुतस्तु सूत्रोक्त ऋणवाक्यसंयोगो न स्थापनहेतुर्नित्यतायाः। किं तर्हि? अन्यार्थदर्शनात्मकलिङ्गप्रदर्शनमात्रमेतदिति भाष्य एवोक्तम्। तस्मादग्निहोत्रादेरिहापक्षत्वात् दृष्टान्तार्थं तद्ग्रहणमिति यथाव्याख्यातमेव रमणीयम्।

सर्वेषामाचार्यकरणकामोऽध्यापयिता स्वयं प्रवृत्तोऽध्याप्यं मृगयमाणः सन्निहितो भवति। अथ यं कञ्चिदध्यापयितारं मृगयित्वार्थदानादिना तस्मादधीयीरन्। अहो बत भवता सुसमाहितमाचार्यकरणविधिप्रयुक्तमध्ययनम्। एवं ह्यध्ययनविधिप्रयुक्तमध्यापनं भवेदिति विपरीतमापद्यते। तस्मादिदमधिकरणमनालोच्याचार्यकरणविधिप्रयुक्तिमभिदधाना मातृप्रिया उपेक्षणीयाः।

अथवायमन्योऽर्थः सूत्रस्य प्रदर्श्यते। यो नाम "जायमानो वै ब्राह्मणः" इत्यस्मिन् ऋणवाक्ये ब्राह्मणसङ्कीर्तनात् तस्य सोमादीनि नित्यानि, इतरयोस्तु याथाकाम्यमिति मन्यते, तं प्रत्युच्यते—ऋणवाक्यसंयोगात् खलु भवान् ब्राह्मणस्यैव सोमविद्याप्रजमावश्यकं नेतरयोर्वर्णयोरिति मन्यते। सूत्रस्थः[1] तुशब्दोऽवधारणे। तच्चायुक्तम्, "वसन्ते वसन्ते ज्योतिषा" इत्यादिचोदनायामविशेषेण श्रवणात्, तद्वाक्यशेषे च ब्राह्मणशब्दाश्रवणात्, ऋणवाक्यगतस्य च ब्राह्मणशब्दस्यावदानस्तुत्यर्थत्वेनानियामकत्वादुपलक्षणतयैव [2]व्याख्यातुं युक्तत्वात्। तदिदं पशुसामान्यादिसूत्रवत् सूत्रान्यथाकरणमिति वेदितव्यम्।

तस्मादेतानि सर्वेषां नित्यानीत्यवधारणा।
नहि ब्राह्मणशब्दोऽत्र नियमाय भवत्यलम्॥ ॥ ३१ ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
षष्ठस्य द्वितीयः पादः॥

---

[ १–नित्ये यथाशक्त्यङ्गानुष्ठातुरप्यधिकाराधिकरणम् ]

**सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात्॥ १॥ पू०**

**यावज्जीविके प्रयोगे चिन्त्यते–किं सर्वाङ्गोपसंहारसमर्थः पुरुषोऽधिक्रियते, उताङ्गैकदेशसमर्थोऽपीति।** न चार्थापत्त्येकप्रमाणकशक्तिशाली

---

१. 'सूत्रस्थः' नास्ति–ग०।

२. व्याख्यातुम्–क०।

समर्थशब्देनोच्यते, किन्तु यावत् किञ्चित् कर्मानुष्ठानौपयिकं द्रव्यारोग्यशक्त्यादि तत्सामग्रीयुक्तः समर्थ इत्युच्यते। साधनसामग्र्या एवानुष्ठानोपयोगित्वात् सैवाधिकारिविशेषणम्, न शक्तिमात्रं प्रमाणाभावात्। न खलु सामर्थ्यं नामाधिकारिविशेषणं श्रूयते। अनुष्ठानोपदेशान्यथानुपपत्त्या तु कल्प्यते। न च शक्तिमात्रं तस्योपपादकम्, किन्तु सामग्र्येव तस्योपपादिका। तस्मात् सैवाधिकारिविशेषणमिति तिर्यगधिकरणे सिद्धम्। इदानीं तु किमसौ सामग्री सामर्थ्यशब्दाभिलप्या [1]नैमित्तिकेऽपि कृत्स्नाङ्गविषयाधिकारिविशेषणम्, उतैकदेशविषयापीति चिन्त्यते।

तेन यत्कैश्चिदुच्यते—सामर्थ्यमात्रमधिकारिविशेषणम्, न त्वप्रतिबद्धत्वोपाधिसव्यपेक्षमिति, तन्निरस्तम्। ननु कार्यात् प्राग् अप्रतिबद्धशक्तिर्न शक्यते निरूपयितुम्, अनिरूपिता च कथमधिकारिविशेषणम्? तस्माच्छक्तिस्वरूपमेवाधिकारिविशेषणम्। उच्यते। शक्तिस्वरूपं वा प्रागनुष्ठानात् कथमवगम्यते? तदपि हि कार्यैकप्रमाणकं न प्राक् तस्मादवगन्तुं शक्यम्। यदप्युच्यते—यः कार्यं प्राक् प्रकृत्य मध्ये चाकृत्वा पुनः कुर्वन्नुपलब्धः, तस्य पूर्वशक्तिविनाशे शक्त्यन्तरोत्पादे च कल्प्यमाने कल्पनागौरवप्रसङ्गात् प्रतिबन्धकल्पनमेव ज्यायः, तस्मादस्ति प्रागपि कार्याच्छक्तिरिति निश्चीयत इति। भवत्वेवं पुनः कार्यकरणे सति प्रागपि शक्तिरस्तीति निश्चयः। प्राक् तु कथं विद्यमानापि निश्चीयते, अनिश्चिता वा कथमधिकारिविशेषणम्। अथोच्येत—प्रागपि कार्यात् समानजातीयकार्यान्तरदर्शनात् तत्रापि विद्यत एव शक्तिरिति निश्चेतुं शक्यमिति, तुल्यमिदमप्रतिबद्धशक्तिनिश्चयेऽपि। तुल्योपलम्भयोग्य-

1. नैमित्तिक इति। यद्यपि नित्यनैमित्तिककाम्येत्यादिना सर्वत्र कर्मणां विभागः प्रदर्श्यते, तथाप्यत्र नैमित्तिकशब्देन नित्यानां नैमित्तिकानां च ग्रहणम्; नित्यानामपि यावज्जीवादिनिमित्तप्रयुक्तत्वात्। नियतनिमित्तानि नित्यानि, अनियतनिमित्तानि नैमित्तिकानीत्यवान्तरभेदविवक्षया नित्यनैमित्तिकेत्यादिविभागवचनमिति द्रष्टव्यम्।

वस्त्वन्तरावेक्षणदर्शनाद् आज्यावेक्षणेऽप्यप्रतिहतैव शक्तिरिति सुज्ञानम्। तस्माद्यः सामग्रीं सम्पाद्य सम्पन्नामेव वा लब्ध्वा तद्वान् यथोक्ते काले कर्म पर्याप्नोत्यनुष्ठातुम्, स एव समर्थ इत्युच्यते। ततोऽन्योऽसमर्थ इति। एतेन यदुक्तम्—नैजस्य सामर्थ्यस्याधिकारिविशेषणभूतस्य चालयितुमशक्यत्वाद् नासमर्थस्याधिकारप्रतिपादनार्थमिदमधिकरणम्, किन्तु सर्वाङ्गोपसंहारसमर्थस्यैव प्रतिबन्धकवशात् कतिपयाङ्गासम्भवेऽप्यधिकारं प्रतिपादयितुमिति, तदपि निरस्तम्। नहि नैजं सामर्थ्यमधिकारिविशेषणं किन्त्वप्रतिबद्धमेव, तस्यैवानुष्ठानोपयोगित्वादित्युक्तम्। अधिकरणमप्येतदसत्यपि सकलाङ्गोपसंहारसामर्थ्ये नित्येष्वधिकारोऽस्तीति प्रतिपादयितुमेव।

नन्वेवमनाहिताग्नेरप्यधिकारः स्यात्। भवन्मते वा तस्य कथं निरासः? अग्न्युपसंहारसामर्थ्याभावादिति चेत्? न, नैजस्याग्न्युपसंहारसामर्थ्यस्य तस्यापि विद्यमानत्वात्, अन्यथा कथमाधानोत्तरकालमग्नीनुपसंहरेत्। नह्याधानं सामर्थ्यजनकम्। अग्निजनकं हि तत्। अथासत्स्वग्निषु तदुपसंहारसामर्थ्यमविद्यमानमेव पश्चादग्निषु जातेषु जातमित्युच्यते, तद्द्रव्यान्तरेष्वपि शक्यं वक्तुम्। असत्सु द्रव्येषु[1] अविद्यमानमेव सामर्थ्यं सम्पन्नेषु तेषु जातमिति शक्यं प्रत्यवस्थातुम्। अतश्च व्रीह्यभावेऽप्यधिकाराभावान्न प्रतिनिध्युपादानं स्यात्। अपि च, यः प्रागग्निमुपसंहृतवान् मध्ये च विच्छिन्नत्वाद्[2] नोपसंहृतवान्, अन्ते च पुनराधानादग्निमान् जातस्तमुपसंहरन्नुपलब्धः, तस्य शक्तिनाशोत्पादकल्पने गौरवप्रसङ्गात् प्रतिबन्धस्यैव कल्पनादन्तरालेऽपि शक्तिरस्त्येवेति विच्छिन्नाग्नीनामप्यधिकारः स्यात्। तदेतदुभाभ्यामप्यावाभ्यामेवं परिहर्तव्यम्—यानि प्रयोगविधिना कर्तुरुपादेयत्वेनाङ्गानि चोद्यन्ते, तेषामेव शक्तिपरिमितत्वम्—यावन्ति शक्नुयात् तावन्ति कुर्यादिति। यानि तु विध्यन्तरप्रयुक्तानि स्वयं सिद्धानि चाङ्गत्वेन गृह्यन्ते, तानि स्वरूपत एवाधिकारिविशेषणम्; यथाग्न्यादीनि। तेषामुपादानस्य

१. व्रीहिषु–ख० ग०

२. विच्छिन्नाग्नित्वात्–ख० ग०।

प्रयोगविधिनानुपादानान्न यावच्छक्त्युपाददीतेत्युपबन्धसम्भवः, किन्तु तदपेक्षो विधिस्तद्वन्तमेवाधिकरोति । तेन सपत्नीकस्य त्र्यार्षेयस्याख्यातोपात्तसंख्याविशिष्टस्याग्निमतो विद्यावतः प्रदोषादि[१]कालसंयोगिनोऽधिकारो नान्यस्येति । एवञ्चाप्रतिसमाधेयाङ्गवैकल्योऽप्यग्न्यादिमानधिक्रियेतैव, आधानं तु न कुर्यात्तस्या [तस्य ?] नैमित्तिकत्वादिति ।

प्रकृतमनुसरामः । नन्वेकादशाधिकरणेन विरुद्धमिदमधिकरणम् । तत्र ह्यन्तरेणाप्यङ्गान्तरमेकेनापि समाप्येतेत्याशङ्क्य "विधेस्त्वेकश्रुतित्वादपर्यायविधानात्"[1] इति सर्वाण्यङ्गानि युगपत् कथंभावापेक्षिण्या भावनया इत्थंभावेन गृह्यन्त इति वक्ष्यते । तेनासत्सु सर्वेष्वङ्गेषु प्रधानोपकारानिर्वृत्तेः, अनुपकृताच्च फलाभावात्, असति फले चाधिकाराभावात् कथमेकदेशोपसंहारसमर्थोऽधिक्रियत इत्युच्यते ? अत आह—**एकादशे तु कथंभावः किं सर्वैरङ्गैर्निराकाङ्क्षीक्रियते उतैकेनापीति** चिन्ता । **सर्वैरिति सिद्धान्तः । एकादशे** कथंभावेन सर्वाङ्गग्रहणे **स्थित एवेदमधिकरणमारभ्यते** । निमित्तसम्बन्धावगताङ्ग[२]यावश्यकत्वबलेन यथाशक्त्युपसंह्रियमाणैरङ्गैः फलसिद्धिरस्तीति प्रतिपादयितुमिति न विरोधः । भाष्यस्याप्ययमेवार्थः—"एकादशे कामसंयुक्ते प्रथमे श्रवणे चिन्तयिष्यते, इह तु नित्ये श्रवणे द्वितीये" इति । नन्वस्य भाष्यस्यान्य एवार्थः प्रतीयते—एकादशाधिकरणं काम्ये सर्वाङ्गोपसंहारसमर्थस्याधिकार इति प्रतिपादनार्थम्, इह तु नित्ये कतिपयाङ्गयुक्तस्याप्यधिकारं प्रतिपादयितुमिति[2] । अत एवोत्तरेऽधिकरणे विकृतय एव काम्या उदाहृताः । प्रकृतौ कामसंयुक्ते श्रवणे सर्वाङ्गोप-

---

1. विधानादिति । "नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दार्थो निवीतवत् स्यात् सर्वप्रयोगे प्रवृत्तिः स्यात्" (११-१-१६) इति सूत्रस्यावशिष्टो भागः ।
2. प्रतिपादयितुमिति । अधिकरणमित्यनुषज्यते ।

१. 'आदि' नास्ति—क० ।
२. ङ्ग-ख० ग० ।

संहारस्यैकादशे सिद्धत्वात् तेन सहापौनरुक्त्यार्थं विकृतीरुदाहृतवानिति लक्ष्यते। उच्यते। सत्यमेवं प्रतिभाति; न [1]त्वेतद् युक्तम्। नह्येकादशेऽधिकारविषया चिन्ता, नापि काम्यमात्रविषया; किन्तु सर्वकर्मसाधारण्येन कथंभावः सर्वैरङ्गैः पूर्यत इति वक्ष्यते। तस्मात् स्थित एव तस्मिन्नधिकारविशेषचिन्तात्र क्रियत इति एवमेव वक्तव्यम्।

भाष्यं त्वेवं योजनीयम्—यद्यपि तत्राविशेषेण चिन्तयिष्यते न तु काम्य एव; तथाप्यस्मिन्नधिकरणे नित्येष्वशक्तिकृताङ्गत्यागाभिधानात् त्यक्तानां च तस्मिन् प्रयोगेऽनङ्गत्वात् काम्य एव सर्वेषामङ्गत्वमेकादशसिद्धमप्रतिहतं भवतीत्यभिप्रेत्योक्तम्—"एकादशे कामसंयुक्ते प्रथमे श्रवणे चिन्तयिष्यते" इति। प्रथमद्वितीयभाषा च भाष्ये विवक्षावशादुक्ता पाठाभिप्राया वा, न त्वत्र वस्तुत इदं प्रथममिदं द्वितीयमिति विभागोऽस्ति। भाष्ये प्रथमे श्रवण इति श्रवणग्रहणं कृतम्, न तु प्रथमे कर्मणि, प्रथमप्रयोग इति वा। तस्याभिप्रायमाह—"**अग्निहोत्रं जुहोति" इत्येवमुत्पन्नस्य** कर्मणो **विपरिवर्तमानस्य निमित्ते फले च विधानान्न तावत् कर्मान्तरमिदम्। नापि प्रयोगभेदः, अन्तर्गतत्वात् काम्ये नित्यप्रयोगस्य।** काम्यनित्ययोस्तन्त्रेणानुष्ठानादित्यर्थः। **श्रुतिकृत एव त्वस्ति भेदः।** पृथक्[2] फले निमित्ते च कर्म श्रूयते। अतस्तदुपाधिक एव भेदो न वास्तवः। **तमेव भेदमाश्रित्य भाष्यकारस्त्वाह—द्वितीये श्रवण इति।** उत्तराधिकरणमपि न विकृतिमात्रविषयम्, किन्तु सकलकाम्यविषयम्। विकृत्युदाहरणं तु प्रदर्शनार्थमित्यभिप्रायेणाह—**सर्वशक्त्यधिकरणसिद्धान्तजनिताशङ्कस्य** कृते **उत्तराधिकरणमारभ्यते—"काम्येषु चैवमर्थित्वात्"** इति।

यद्वा अङ्गानां समुच्चय एकादशे स्थिते, तिर्यगधिकरणे च यथाविनियोगमधिकारे स्थिते, अस्मिंश्चाधिकरणे नैमित्तिकेषु तस्मिन्नपोदिते तिर्यगधिकरण-

---

१. त्वेवम्—क०।

२. पृथक् पृथक्—क०।

न्यायादेव काम्येषु सर्वाङ्गशक्तस्याधिकारसिद्धेः किमर्थमुत्तराधिकरणमित्यत आह— **सर्वशक्त्यधिकरणसिद्धान्तजनिताशङ्कस्योत्तरमधिकरणमारभ्यते।** यथा निमित्तबलेनाङ्गत्यागः, तथा स्वर्गकामादिमात्रस्याधिकारावगमात् तद्बलेन काम्यमपि हीनाङ्गं प्रयोक्तव्यमित्येवमाशङ्कमानं प्रत्युत्तरमधिकरणं सकलकाम्यविषयमारभ्यते। **सर्वाङ्गोपसंहारसमर्थस्यैव काम्येष्वधिकारः**। कुतः ? **तादृशस्यैव** सर्वाङ्गोपसंहारसमर्थस्य स्वर्गकामादे**र्विद्यमानत्वात्**। तस्मिन्नेव काम्यश्रुतेश्चरितार्थत्वान्नाङ्गत्यागे प्रमाणमस्तीति भावः। ननु निमित्तवानपि तादृशोऽस्ति, तेन निमित्तश्रुतिरपि तत्रैव कृतार्थेति कथं तत्राप्यङ्गत्यागोऽत आह—**न तु नित्ये तादृशोऽस्ति सर्वदा यः सर्वाङ्गान्युपसंहर्तुं शक्नोति**। निमित्ते हि नैमित्तिकमवश्यं कर्तव्यम्, न तु कदाचिदप्यौदासीन्यं लभ्यते। **तस्मात्तत्रैकदेशाङ्गोपसंहारसमर्थोऽप्यधिक्रियते**।

एवमधिकरणानां विषयविभागः कथितः। इदानीं प्रकृतमधिकरणपूर्वपक्षप्रभृत्यभिधीयते। **सर्वैरङ्गैः क्रतुः** 'अग्निहोत्रं जुहोति' इत्येवमुत्पन्नो **निराकाङ्क्षीक्रियते। तादृश एव** सर्वाङ्गोपेत एव क्रतुः **कर्तृधर्मत्वेन** यावज्जीववाक्येन **चोद्यते। तदिदमुक्तं तथाभूतोपदेशादिति**।

योजनान्तरमाह—**अथवा**[1] **यथा काम्ये धातो**र्धात्वर्थस्य **पूर्वापरीभूतभावनाकरणता सर्वैरङ्गैर्निराकाङ्क्षीक्रियते** न तु कतिपयैरेव, **तथा नित्येऽपि** "विधेस्त्वेकश्रुतित्वात्" इत्यस्य न्यायस्य काम्ये नित्ये चाविशेषा**दित्यतस्तथाभूतोपदेशादि**त्युक्तम्। यथाभूतं काम्यं तथाभूतमेव नित्यमपीति।

व्याख्यानान्तरमाह—**अथवा नामविशिष्टं** दर्शपूर्णमासाख्यं कर्म **सर्वैरङ्गैर्निराकाङ्क्षीक्रियते, यथा काम्ये तथा नित्येऽपि**। कुतः ? **तन्नाम्नस्तुल्यत्वात्**। यदि हि नामान्तरं श्रूयेत ततः काम्यान्नित्यं कर्मान्तरं स्यात्। ततश्च

---

1. 'अथवा यथा काम्ये' इतीदं तथाभूतोपदेशाद् इत्यस्य द्वितीयं योजनं तृतीययोजनात्वेन निवेशितं पु० मु० पुस्तके। तथा 'अथवा नामविशिष्टम्' इति तृतीयं योजनं द्वितीयत्वेनेति द्रष्टव्यम्।

क्रत्वन्तरधर्मा इव क्रत्वन्तरेषु कामस्य धर्मा नित्ये न प्रवर्तेरन्। तन्नामकमेव तु निमित्तं प्रत्युपदिश्यत इत्यत**स्तथाभूतोपदेशादि**त्युक्तम्।

व्याख्यानान्तरमाह—**अथवा यथा काम्यस्य सन्निधाविति**। **इतिकर्तव्यता** आम्नाता **तथा नित्यस्यापि**। द्वयोरपि **सन्निधानाविशेषादि**त्यत**स्तथाभूतोपदेशादि**त्युक्तम्। इतिकर्तव्यतासन्निधिर्द्वयोरपि तुल्य इत्यर्थः।

व्याख्यानान्तरमाह—**अथवा भावना-आत्मनेपद-इतरेतरयोग-करणानां**[1] **तुल्यत्वात् तथाभूतोपदेशादि**त्युक्तम्। पूर्वं नामधेयैक्यात् प्रत्यभिज्ञानमुक्तम्। इदानीं तु [1]नामधेयगतेतरेतरयोगकरणविभक्त्योराख्यातपदस्य च काम्यवाक्यसमानरूपत्वात् स्पष्टमेव कर्मैकत्वमित्युच्यते। कर्मैक्ये च सति धर्माणामप्यैकरूप्यमेव युक्तम्, न तु क्वचित् साकल्यमितरत्र वैकल्यमिति वैचित्र्यं युक्तमिति।

व्याख्यानान्तरमाह—**अथवा पुरुषार्थस्य** भाव्यस्यो**भयत्र** काम्ये नित्ये च **विद्यमानत्वात् तथाभूतोपदेशादि**त्युक्तम्। यदि हि निमित्ते निष्फलं कर्ममात्रमेव कर्तव्यं स्यात्, ततस्तस्य स्वरूपस्याङ्गैर्विनापि सिद्ध्यवगमाद् हीनाङ्गस्यापि प्रयोगः स्यात्। उभयत्रापि तु फलसम्भवात्तस्य च यथाश्रुतसामग्र्यधीनसिद्धित्वात् समस्तेतिकर्तव्यतोपेतस्य करणस्य फलसाधनत्वेन श्रवणात् काम्यवन्नित्येऽपि सर्वाङ्गोपसंहार इति। यथा काम्यं फलायोपदिष्टं तथाभूतमेव नित्यमपीति सूत्रार्थः॥ १॥

**अपि वाप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात्॥ २॥ सि०**

एकदेशिमतेन तावत्सिद्धान्तमाह—**नास्तीतिकर्तव्यता** नैमित्तिकस्येतिकर्तव्यतास्वरूपमेव नास्ति; प्रागेव तत्साकल्यम्। अतो न सर्वाङ्गोपसंहार इति।

---

1. **दर्शपूर्णमासाभ्यामित्यत्र इतरेतरयोगः करणविभक्तिश्चेत्यर्थः—इति ख० टिप्पणी।**

1. **'कारणानाम्' इति पु० मु० पाठः।**

कथं नास्तीत्याह—**अपूर्वाभावात्**। अपूर्वप्रयुक्ता हि इतिकर्तव्यता नासति तस्मिन् भवितुमर्हतीति। **कथमपूर्वाभावः? फलाभावात्**। कालान्तरभाविफलसिद्ध्यर्थं ह्यपूर्वं कल्प्यते। तच्चासति फले न कल्पयितुं शक्यमिति। **कथं फलाभावः?** निष्फलेषु पुरुषप्रवृत्त्यसम्भवादुपदेशवैयर्थ्यप्रसङ्गादस्त्येव नैमित्तिकेऽपि फलमिति भावः। उत्तरम्—**निमित्तफलयोरेकत्र** वाक्ये**ऽसम्भवात्**। **कथमेकत्रासम्भवः?** उत्तरम्—**निमित्तफलयोर्द्वयोरप्यनुपादेयत्वात् ते प्रति कर्मोपादीयेते [यते]**। ततः किमित्यत आह—**तत्रान्यतरोपादाने** वाक्यस्य **कृतार्थत्वात्** तावतैव निवृत्त [ निर्वृत्त ]व्यापारत्वादेकमेव **प्रत्युपादीयते** कर्म, न द्वे अपि प्रति। कुतः? **उभयोपादाने वाक्यभेदः** स्यात्। प्रत्युद्देश्यं वाक्यसमाप्तेः। अथ मा नामोभयत्रोपादायि;[1] फलमेव तु प्रति कस्मान्नोपादीयते? अत आह—**निमित्तस्य श्रुतत्वा**दवर्जनीयत्वात् **तदेव** प्रति कर्मो**पादीयते**, न फलं प्रति। **ननु भावनावचनस्य किमित्थाकाङ्क्षोत्पन्ना न निमित्तेन पूर्यते** निष्फलत्वात्। **नापि यागेना**पुरुषार्थत्वात्। **केन तर्हि? फलेनैव**। तेन बलात् फलार्थत्वं युक्तमिति। **उच्यते**। **यदि फलार्थी** पुरुषः **कर्मणि प्रवर्तेत, ततस्तस्य यावज्जीवमित्येतदङ्गत्वेन स्यात्**, इतरथा वाक्यभेदात्। तेन फले सति निमित्ततैव तत्रानुपपन्नेति गत्यभावाद् यावज्जीवकालाभ्यासोऽयं काम्यस्यैव कर्मणोऽङ्गतया विधीयत इत्यापद्येत। किञ्च, फलप्रयुक्ते **कर्मणि फले चानर्थी न प्रवर्तेत इत्ययं च दोषः** स्यात्। किञ्च, **कृत्स्ना चेतिकर्तव्यता** नैमित्तिकेऽपि **स्यात्** काम्यवत्। ततश्च **"अपि वाप्येकदेशः"** **इति सूत्रं विरुध्येत**। किञ्च, इदं काम्यमिदं नैमित्तिकमिति **व्यपदेशभेदश्च न स्यात्**। **नित्यकाम्ययोः फले सति** द्वयोरपि कामार्थतया काम्यव्यपदेश एव स्यात्। तस्माद्यागस्यैव भाव्यत्वमिति। **अथोच्येत द्वावंशौ** कर्मणः **प्रयोजकौ फलांशो निमित्तांशश्च**। न फलमेव प्रयोजकं निमित्तमपीत्यर्थः। ननु द्वयोः प्रयोजकता विरुद्धा, एकेन प्रयुक्तेऽपरस्य प्रयोजकत्वासम्भवात्। अत आह—

1. 'उपादायि ⋯ कस्माच्च' नास्ति—ख०।

**तत्र श्रुतेन** निमित्तेन । निमित्तस्य श्रुतत्वादित्यर्थः । फले सत्यपि तस्य काल्पनिकत्वान्निमित्तांश एव प्रयोजकतया **विवक्षितः, फलं तु** केवलं **विद्यते** न तु प्रयोजकम् । **अतो न विरोधो भिन्नविषयत्वात्** । यत्र श्रुतं निमित्तं तत्र तत् प्रयोजकम् । अश्रुतनिमित्तेषु तु फलं प्रयोजकमित्यविरोधः । किमतो यदि निमित्तमपि प्रयोजकम्? अत आह—**एवञ्च निमित्तप्रयुक्तमवश्यं कर्तव्यं कर्म** । ततश्च फले चानर्थी न प्रवर्तेतेत्यादिदोषत्रयं न प्रसज्यते, अनर्थितेऽपि फले निमित्तबलादेवावश्यकार्यत्वात् । तद्बलादेव च विकलाङ्गस्यापि प्रयोगे सूत्राविरोधात् । व्यपदेशभेदश्चोपपन्नः कामप्रयुक्तं काम्यम्, निमित्तप्रयुक्तं नित्यमिति । नन्वेवमपि यदा फलेनानर्थी निमित्तवशादेव कर्म करोति, तदा निष्फलैव तस्य क्रिया स्यात्, अत आह—**तस्मिंश्च** कर्मणि निमित्तबलादेव **क्रियमाणे** सति **फलं किमिति न कामयते** । अलसतया हि कर्मानुष्ठानवैमुख्यात् फलं न कामयते । यदा तु निमित्तवशादेव कर्मानुष्ठातव्यं भवति, तदा तल्लभ्यं निसर्गसुन्दरं फलं कण्ठागतमिव मधु को नास्वादयति । तस्मान्निमित्तमेव फलस्यापि प्रयोजकं भवतीति न निष्फलतापत्तिरिति । इतिश्चोद्यसमाप्तौ । परिहरति—**एतदप्यनुपपन्नम्** । **कथम्? यः स्वर्गं न कामयते बन्धात्मकत्वाद् मोक्षार्थी तस्य** [1]**कर्मस्वरूप एव कर्तव्यता** कर्मस्वरूपमेव तस्य[2] कर्तव्यम्, न तु कर्मणा फलम् । तद्धि विश्वजिन्न्यायेन स्वर्गः स्यात् । स च शरीरारम्भहेतुतया[3] मोक्षविरोधीति । अथानर्थिते फले कर्मस्वरूपकर्तव्यतैव कुत इत्यत आह—**निमित्तसम्भवात्** । जीवनं हि निमित्तं कर्मानुष्ठानप्रयोजकं तस्याप्यस्तीति । अथ सदपि निमित्तं न प्रयोजकं मुमुक्षोः, अन्यस्यैव तु प्रयोजकमित्युच्यते, अत आह—**न च सकृच्छ्रुतस्य** निमित्तस्य **कञ्चित् प्रति प्रयोजकता, कञ्चित् प्रत्यप्रयोजकता न्याय्या** । तस्मान्मुमुक्षोरपि प्रयोजकमेव निमित्तम् । इतरथा हि सत्यपि जीवने कर्माक्रियमाणं तन्निमित्ततामेव जह्यात् । न च तत्र फलं सम्भवतीत्युक्तम् । एवं चैकरूप्यार्थं सर्वपुरुषान् प्रति निष्फलं

---

१. 'कर्मस्वरूप एव कर्तव्यता' नास्ति—ख० । २. 'तस्य' नास्ति—क० ख० ।
३. 'हेतु' नास्ति—क० ।

कर्म विधीयत इति युक्तम्। अन्यथा हि मुमुक्षुं प्रति कर्मण एव कर्तव्यता पुरुषान्तरं च प्रति कर्मणा फलस्य कर्तव्यतोच्यत इति वैरूप्यं वाक्यस्य स्यात्। तदाह—**तस्मान्निमित्ते कर्मविधानम्। अथोच्येत-क्रियायाः कर्तव्यतोपदेशात् कर्मता**[1]। शास्त्रेण कर्मभूतैव क्रियोपदिश्यते न करणभूता। [1]निष्फलैव तर्हि? इत्यत आह-**स्वसामर्थ्याच्च फलोत्पादकता**। नह्यस्ति स व्यापारो यत्र किञ्चिदसन्न जन्यते। किं पुनस्तदित्यत आह—**न चान्यत्फलमस्ति यागस्य स्वर्गादृते** विश्वजिन्न्यायात्। **तस्मात् क्रियाशक्त्या** मुमुक्षुणापि[2] प्रसज्य-[प्रयुज्य]मानस्य **फलमस्ति**।

ननु यद्यप्यन्यत्र क्रियाणामन्योत्पादनशक्तिरवगता, तथापि यावज्जीववाक्ये फलाश्रवणात्, तद्विहितः कर्मप्रयोगो निष्कामेन क्रियमाणो निष्फल एव स्यादत आह—**न च शक्तयो वेदेनोत्पाद्यन्त** इति। तेन विद्यमाना शक्तिर्निमित्तवशादपि प्रयुज्यमानस्य नापैतीति भावः। **एतदप्ययुक्तम्। कथम्?** यदि क्वचिदवगता शक्तिरन्यत्रापि नापैतीति कृत्वा निमित्तसंयुक्तवाक्यविहितेऽपि प्रयोगे कामसंयुक्तवाक्यावगतं फलमश्रुतमनर्थित[3]मप्युत्पद्येत, ततो **ज्योतिष्टोमे दर्शपूर्णमासयोः** सर्वफलशक्तत्वात् **सकृत्प्रयोगे सर्वफलप्राप्तिः** स्यात्। **न चेष्यते** त्वया। **तस्माद्यासु क्रियासु फलं प्रत्यक्षतोऽवगम्यते ता** एव **फलवत्यो** यथा भोजनादयः। **न त्वश्रुतफला** यावज्जीवादिवाक्यविहिता **वैदिक्यः** क्रियाः। नह्यदृष्टमश्रुतञ्च फलमस्तीत्यवसातुं शक्यम्। ननूक्तं न शक्तयो वेदेनोत्पाद्यन्त इत्यत आह—**न चाकाम्यमानं फलं भवति**। कुतः? **पुरुषार्थत्वात्**। तेन यदा स्वर्गकामेन प्रयुज्यते,

1. 'कर्मता' इत्यत्र 'कर्मणः' इति पु० मु० पाठो व्याख्यानाननुगुणः प्रतिभाति।

१. निष्फले न च तर्हि—ख० ग०।

२. णामपि—क०।

३. 'अपि' नास्ति—क०।

तदैव कर्मणः स्वर्गः फलम्, न तु नैमित्तिकप्रयोग इति भावः। **कर्तव्यतावचनः पुरुषार्थेनाविनाभूत इति चेत्।** तेन विधिबलादेव नैमित्तिकस्यापि फलमस्तीति। [1]परिहरति—**प्रयाजादीनामपि** फलवत्त्वेन **पुरुषार्थत्वादनङ्गता स्यात्। न चेष्यते** क्रत्वर्थत्वात्। **तस्मान्निमित्तं प्रति कर्ममात्रं विधीयते** निष्फलम्। **अतश्चापूर्वाभावात्** तन्मूले**तिकर्तव्याभावः।**

**कथमिदानीमेकदेशशब्दः** सूत्रे? नहीतिकर्तव्यतैकदेशोऽपि नित्यस्यास्ति। तस्मात् "अपि वाप्येकदेशे स्यात्" इति सूत्रमनुपपन्नमिति **चेत्**, उत्तरम्—**साङ्गस्य** प्रधानस्य **वाचकः कृत्स्नशब्दः। प्रधानमात्रापेक्षया त्वेकदेशशब्दः।** अङ्गप्रधानसमुदायापेक्षया प्रधानमात्रमेकदेशशब्देनोच्यते, न त्वङ्गैकदेशाभिप्रायोऽयमेकदेशशब्द इति। तत्पुनरिदमयथाभाष्यं व्याख्यानमिति मत्वा व्याख्यानान्तरमाह—**अथवा दृष्टार्था** कर्मस्वरूपोत्पत्त्यर्था **या पुरोडाशनिर्वृत्तिरूपे**तिकर्त्तव्यता, **तामपेक्ष्यैकदेशशब्दः।**

**केचित् पुनरन्यथैकदेशशब्दो** [2]**व्याख्यातः।** यद्यप्यलौकिकभाव्याभावेन **कथंभावाभावात् प्राकरणिकीतिकर्त्तव्यता नास्ति,** तथाप्याहवनीयादिवाक्यात् [3]**प्रापितास्त्येव, तामपेक्ष्यैकदेशशब्द** इति। **एतदप्यनन्तरव्याख्यानमनुपपन्नम्।** कथम्? **अपूर्वप्रयुक्तत्वादाहवनीयादीनाम्।** श्रुतिविनियोगोऽपि हि अपूर्वगर्भ एवेति "द्रव्यसंख्याहेतुसमुदायं वा" इत्यत्र वक्ष्यते। **न चेहापूर्वमस्तीत्युक्तम्। तस्मादग्निमुद्दिश्यामावास्यायां पुरोडाशस्त्यक्तव्य इत्येतावदुपदिश्यते।** अग्न्यादिविशिष्टमेव हि कर्मोत्पन्नम्। यथोत्पन्नमेव च निमित्ते विधीयते। तेनाग्निकालपुरोडाशमात्रमङ्गमादर्तव्यम्। अन्यत्तु वाक्यविहितमप्यनादर्तव्यमिति। **कथं तर्हीदृशे** निष्फले **पुरुषप्रवृत्तिः।** उत्तरम्—**प्रत्यवा-**

---

१. परिहरति—ख० नास्ति।

२. वर्णितः—क० ग०।

३. 'प्रापितमितिकर्तव्यात्तं नास्तीत्यर्थः पितमस्त्येव' अधिकं—ग०।

**यानुत्पत्त्यर्था** प्रवृत्तिः, न तु फलार्था। **विहिताकरणाद्धि प्रत्यवायः स्मर्यते**—"अकुर्वन् विहितं कर्म प्रायश्चित्तीयते नरः" इति। दोषनिर्हरणार्थं हि प्रायश्चित्तं विधीयते, "चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये" इति वचनात्। तच्च विहिताकरणे विदधद्विहिताकरणस्य दोषहेतुतां दर्शयति। तत्परिहाराय विहितस्यानुष्ठानमिति। किं पुनरेतावन्मात्रार्था प्रवृत्तिर्युक्ता? तत्राह—**पुरुषेण च हितप्राप्तिर्यथेष्यते, अहितनिवृत्तिरपि तथेष्यते। यथा लोक उपानद्धारणादिका[१] क्रिया कण्टकपरिहारार्था, एवमिहापि प्रत्यवायपरिहारार्था** प्रवृत्तिर्युक्तैव। **नन्वेवमप्रत्यवायः फलं स्यात्**। ततश्च निष्फलत्वप्रतिज्ञासंन्यासः स्यादिति? **उच्यते। फलं तावत् सर्वत्र भाव एव**। भवतीति भावः भवतेरौरसंख्यानिकः कर्तरि णप्रत्ययः। भवत्यर्थस्य कर्तुरेव हि भाव्यत्वं नान्यस्येत्यर्थः। ततः किमित्याह—**अप्रत्यवायश्च** प्रत्यवायप्रागभावः। प्रागभावश्चाभावो न तु भवनकर्ता, स्वयं सिद्धत्वात्। अतः **कथमसौ क्रियाया भावनायाः फलं स्यात्**। अतो न प्रतिज्ञासंन्यासदोषापत्तिरिति। **आगामिनी प्रत्यवायानुत्पत्तिः फलं स्यादिति यद्युच्येत**। यद्यपि प्रत्यवायानुत्पत्तिर्न स्वरूपेण क्रियाफलम्, तथापि विहिताकरणात् प्रत्यवायोत्पत्त्या[२] तदनुत्पत्तिर्निरवस्यति, विहितकरणे तु सत्यनुत्पत्तिरेव शाश्वती भवति। तेन प्रत्यवायानुत्पत्तिरागामिकालसम्बन्धिना रूपेण क्रियासम्पाद्यत्वात् फलं भवतीति [३]भावः। परस्तूपपत्तिमङ्गीकृत्य शास्त्रस्य नैवंपरता सम्भवतीत्येवमाह—**तन्न। नह्यकरणमात्रात् प्रत्यवायः। किं तर्हि? विहिताकरणात्**। "अकुर्वन् विहितं कर्म" इति वचनात्। ततः किमित्यत आह—**तत्रायमेव विधिः प्रत्यवायानुत्पत्त्यर्थः,** अस्य **वा[चा]करणात्**[1] **प्रत्यवाय इतीतरेतराश्रयता** प्राप्नोति। विधि-

---

1. 'कृत्स्नस्य चाकरणात्' इति पु० मु० पाठः।

१. 'आदिका' नास्ति—क०।

२. 'उत्पत्त्या' इत्यतः 'अनुत्पत्तिः' इत्यन्तं वारद्वयं लिखितं—ख०पुस्तके।

३. 'भावः' इत्यतः 'अकरणमात्रात्' इत्यन्तः पाठो नास्ति—ख०।

[1]विशिष्टकर्मातिक्रमो हि प्रत्यवायहेतुर्न कर्मस्वरूपमात्रातिक्रमः, "अकुर्वन् विहितं कर्म" इति स्मरणात्। ततश्च पूर्वसिद्धे विधौ तद्विशिष्टकर्मातिक्रमात् प्रत्यवायेनोत्पत्तव्यम्। प्रसक्तप्रत्यवायपरिहाराय च विधिरितीतरेतराश्रयमिति। **तस्मात् प्रत्यवायानुत्पत्तिः फलमिति नैवंपरा चोदना। कथं तर्हि प्रत्यवायो भवति? क्रियाया अकरणात्। अकरणं तु करणनिवृत्तिः।** तेनाकरणाद्दोषो यः स करणे सति कारणनिवृत्त्या **निवर्तते** नोत्पद्यते।

**नन्वेवमपि** प्रत्यवायहेतुभूताकरण**निवृत्तिरेव** करणस्य **फलं स्यात्।** ततश्च पुनरपि निष्फलत्वव्याघात[2] इति। **उच्यते। आत्मव्यतिरेकेण हि क्रियायाः फलं** भवति। ततः किमित्यत आह—अकरणनिवृत्तिश्च करणमेव नान्यत्, [1]"नाभावोऽभावमृच्छति। अपोह्यमाने चाभावे भाव [3]एवावशिष्यते" इति न्यायात्। तथापि किमित्यत आह—**स च क्रियाया** एव **धर्मस्तदात्मा कथं** क्रियायाः **फलं स्यात्,** साध्यं हि फलं भवति। करण चानुष्ठानं न तत्साध्यम्। अतः कथं फलमिति। यदि तु मा भूदकरणनिवृत्तिः फलम् क्रियास्वरूपत्वात्। प्रत्यवायनिवृत्तिस्तु फलमस्तु। सा हि क्रियाव्यतिरेकिणीति तत्राह—**न च प्रत्यवायाभावः फलमित्युक्तमेवाधस्तात्।** किञ्च, **यदि चाप्रत्यवायः फलं स्यात्** ततः **फलनिमित्तयोर्द्वयोरप्युद्देश्यत्वाद् एकत्राभावादिदोष उक्त** एव प्राक्। अतो नित्यस्य कर्मणो निष्फलत्वेनापूर्वाभावादितिकर्तव्यता नास्तीति हीनाङ्गस्य प्रयोग **इति केचिद् एवमेवाधिकरणसिद्धान्तं वर्णयन्ति।**

---

1. नाभाव इति। विहितस्याकरणमनुष्ठानाभावः। स अभावः, निःस्वरूपत्वाद् अभावं न ऋच्छति न प्राप्नोति, द्वितीयाभावोऽतिरिक्तो नोपेयः इत्यर्थः। अतश्च यत्राभावोऽपोह्यते, तत्र भावः प्रतियोग्येवावशिष्यते। द्वितीयाभावः प्रतियोगिस्वरूप एव पर्यवस्यतीति भावः।

१. विशिष्टाति–क०।

२. व्यपात–ख०।

३. विशिष्यते–ख०।

एतदिदानीं दूषयितुमारभते—तदेकदेशिमतं **नोपपद्यते**। **कथम्? भावनातो हि तिस्र आकाङ्क्षा उत्पद्यन्ते—किं केन कथमिति। तन्निमित्ता चेतिकर्तव्यता**। तदित्यानन्तर्यात् कथमाकाङ्क्षा प्रत्यवमृष्य[ श्य ]ते। कथमाकाङ्क्षानिमित्ता हि काम्येऽपीतिकर्तव्यता। **सा** चाकाङ्क्षा **इहापि** नित्ये कर्मणि **विद्यते**। **तस्मादस्तीतिकर्तव्यता**। यद्युच्येत सत्यमस्त्येवेहाप्याकाङ्क्षात्रयम। तथापि किमाकाङ्क्षायाः समानपदोपात्तेन यागेनैव पूरणात् तन्निर्वृत्त्युपयोगिन्येवेतिकर्तव्यता कथमाकाङ्क्षया गृह्यते, न त्वदृष्टोपयोगि प्रयाजाद्यङ्गमादर्तव्यम्। अदृष्टस्य साध्यस्याभावादिति, तत्राह—**यदि चास्मिन्** नित्ये **यागेन** किमाकाङ्क्षा **पूर्यते पशुकामादिष्वपि** तत्। ततो न **साधनत्वेन स भविष्यति। साध्यत्वेनैव तु स्यात्**। ततश्च तत्रापीतिकर्तव्यता न स्यादिति भावः। **तत्र** कामसंयुक्तेषु वाक्येषु **निमित्ताभावात्** फलोद्देशेनैव कर्मविधानम्। निमित्ते तु सति तदुद्देशेनैव विधीयमानस्य फलोद्देशेनापि विधिर्न सम्भवतीति कर्मैव कर्तव्यतया विधीयत **इति चेत्? तन्न, असत्यपि तस्मिन्निमित्ते किमित्याकाङ्क्षोत्पत्तेर्यागेनैव** च समानपदोपात्तेन किमाकाङ्क्षा**परिपूरणाद् न फलान्तर**मपेक्षितम्। अथ विधिवशान्न यागस्य भाव्यत्वम्, तन्नैमित्तिकेऽपि समानमिति भावः। चोदयति—**फलनिमित्तयोर्विरोध इति चेत्?** विधिवशात् सर्वत्र पुरुषार्थात्मकं फलमपेक्षितमपि नैमित्तिकेषूद्देश्यद्वयासम्भवान्न गृह्यते; काम्येषु त्वविरोधात् फलस्यैव भाव्यत्वमिति। उत्तरम्—**अविरोधो भिन्नवाक्यत्वात्**। एकवाक्यसमवायो हि[1] फलनिमित्तयोर्विरुध्यते। अत्र चान्यदेव हि "यावज्जीवमग्निहोत्रं जुहोति" इति वाक्यं निमित्ते कर्म विधत्ते। अन्यच्च श्रुतार्थापत्तिकल्पितं वाक्यं फले विधत्ते। अतो नास्ति विरोधः। एतच्चाभ्युपेत्यवादमात्रम्। श्रुतार्थापत्तिर्हि यथाविधेन कल्पितेन श्रुतमुपपद्यते तथाविधमेव कल्पयति। तद्यदि फलनिमित्तयोरेकवाक्यसमवायविरोधात् श्रुतवाक्यैकदेशतया फलपदं न कल्पयितुं शक्यते; तथा सति कामं वाक्यान्तरमेव कल्प्यतामिति भावः। परमार्थतस्तु

1. 'हि' नास्ति—क०।

नास्त्येव विरोधो भिन्नप्रकारत्वादनयोरित्याह—**निमित्तं हि कर्म प्रयुङ्क्ते न कामार्थतां व्यावर्तयति**। निमित्तस्य हि न कर्मस्वरूपेण सम्बन्धः, किन्तु तत्कर्तव्यतया अस्मिन् सतीदं कर्तव्यमिति। इदमेव चास्य कर्म प्रति प्रयोजकत्वं यत्कर्तव्यतां प्रति निमित्तत्वम्। तेनोच्यते निमित्तं कर्म प्रयुङ्क्ते इति। फलं तु कर्मस्वरूपेण सम्बध्यमानं न निमित्तेन शक्यं व्यावर्तयितुमिति। तदेव व्यनक्ति-**नहि कर्मणा निमित्तं जन्यते, येन फलोत्पत्तिर्न स्यात्**। निमित्तमपि यदि फलवत्कर्मजन्यं स्यात्, ततो द्वयोरप्येकप्रकारसम्बन्धाद् विरोधः स्यात्; न त्वेतदस्तीति। प्रत्युत **तस्मिन्निमित्ते कर्म क्रियमाणं किंप्रयोजनमिति सुतरां फलाभिमुखं भवति**। निमित्ताभावे ह्यावश्यकत्वानवगमात् कदाचिन्निष्फलतापि शङ्क्येत। सति तु निमित्तेऽवश्यकर्तव्यता कथञ्चिन्निष्फलस्य न घटेत इति सुतरामित्युक्तम्। अतश्च निमित्तबलादेवापेक्ष्यमाणं फलं कथं तेन विरुध्येतेति भावः।

**फलं न कामयत इति** चेत्? मोक्षार्थी हि फलं नापेक्षते। ततस्तस्य निष्फलमेव कर्म। ततश्चावैरूप्यात् सर्वेषां निष्फलमेवेति। **उच्यते। नहीदृशः पुरुषोऽस्ति योऽवश्यकर्तव्ये फलं न कामयते। मोक्षार्थीति चेत्, तन्न। तेनाप्यवश्यं पापक्षय एषितव्यः**। स्वर्गफलत्वे हि मोक्षविरोधः स्यात्। नैमित्तिकस्य तु सर्वेषां सर्वदापेक्षितः पापक्षय एवावश्यकर्तव्यत्वबलेन फलं कल्प्यते। स मुमुक्षोरप्यपेक्षितः। कथम्? **तस्मिन्** पापे तज्जन्मोपार्जिते भवान्तरोपार्जिते [1]वावस्थिते **सति** तदुपभोगहेतुभूतशरीरा[2]रम्भावश्यम्भावेन **मोक्षाभावात्**। अतो **मोक्षार्थिनाप्यवश्यमसौ** पापक्षय **एषितव्य** एव समीहित**फलाय**। **इतरथा**प्रक्षीणे पापे **फलाप्राप्तेः**, "परत्र चासिद्धिः" इत्यादिवचनात्, स्वयमेव च पापस्य त्रिविधनरकतिर्यग्योनिफलतया दूरक्षेप्यत्वात्। **तस्मान्नित्यानि कर्माणि तस्य** पापक्षयस्योपायत्वेन **चोद्यमानानीतिकर्त-**

---

१. चा-क०।

२. रम्भादव-क०।

**व्यतामपेक्षन्ते,** फलाभावे हीतिकर्तव्यता न स्यात्। फलवत्त्वे तु किमिति सा न भवतीति।

ननु वीतायामपि फलेच्छायामवश्यकर्तव्यं कर्मेत्यप्यधस्तादुक्तम्। न च तत्र फलं सम्भवति, वीतत्वात् फलेच्छायाः। तद्वदन्यत्राप्यावश्यके फलं न स्यात्। अत आह—**वीतायां च फलेच्छायां कर्मण इदमेव फलम्।** स्वर्गादिफलेच्छायां वीतायामपि पापक्षयोऽपेक्षित इति तत्राप्यस्त्येव फलमिति।

ननु नैमित्तिके यागस्यैव समानपदोपात्तस्य भाव्यत्वात् कथं फलस्य भाव्यता। अत आह—**यदि च नित्ये श्रुत्यनुग्रहाद्यागः कर्मभूतः, ततः सर्वत्राविशिष्टः श्रुत्यनुग्रह इति सर्वत्र** काम्येऽपि **कस्माद्**यागः कर्मभूतो **न भवति**। चोदयति—**फलपदानर्थक्यप्रसङ्गात्तु** यागः कर्मभूतो **न भविष्यतीति**। निराकरोति—**साधनत्वेन** स्वर्गकामाधिकरणपूर्वपक्षन्यायेन **तस्योपनिपातादिति**। किञ्च, **यदि च क्रिया स्वशक्त्या स्वतोऽन्यत् किञ्चिदुत्पादयति, ततस्तदेव वेदेनाप्युत्पाद्यतया** चोद्यते। **नह्यशकनीयं** वस्तु **स वेद उत्पाद्यत्वेन चोदयति।** तेन क्रियास्वाभाव्यादेवान्योत्पादकताङ्गीकर्तव्या। नित्येऽप्यश्रुतमपि फलं कल्प्यमिति। एतच्चान्वाचयेनोक्तम्। विधिबलात्तु सर्वत्रैवास्ति फलमिति एषैव मूलयुक्तिः। सा च पश्चाद्वक्ष्यत इति। अत्र पूर्वोक्तं चोद्यमनुभाषते—**ज्योतिष्टोमस्य सकृत्प्रयोगे सर्वफलप्राप्तिरिति।** क्रियास्वाभाव्येन हि फलेऽभ्युपगम्यमाने "सर्वेभ्यो ज्योतिष्टोमः" इत्यनेन सर्वत्र शक्तिरवगतेति सकृदेव सर्वप्राप्तिः स्यादिति। **उच्यते। पच्यादीनां क्रियाणां द्वौ धर्मौ दृष्टौ—एकस्मिन् प्रयोगे एकफलता नियतफलता च।** तत्र **ज्योतिष्टोमस्य फलचोदनाभिः** सर्वेभ्यो ज्योतिष्टोम इत्यादिभिर्लोकदृष्टक्रियास्वभावभूतनियतैकफलत्वबाधेना**नियतफलता विहिता। एकस्मिन् प्रयोगे त्वेकफलता** क्रियास्वभावत्वेन लोके **दृष्टा केन वार्यते?** नहि सर्वेभ्यो ज्योतिष्टोम इत्यनेन फलानां साहित्यमुक्तम्, उद्देश्यसाहित्यस्याविवक्षितत्वादित्युक्तम्। अतः क्रियाशक्त्यैव सकृत्प्रयोगे न सर्वफलावाप्तिरिति। नन्वकरणनिमित्तप्रत्यवायकल्पनयापि

विध्युपपत्तेः कथमेकान्ततः क्रियायाः फलवत्त्वमत आह—**यदि च फलं नास्ति** ततो "दर्शपूर्णमासाभ्यां यजेत" इत्यत्र **करणविभक्तीतरेतरयोगात्मनेपदाना-मभावप्रसङ्गः**। नह्यसति फले करणत्वं घटते । नापीतरेतरयोगः, कार्यापेक्षितत्वात्[क्षित्वात्] इतरेतरयोगस्य । तथात्मनेपदमपि क्रियाफलस्य कर्तृगामित्वं बोधयदसति क्रियाफलेऽनुपपन्नमेव । अपि च श्रुतस्य वस्तुरूपस्य चानुष्ठानस्य फले सम्भवत्यश्रुतस्यावस्तुरूपस्य चाकरणस्य फलमिति[1] गुर्वयुक्तं च किमिति कल्प्यते । धर्मशास्त्रे च यथैवाकरणे प्रत्यवायः [2]स्मृतः, तथैवाक[व क]रणादपि पापक्षयः स्मर्यत एव "पूर्वां सन्ध्यां जपंस्तिष्ठेन्नैशमेनो व्यपोहति" इत्यादिभिः। तस्मादस्ति नित्येऽपि विधिकरणविभक्त्यादिवशात् फलम् । अकरणादपि कामं प्रत्यवायोऽस्तु स्मृतिप्रामाण्यात् । एतन्न निवारयामः । फलं तावदस्तीति सिद्धम् । **यदि च** नैमित्तिके कर्मभूत एव धात्वर्थो न फलमपेक्षते, ततो **"भिन्ने जुहोति" इति** होमस्य **निराकाङ्क्षत्वात् क्रतुसम्बन्धो न स्यात्**। ननु पुरुषार्थानामेव नैमित्तिकानां निष्फलता, भेदनहोमस्य तु नैमित्तिकस्यापि प्रकरणेन क्रतुसम्बन्धः स्यादेवात आह—**आकाङ्क्षोत्तरकालं हि क्रत्वर्थता पुरुषार्थता वा**। नहि प्रकरण[णं] निराकाङ्क्षं होमं क्रतुना सम्बन्धुमीष्टे । **न च भवत्पक्षे** भेदनहोमस्य प्रयोजनाकाङ्क्षास्ति, **निमित्ते श्रुतत्वात्**। अथ क्रतुप्रकरणादेवाकाङ्क्षा [3]उत्थाप्यते ? अत आह—**नह्याकाङ्क्षा जन्यते क्रतुना**। किं तर्हि ? साकाङ्क्षं सत्केवलं विनियुज्यते । तस्माद्भेदनहोमस्य न क्रत्वर्थतासिद्धिः । किञ्च, **यदुक्तं** भवता **फलनिमित्तयोरनुपादानादनुपादेयत्वान्नैकत्र समवायः** सम्भवतीति, **"भिन्ने जुहोति" इत्यनेनैतत्तुल्यम्**। भेदनहोमेऽपि तुल्यं चोद्यमित्यर्थः । तेन **यथैतत् क्रतुं प्रत्युपादीयते निमित्तं च, एवमिदम-**

---

१. मतिगुर्व—क० ।

२. 'स्मृतः' नास्ति—क० ।

३. उत्पाद्यते—क० ।

ण्यग्निहोत्रादि फलनिमित्तयोरुपादीयमानं न दुष्यति। **यथा च त्वत्पक्षे पिण्डपितृयज्ञोऽमावास्यामपराह्णं** च प्रत्युपादीयते कालद्वयस्याप्युद्देश्यत्वात्, **एवमिदमपि** अग्निहोत्रादि। तस्मादुभयत्रोपादानं न दोषः। **भाष्यकारश्च** निमित्तसंयोगे **फलमिच्छति "प्रधानादिदमन्यत् फलम्"** **"एकदेशाङ्गयुक्तादेव प्रधानात् फलं भविष्यति" इति वदन्। तथा पिण्डपितृयज्ञे पुत्रकामेष्ट्यां च** निमित्ते सत्यपि फलमिच्छति। विश्वजिदधिकरणे हि पिण्डपितृयज्ञस्य फलवत्त्वं दर्शितम्। तथा जातेष्टेरपि फलवत्त्वाङ्गीकरणेन पितृगामित्वं पुत्रगामित्वं वा फलस्येति विचारितम्। पुत्रकामेष्टिरिति च जातेष्टिमेव व्यपदिशति।

तथा **सूत्रकारोऽपि नित्य इतिकर्त्तव्यतामिच्छति** "एकस्यापि प्रयोगे स्यात्" इति वदन्। तथा नवमेऽन्वारम्भणीया यावज्जीविके प्रयोगे प्रतिप्रयोगमावर्तेत इत्यत्र **प्रयाजवदिति दृष्टान्तोपादानात् सिद्धवदङ्गत्वं दर्शयति। कर्तव्यतावचनश्च** विधिशब्दः **पुरुषार्थतां न व्यभिचरति। नहि फलमन्तरेण पुरुषः प्रवर्तते।** यत्त्वेवं प्रयाजादीनामपि पुरुषार्थत्वाद्दर्शाद्यनङ्गत्वं स्यादित्युक्तम्, तत्राह—**केषुचित्साक्षाद्** दर्शपूर्णमासादिषु, **केषुचित्तु** प्रयाजादिषु प्रकरणात् क्रत्वर्थत्वावगमात् तद्द्वारेण **पारम्पर्येण** फलमित्येतावत्, न तु क्वचिदपि निष्फलो विधिरस्तीति। **यदि** चाश्रुते फले **धात्वर्थः करणतां जह्यात्**[1], किन्तु कर्मैव स्यात्, ततः **प्रयाजादीनामङ्गत्वं न स्यात्।** कुतः? **कर्मभूतत्वाद्धि** प्रयाजादि**नैतद्** वक्ष्यमाण**मपेक्षते, किं मया कर्त्तव्यमिति।** नहि कर्तव्यं कर्तव्यान्तरमपेक्षते समत्वात्। **अनपेक्षमाणश्च कथमितिकर्तव्यतया** क्रतुना **सम्बध्येत।** तस्मान्नाङ्गत्वसिद्धिः। अनेनैव च न्यायेन येऽपि फलानपेक्षं

---

1. 'करणतां जह्यात्' इति वाक्यार्थेन तुल्यवित्तिवेद्यः 'करणं न स्यात्' इत्येवंरूपोऽर्थः। तमपेक्ष्य शेषपूरणमिदं 'किन्तु कर्मैव स्यात्' इति। अतो नान्वयक्लेशः।

प्रधानभूतं कार्यं विध्यर्थमाहुः, तेषामपि मते प्रयाजादीनामङ्गत्वं निरस्तं वेदितव्यम्। नहि प्रयाजविषयं कार्यं कार्यान्तरमपेक्षते स्वयमेव कार्यत्वात्। अतो न तत्राधिकारापूर्वेदमर्थ्यं सिध्येत्। "संशयिते सति प्रत्ययार्थे प्रकृत्यर्थमात्रमधिकारविधिना स्वीक्रियते" इत्यादि तु प्रलापमात्रं श्रद्धाविप्रलब्धबुद्धीनामेव मनो हरति, न तु प्रामाणिकानामिति न्यायरत्नमालायां निर्णीतम्[1]। सप्तमाद्ये च वक्ष्याम इत्यास्तां तावत्।

**यदि च यत्र फलपदमस्ति तत्रैव धात्वर्थः करणभूतोऽन्यत्र तु** कर्मभूतः स्यात्, तत **उत्पत्तिवाक्ये** फलश्रवणाभावेन **धात्वर्थस्य कर्मभूतत्वात् स्वर्गस्य च**[2] **प्रयोगवाक्ये,** कर्मत्वादित्यनुषङ्गः, द्वयोरपि **कर्मत्वेन** समत्वात् **सम्बन्धो नास्ति। एवञ्च** फलवाक्ये **कर्मान्तरत्वप्रसङ्गः।** ततश्च "सन्निधौ त्वविभागात्" इति न्यायः प्रत्युद्ध्रियेत। **करणत्वे तु नैष दोषो** भवति। **तस्माद्यत्र यत्र विधायकः, तत्र तत्र** धात्वर्थस्य **करणताभ्युपगन्तव्या। नित्येऽपि चासौ विधिर्विद्यते।** तस्मात्तत्रापि करणभूत एव धात्वर्थ इत्यस्त्येव फलम्।

यत्त्वेवमुभयोरपि काम्यत्वान्नित्यकाम्यव्यपदेशानुपपत्तिरित्युक्तम्, तत्राह—**व्यपदेशश्च कर्तव्यत्वात्, अवश्यकर्तव्यत्वात्।** यत् क्रियमाणमवश्यमेव कर्तारमभिमतेन फलेन संयुनक्ति, तदवश्यकर्तव्यं नित्यमित्युच्यते। अन्यच्च काम्यमिति। फलार्थत्वे तु न विशेषः। तस्मान्नैमित्तिके इतिकर्तव्यतापह्नवेन सिद्धान्तयितुं न शक्यते। कथं तर्हि सिद्धान्तः? तं दर्शयति—**एवञ्च** यदा नेतिकर्तव्यताभावः शक्यते वक्तुम्, तदा **साङ्गं** सम्पूर्णाङ्गं **यावज्जीवम्,** निमित्तोपलक्षणार्थं जीवनग्रहणम्, यावन्निमित्तमित्यर्थः। **न शक्नोति कश्चिदपि**

---

१. **वर्णितम्—ख० ग०।**

२. **'च' नास्ति—क०।**

कर्तुमिति कृत्वा यावच्छक्नुयादित्युपबध्यते । यावज्जीवमिति तावद् यावच्छब्दो जीवनं सामस्त्येन विशिनष्टि । तच्च तथाविधधातुसम्बन्धविहितेन णमुल्प्रत्ययेन होमान्वयि प्रतीयते । स चान्वयो यदि जीवनस्य होमस्य च निमित्तनैमित्तिकभावः स्यात् , ततो यावन्निमित्तं नैमित्तिकानुष्ठानात् प्राप्तो यावच्छब्दार्थोऽनुवदितुं लभ्यते । अथ त्वन्वयान्तरमङ्गाङ्गिभावादि जीवनहोमयोः स्यात् , ततो जीवनस्याप्रयोजकत्वान्नावश्यं सति जीवने होतव्यमिति यावच्छब्दार्थः प्राप्त्यभावान्नानुवदितुं शक्यते । न च विधातुमपि शक्यते, जीवनानामयुगपत्कालत्वेन तत्सामस्त्यस्य कर्मणि विधानासम्भवात् । तेन यावच्छब्द एव स्वार्थसमवायाय सम्बन्धसामान्यवाचिनमपि णमुल्प्रत्ययं निमित्तनैमित्तिकभावाख्ये विशेषे व्यवस्थापयतीति णमुल्श्रुत्या सप्तमीश्रुत्येव निमित्तत्वमभिधीयते । सप्तम्यपि हि भावलक्षणे विहिता तन्मात्रमेव श्रुत्याभिधत्ते न निमित्तताम् । कर्तव्यरूपं तु भावं प्रति लक्षणत्वं निमित्तत्वे सति घटते, नान्यथेत्यर्थान्निमित्तत्वम् । एवमिहापि यावच्छब्दबलादेव णमुल्प्रत्ययो निमित्तत्वपरो भवतीति जीवनस्य तावन्निमित्तत्वं सिद्धम् ।

तेन यत् केनचिदुच्यते जातेष्टौ सप्तमीश्रुत्या निमित्तत्वाव[व]गमाद्युक्तं यत्‌निमित्तबलेन यथाशक्ति प्रयोग इति । दर्शपूर्णमासादिषु निमित्ताभिधायिशब्दाभावाद् न्यायान्तरं मृग्यमिति, तदपहस्तितम् । यदपि चात्र न्यायान्तरमुक्तं नैजं सामर्थ्यमधिकारिविशेषणम् । तच्च केनचित् प्रतिबन्धेन कतिपयाङ्गासम्भवेऽप्यनपेतमित्यधिकारानपायाद् यथाशक्ति प्रयोग इति । तदयुक्तम् । एवं हि काम्येऽपि यथाशक्ति प्रयोगः स्यात् । तत्रापि [1]हि नैजमेव सामर्थ्यमधिकारिविशेषणं भवत्पक्षे, न त्वप्रतिबद्धम् । सत्यपि तत्र सामर्थ्ये विषयविलयादधिकारविलयः । काम्येषु हि फलकरणीभूतो धात्वर्थो नियोगस्य विषयः । सकलाङ्गग्रामसम्पादितोपकारस्य च करणता । तेनाङ्गलेशेऽप्यसम्भवति विषयविलयादधिकारविलय इति नाधिकारबलेन यथाशक्ति प्रयोग इति । एतत्तु स्वप्रक्रियया न्यायेन च विरुद्धमनादर्तव्यमिति

---

१. 'हि' नास्ति—क० ।

न्यायरत्नमालायामेव क्षुण्णम् । अथ न नियोगं प्रति विषयत्वं साधनीभूतस्योच्यते, किन्त्वधिकारमैश्वर्यलक्षणं प्रति । नह्यकामसाधने कर्मणि कामिनोऽधिकारः सम्भवतीति । तन्नैमित्तिकेऽपि समानम् । निमित्तवतोऽपि हि न स्वकार्यसाधनादन्यत्राधिकारसम्भवः । साधनता चाङ्गयुक्तस्यैवेत्यङ्गत्यागे विषयविलयादधिकारविलयान्नाधिकारबलेनाङ्गत्यागः सिद्ध्येत् । तस्माज्जातेष्टिवदत्रापि निमित्तबलेन यथाशक्ति प्रयोगः । निमित्ते हि नैमित्तिकमवश्यं कर्तव्यं प्रधानवाक्ये प्रतीयते । तद्यदि कस्यचिदङ्गस्यानुरोधेन सत्यपि निमित्ते नैमित्तिकं न क्रियते, ततः प्रधानवाक्यविरोधः स्यात् । [1]तस्मात् प्रधानानुरोधेनाङ्गानि यथाशक्त्युपसंहर्तव्यानीति ।

नन्वेवं हीनाङ्गादपि प्रधानात् फलसिद्धेरभ्युपगमात् समर्थोऽपि नाङ्गमाद्रियेत । अत आह—**शक्तस्य सतः कामतोऽङ्गे** त्यज्यमाने **वैगुण्यं स्यात्** । अङ्गोपदेशं निमित्तं चालोच्योभयानुरोधेन यावन्त्यङ्गानि सम्पादयितुं पारयति, तावद्भिरुपेतं प्रधानमेनः क्षपयतीति शास्त्रार्थोऽवधार्यते । तेन सत्यां शक्तौ यद्यङ्गं त्यज्यते, ततो विगुणं प्रधानं फलसिद्ध्ये न पर्याप्नोतीति । यदि च प्रधान[2]वाक्यबलेन यथाशक्त्यङ्गोपसंहारः, तर्हि काम्येष्वपि प्रधानवाक्ये प्रजाकामादिमात्रस्याधिकारावगमात् तद्बलेनाङ्गानां यथाशक्त्युपसंहारः स्यात्, अत आह—**काम्ये तु यदा** सम्पूर्णाङ्गं **शक्नुयात्** कर्तुं **तदैव प्रवर्तते,** न तु यथाशक्ति । नहि तत्राङ्गत्यागे प्रमाणमस्ति, प्रधानवाक्यस्य सर्वाङ्गोपसंहारेऽप्य-[3]विरोधात् । नहि तस्यावश्यकर्तव्यत्वं केनचिदुक्तम्, यत औदासीन्यं न लभते । कामश्रुतिस्तु समर्थेऽपि वर्तमाना न श्रुत्यर्थतां जहातीति नाङ्गत्यागाय प्रभवतीति । निमित्तश्रुतिस्तु निमित्ते सत्यक्रियमाणे नैमित्तिके पीड्येतेति वैषम्यम् । यत्तु भाष्यकारेण साङ्गस्य वाचको दर्शपूर्णमासशब्द इति पूर्वपक्षमभिधाय प्रधान-

१. 'तस्मात्' नास्ति—क० ।

२. 'वाक्य' नास्ति—क० ।

३. 'अधिकार' अधिकं—क० ।

मात्राभिधायीति सिद्धान्तितम्; तस्य किं प्रयोजनम् ? यावता प्रधानमात्रवाचित्वेऽपि काम्यवत्सर्वाङ्गोपसंहार इति शक्यत एव पूर्वपक्षयितुम्। तस्मात्तदुपन्यासो निरासश्चानर्थकः। उच्यते—पूर्वपक्षवादी हि प्रधानवाक्यगतावश्यकर्तव्यताविरोधेन सकलाङ्गोपसंहारं वक्तुमशक्यं मन्वानः सकलाङ्गसहितस्यैव वाचकः शब्दः। कालयोगनिमित्तो ह्यसौ। साङ्गस्यैव च पौर्णमास्या यजेतेत्यादिवाक्यैः कालो विहितः। [1]अतः साङ्गमेव श्रुत्या निमित्ते विधीयत इति तादृशमेव कर्तव्यं न विकलाङ्गम्, अविधेयत्वात्। तेन यथा प्रधानपरित्यागेनानुष्ठानं न लभ्यते तथा तच्छब्दत्वाविशेषान्नाङ्गमपि हातुं शक्यमित्याह। सिद्धान्तवादी तु—सत्यं कालापेक्षोऽसौ शब्दः, न तु प्रयोगवाक्यविहितकालापेक्षः, पौर्णमासीसंज्ञकस्य सतस्तत्रोपादानात्। [2]अत उत्पत्तिवाक्यविहितकालयोगनिमित्तोऽयं शब्दः प्रधानमात्राभिधायी। तेन प्रधानमात्रं श्रुत्या निमित्ते विधीयते। अङ्गानि तदर्थतया प्रकरणेन गृह्यन्ते। अतस्तानि प्रधानवाक्यावगतावश्यकत्वानुरोधेन यथाशक्त्युपसंहर्तव्यानि। इतरथा हि प्रधानस्यावश्यकर्तव्यत्वं श्रुतं हीयेत। अतो न सर्वाङ्गोपसंहार इति सिद्धान्तितवान् ॥२॥

## प्रायश्चित्तविधानाच्च ॥ ७ ॥

भेद[3]नेन विगुणे प्रधाने फलाभावात् त्वत्पक्षे न नैमित्तिकाङ्गविधानं युज्यते। नहि निष्फलस्याङ्गैः कृत्यमस्ति। तस्माद्विगुणादपि फलमिति। इदं च प्रायश्चित्तविधानमेकदेशिनां नैमित्तिकस्याङ्गमनिच्छतामनुपपन्नमित्याह—**येषां** [4]**मते नैमित्तिकस्येतिकर्तव्यता नास्ति, तेषां प्रायश्चित्तविधानमत्यन्तानुपपन्नम्।** अस्मत्पक्षे तूपपन्नमित्याह—**सेतिकर्तव्यताके तु नैमित्तिके** सति निमित्ते

---

१. 'अतः' नास्ति–क॰।

२. 'अतः' नास्ति–क॰।

३. भेदने–ख॰।

४. 'मते' नास्ति–क॰।

भेदने सञ्जाते वैगुण्यात्तत्परिहारायापरं होमाख्यमङ्गमुपजायते। तत्तु क्रियत एव। त्वत्पक्षे त्वसत्यामितिकर्तव्यतायां भेदने उपजातेऽपि वैगुण्यं नास्ति। गुणहानिर्हि वैगुण्यम्। असति गुणे [1]कस्य हानिः स्यात्। तस्मात् प्रायश्चित्तदर्शनं सर्वथानुपपन्नमिति ॥ ७ ॥

( २-काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैवाधिकाराधिकरणम् )

## काम्येषु चैवमर्थित्वात् ॥ ८ ॥ पू०

प्रकृतावपि सम्भवत्येव काम्यस्य प्रयोगस्य विषयत्वम्। ऐकान्तिककाम्यत्वात्तु विकृतय उदाहृताः। इदं चाधिकरणं वैषम्यप्रदर्शनप्रसङ्गात् पूर्वमेव व्याख्यातमिति पुनर्न व्याख्यायते ॥ ८ ॥

( ३-द्रव्यभेदेऽपि यागाभेदाधिकरणम् )

## क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् ॥११॥ पू०

अतः प्रभृत्यापादसमाप्तेर्यथाशक्तिप्रयोगगतविशेषचिन्ता। पूर्वाधिकरणं तु यथाशक्तिप्रयोगस्यैवातिप्रसङ्गनिवृत्त्यर्थतया शेषभूतमिति न तेन तदधिकारविच्छेदः शङ्कितव्यः। तत्र प्रतिनिधिविचारोपोद्घातत्वेनेदं विचार्यते—किं द्रव्यान्तरे क्रियाणामन्यत्वं भवति, उत तत्त्वमेवेति। तत्र द्रव्यस्वभावभूता क्रिया तद्भेदे कथं न भिद्येत। अतो व्रीह्यभावे नीवारैः क्रियमाणस्य तत्त्वाभावान्न प्रतिनिध्युपादानं युक्तमिति पूर्वः पक्षः ॥११॥ सिद्धान्तमाह—

## अपि वाव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥ सि०

दर्शपूर्णमासौ यथा कालान्तरदेशान्तरपुरुषान्तरेषु क्रियमाणौ नातिरिच्येते, न चापि न्यूनौ भवतः; एवं द्रव्यान्तरेऽप्यन्यूनानतिरिक्तावेव

---

१. काम्य-क०।

तौ। [1]नहि तदात्मनोऽवश्यं तद्भेदे भेदः, जातेरिव व्यक्तिभेदे। तदनेनाव्यतिरेकादिति सूत्रपदं विवृतम्। रूपाविभागं विवृणोति—**न च द्रव्यान्तरेऽपि तावेव दर्शपूर्णमासावित्यस्य प्रत्ययस्य प्रत्यक्षावगतस्य बाधोऽस्ति।** कुतः? **शब्दान्तरादीनां** भेदकारणानामभावात्। **नहि नीवारैः क्रियमाणस्य शब्दान्तरादि**निमित्तो **भेदोऽ**वतरति, **येन तदेवेदमिति** प्रत्यभिज्ञा**प्रत्ययो बाध्येत।** शब्दाविभागं विवृणोति—**द्रव्यान्तरेणापि च क्रियमाणस्य दर्शपूर्णमासाद्यभिधेयतास्त्येव।** तथा हि—**यथा नैव चैत्रीप्रयोगाद् वैशाखीप्रयोगो भिद्यते। तेन** भेदाभावेन **तौ दर्शपूर्णमासाभिधेयतां न जहीतः, तथा तत्सामान्यात्** तत्तुल्यत्वाद् **नीवारैरपि क्रियमाणयोरस्त्येव** तदभिधेयता स्वरूपाभेदात्। चोदयति—**तस्यैव सामान्यं फले चोद्यत इति चेत्?** देशकालपुरुषभेदेऽपि भिन्नमेव कर्म। तेनासिद्धो दृष्टान्तः। भिन्नास्वेव कर्मव्यक्तिषु सामान्यं दर्शपूर्णमासपदाभिधेयं फलसाधनत्वेन चोद्यत इति सर्वासां फलवत्त्वमिति। तदयुक्तम्। **नहि सास्नादिवत्** सास्नादिभिरिव गोत्वं **सामान्यमात्राभिव्यज्यमानमुपलभ्यते,** व्यक्तिभेदे प्रमाणाभावात्, भेदबुद्धेराश्रयादिभेदादेवोपपद्यमानत्वात्, सन्ततानुपलब्धिश्च व्यञ्जकाभावात्। सर्वश्च शब्दनित्यत्वप्रयासः कर्मनित्यत्वेऽपि समानः। तच्च शब्दाधिकरण एव प्रपञ्चितमिति नेह [2]प्रपञ्च्यते। तस्मान्न सामान्यं फले विधीयते। **किं तर्हि? षडाग्नेयादयो व्यक्तिविशेषाः** "यदाग्नेयोऽष्टाकपालः" इत्यादिभिरुत्पन्नाः **फले विधीयन्ते। दर्शपूर्णमासशब्दवाच्याश्च व्यक्तय एव।** नन्वेवमेककर्मत्वे सत्याग्नेयादीनामपि मिथो भेदो न स्यादेव। अतः कथं षडाग्नेयादयो

---

1. नहीति। तत्तादात्म्यापन्नस्यार्थस्य तद्भेदे भेद इति नास्ति नियमः, व्यक्तितादात्म्यापन्नापि हि जातिर्व्यक्तिभेदेऽपि न भिद्यत इत्यर्थः।

१. 'पद' नास्ति—क०।

२. प्रतन्यते—ख० ग०।

व्यक्तयोऽभ्युपगम्यन्ते। नैष दोषः, तेषां शब्दान्तरादिभिर्भेदावगमात्। नहि तदेवैकं भिद्यते, यस्य प्रत्यक्षेणैव भेदोऽवगम्यते, शास्त्रस्यापि प्रामाण्याविशेषात्। अतः शब्दान्तरादिषट्कावधिरेव भेदः। ततः परं तु व्यक्तीनामेवाग्नेयादीनां देशादिभेदेनानुष्ठानमभिव्यञ्जनाख्यं भिद्यते न स्वरूपम्। **अतो द्रव्यान्तरेण** नीवारादिनापि **क्रियमाणे** कर्मणि शब्दान्तरादिभेदप्रमाणाभावाद् **व्यक्त्यन्तरबुद्धिर्नोपजायते। नामधेयं च सत्त्ववदिति।** अयमर्थः—यथाश्रयभेदेऽपि गोत्वादिसामान्यस्याभेदात्तन्निमित्तं गवादिनामधेयं सर्वत्र प्रवर्तते, तद्वद् द्रव्यभेदेऽपि कर्मभेदाभावात् तन्नामता न निवर्तते। तन्नामकाच्च फलम्। अतो द्रव्यान्तरेऽप्यस्त्येव फलमिति। अथापि नाम सर्वत्रैलोक्यवर्तिन्येकैव कर्मव्यक्तिः, अनुष्ठानमात्रं तु भिद्यते; तथापि यावदेकापूर्वानुबद्धमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म, अन्यत्तु भिन्नमिति भेदाभेदव्यवहारसिद्धिः। तथा यद्यपि देशादिभेदेऽपि भिन्ना एव कर्मव्यक्तयः; सामान्यमेव तु दर्शपूर्णमासाद्यभिधेयं फलवत्; तथापि देशादिभेदवद् व्रीहियवभेदवच्च नीवारेष्वपि तत्सामान्याव्यतिरेकात् सिद्धं द्रव्यभेदेऽपि कर्मैकत्वम्। सर्वे चैतेऽभ्यासाधिकरण एव पक्षा दर्शिता इति न पुनरिह वार्त्तिककारेण प्रदर्शिताः। सूत्रानुरोधाच्च शब्दान्तरादिषट्कावधिरेव भेदः, ततः परं त्वभेद इत्ययमेव पक्षः समर्थितः। भाष्यकारस्त्वङ्गीकृत्यापि कर्मभेदं शक्यत एवाधिकरणं नेतुमिति मन्वानः सामान्यं शब्दवाच्यम्; तच्च नीवारेष्वप्यभिन्नमित्याह। अत्र भाष्यकारेण चोद्यावस्थायां कर्मणोऽन्यत्वसिसाधयिषया न च प्रत्यभिज्ञायते विनष्टोत्पद्यमानभङ्गि[मानादङ्गि]रूपाद् भेदेन स्थास्नुरूपानुपलम्भनादिति प्रत्यभिज्ञाप्रत्ययं निर्हृत्य कथं तर्ह्ययमपि चलत्ययमपि चलतीति प्रत्यभिज्ञाप्रत्यय इत्याशङ्क्य देशान्तरे सम्प्रतिपत्तिदर्शनादित्युक्तम्। तस्यायमर्थः—देशसंयोगविभागात्मकफलस्यैकजातीयत्वात्तत्कारणत्वसामान्यात् स्वरूपभिन्नास्वपि क्रियासु चलति चलतीत्येकाकारप्रत्ययो भवति, न तु क्रियैक्यादिति। ननु प्रत्यक्षप्रत्यभिज्ञेयं कथमानुमानिकफलवशेन समर्थ्यते? देशान्तरप्राप्तिर्ह्यानुमानिकी आकाशस्याप्रत्यक्षत्वादित्याशङ्क्याह—गन्तापि प्रत्यक्षस्तथा देशान्तरमपि। तेन

फलैक्यात् प्रत्यभिज्ञा न क्रियैक्यादिति। विशदावभासादाकाशमपि प्रत्यक्षमेवेत्यर्थः। तदेनेनैव वादेन केचिदनुमेयत्वमेव कर्मणो भाष्यकारस्याभिमतमिति मन्यन्ते। तदयुक्तम्। उक्तं हि देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणमिति। यदि हि सर्वत्र फलानुमेया क्रिया, ततो नादित्यदेवदत्तयोः कश्चिद्विशेष इति न देवदत्ते व्याप्तिग्रहणम्, आदित्ये चानुमानं ब्रूयात्। तस्मान्न तावद्भाष्यकारस्याभिमतमेतत्। न च युक्तं संविद्विरोधात्। नह्यादित्यवद्देवदत्ते परोक्षा नः क्रियासंवित्। अपि च यद्यप्रत्यक्षा क्रिया स्यात्, ततो येयमभ्रेषु चलत्सु विदिततत्त्वानामपि चन्द्रमसि चलनभ्रान्तिः, सा नोपपद्यते। नह्यनुवर्तमाने बाधेऽनुमानभ्रान्तिरुत्पद्यते। प्रत्यक्षभ्रान्तिस्तु पीतशङ्खादिषु बाधानुवृत्तौ सत्यामपि दृष्टैव। अतः प्रत्यक्षैव क्रिया। अप्रत्यक्षा तु नान्यतोऽपि सिद्ध्येत्, प्रमाणान्तरासम्भवात्। संयोगविभागौ हि क्रियाकारणत्वाभिमतादेव प्रयत्नवदात्मशरीरसंयोगादेरुत्पत्तौ नातीन्द्रियां क्रियामनुमापयितुमीशाते।

कश्चित्त्वाह—संयोगो हि स्वाश्रये तत्समवेते वा कार्यमारभते। तन्तुसंयोग इव तन्तुषु पटम्, तन्तुतुरीयसंयोगो वा स्वाश्रयतन्तुसमवेते पटे तुरीयसंयोगम्। अतः कथं प्रयत्नवदात्मशरीरसंयोगोऽस्वाश्रयातत्समवेताकाशादिगतसंयोगविभागावारभेत। तत्कारणान्तरं कल्प्यम्। तच्च कर्म। न च तस्याश्रयतत्समवेतनियतारम्भकत्वं दृष्टम्। तद्धीदानीमेव संयोगविभागोपपत्तये कल्प्यमानं स्वाश्रयवस्त्वन्तरव्यासक्तकार्यारम्भस्वभावं कल्प्यत इति न प्रमाणान्तराभाव इति। तदिदं यत्किञ्चित्प्रलापिना केनचिन्निरुत्तरीभूतेन जल्पितम्। तथा हि इदं तावदयं देवानांप्रियः प्रष्टव्यः—पटे पटतुरीयसंयोगे शरीराकाशसंयोगे च त्रिष्वपि कार्येषु यथाक्रमं तन्तुसंयोगतन्तुतुरीयसंयोगप्रयत्नवदात्मशरीरसंयोगात्मकसंयोगत्रयानन्तरमुपलभ्यमानेषु केन विशेषेणाद्ययोरेव संयोगकारणत्वमन्यस्य[1] तु कारणान्तरं मृग्यत इति। विशेषप्रमाणाभावाद्धि त्रयाणामपि संयोगजन्यत्वं युक्तम्। इतरथा हि

---

१. मन्यथा–ख०।

विपरीतमपि प्रलपितुं शक्यम्—शरीराकाशसंयोगं स्वाश्रये वस्त्वन्तरे च व्यासक्तं प्रति संयोगस्य करणत्वं दृष्टमिति स्वाश्रयमात्रनिष्ठस्य पटस्य संयोगजन्यतानुपपत्तेः करणान्तरं मृग्यमिति । किञ्च, बाहौ दृढबद्धे च केयूरे तत्संलग्ने च मणौ युगपदेव प्रयत्नवदात्मसंयोगात् क्रियात्रितयमुत्पद्यते । तत्र प्रयत्नवदात्मसंयोगः शरीरात्मवर्ती[1] मणिकेयूरयोरस्वाश्रययोरतत्समवेतयोश्च क्रियामारभत इत्यनैकान्तिकमेतत्—स्वाश्रयतत्समवेताश्रितमेककार्यं संयोगेन जन्यत इति । अथ नात्मशरीरसंयोगाद् मणिकेयूरयोः क्रियोत्पत्तिः, किन्तु प्रयत्नवदात्मसंयुक्तशरीरसंयोगात् केयूरे कर्मोत्पत्तिः; तादृशकेयूरसंयोगविशेषाच्च मणाविति न व्यभिचारः । संयुक्तसंयोगतत्संयोगाद्यपि हि कर्मकारणमेव । यथाह भगवान् कश्यपः—"नोदनाभिघातात्संयुक्तसंयोगाच्च पृथिव्यां कर्म" इति । यद्येवमिहापि प्रयत्नवदात्मसंयुक्तशरीराकाशसंयोगादेव तर्हि स्वाश्रययोः शरीराकाशयोर्विभागसंयोगोत्पत्तिसम्भवान्न क्रिया कल्पयितुं शक्यते । अपि चासमवायिकारणमात्रस्वभावोऽयम्—यदुत स्वाश्रयतत्समवेताश्रितकार्यहेतुत्वम् ; न संयोगस्वभावः, रूपरसादिष्वपि तन्त्वादिसमवेतेषु पटरूपादीनामसमवायिकारणभूतेषु [2]दृष्टत्वात् ; अर्थेन्द्रियसंयोगेऽपि च ज्ञानस्य निमित्तकारणभूतेऽदृष्टत्वात् । ननु विभागजविभागे बाधित एवासावसमवायिकारणस्य स्वभावः । तेन नासमवायिकारणमात्रधर्मोऽयम् । किन्तर्हि ? संयोगस्यासमवायिकारणस्यायं स्वभाव इति तदबाधाय क्रियाकल्पनमिति । न, असिद्धत्वाद्विभागजविभागस्य । को हि नाम वंशदलविभागपूर्वकं तत्कारणकं वंशाकाशविभागमातिष्ठेतान्यत्र योगिप्रत्यक्षप्रमाणकेभ्यः काणादेभ्यः । नह्यपिहितचक्षुषः सूक्ष्ममपि निर्भावयमानाः पौर्वापर्यं पश्यन्ति । पद्मपत्रशतवेधवत्तु सौक्ष्म्यादनुपलम्भ इति स्पष्टे कालभेदे शक्यमभिधातुम् । न च तत्र प्रमाणमस्ति । तस्माद्युगपदेव वंशदलवर्तिना कर्मणा वंशदलविभागो वंशाकाशविभागश्च जायत

---

१. र्ति—ख० ।

२. दृष्टार्थत्वात्-क० ।

इत्यबाधित एवान्यत्रासावसमवायिकारणस्य स्वभावोऽत्रैव बाधितव्यः। नहि शरीराकाशविभागसंयोगयोस्तथाविधादसमवायिकारणादुत्पत्तिसम्भवः।

ततश्च—

बाधितव्यः स्वभावोऽयं कल्पयित्वापि चेत् क्रियाम्।
दृष्टाङ्गीकरणेनैव तद्बाधोऽङ्गीकृतो वरम् ॥

कल्प्यमानापि क्रिया शरीराकाशसंयोगविभागयोरसमवायिकारणत्वेन कल्प्यते। सा च शरीरगगनवर्तिनौ संयोगविभागावारभत इति योऽन्यत्रासमवायिकारणस्य स्वभावो दृष्टः—स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभत इति, स क्रियाकल्पनेऽपि बाध्यत एव। तद्वरं दृष्टस्यैव प्रयत्नवदात्मसंयोगस्य शरीराकाशसंयोगविभागहेतुत्वमभ्युपेत्य दृष्टव्याप्तिभङ्गाश्रयणम्। असमवायिकारणत्वप्रयुक्ता हीयं व्याप्तिः स्वाश्रयतत्समवेतयोरेव कार्यमारभते नान्यत्रेति न संयोगत्वप्रयुक्ता। अथ व्याप्तिबलादेव क्रियाप्युभयत्र देशे शरीरे च कल्प्येत, ततश्च [1]उभयत्रापि चलतीति प्रत्ययः स्यात्। न चैवमस्ति। तस्मान्नासमवायिकारणप्रयुक्तव्याप्तिवशेन तावद्देहमात्रवर्तिनी क्रिया शक्या कल्पयितुम्। संयोगस्तु परप्रयुक्तव्याप्त्युपजीवी नानुमानाय प्रभवति। यस्त्वप्रयोजकमपि संयोगत्वं बाल्यादेवं प्रयुङ्क्ते प्रयत्नवदात्मसंयोगो न स्वाश्रयतत्समवेताभ्यामन्यत्र कार्यमारभते संयोगत्वात् तन्तुसंयोगवत् तन्तुतुरीयसंयोगवच्चेति। तं प्रति प्रयत्नवदात्मसंयोगो न द्रव्यगुणव्यतिरिक्तस्य वस्तुरूपस्य कार्यस्य कारणम्, संयोगत्वाद् गुणत्वात् कारणत्वाद्वा तन्तुसंयोगवत्। शरीराकाशसंयोगो वा संयोगासमवायिकारणकः संयोगत्वात् पटतुरीयसंयोगवत्; गुणासमवायिकारणको वा कार्यत्वात् पटादिवदिति [2]प्रतिसाधनपञ्चकं वक्तव्यम्। पराक्रान्तमेव चात्र भगवन्मण्डनप्रभृतिभिरित्युपरम्यते ॥ १२ ॥

---

१. देशेऽपि—क० ग०।

२. 'प्रति' नास्ति—ख०।

( ४-श्रुतद्रव्यापचारे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनाधिकरणम् )

## श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् ॥१३॥ पू०

ननु सर्वशक्त्यधिकरणे यथाशक्ति प्रयोगः स्थित एव। पूर्वाधिकरणे च द्रव्यभेदेऽपि प्रधानकर्मणोऽभेद उक्तः। तत्कथं शिष्टद्रव्याभावे तदन्तोत्सर्गः शङ्क्यते। उच्यते—सत्यमङ्गत्यागेन प्रयोगः स्थितः, न त्वङ्गान्तरोपादानं स्थितम्। अतः प्रयाजाद्यङ्गहानेन कामं भवत्वनुष्ठानम्, न तु नीवाराद्युपादानं युक्तं प्रमाणाभावात्। न तावदाग्नेयचोदना [1]द्रव्यान्तरोपादानं विधत्ते, तस्याः कर्मविधिमात्रपर्यवसानात्। नापि व्रीहिचोदना द्रव्यान्तरं विधातुमुत्सहते। तदुक्तम्—"अनागमोऽन्यस्याशिष्टत्वात्" इति। ततश्च द्रव्याभावादगत्या कर्मानारभ्यम्। आरब्धमपि तदन्तमेवोत्स्रष्टव्यमित्याश[2]ङ्कानिवृत्त्यर्थमिदमधिकरणम्। इदमेवाभिसन्धाय पूर्वपक्षमाह—**व्रीह्यभावे तदन्तमेवोत्स्रष्टव्यम्।** कुतः? **नियमफलसम्पत्ती हि यथाश्रुताद्भवतः,** न त्वश्रुतान्नीवारादेः। व्रीहिनियमजन्यं तावददृष्टं व्रीहिभ्य एव निष्पद्यते। तदपेक्षं च फलम्। अतस्तदपि व्रीहिभ्य एव निष्पद्यते, नान्यतः। **तस्मात्फलाभावाच्छ्रुतद्रव्याभावे तदन्तोत्सर्गः** ॥ १३ ॥

क्वचिच्च विधीयते प्रतिनिधिः—"यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इति। तद्यदि न्यायादेव प्रतिनिधिः प्राप्तः स्यात्, ततो विधेर्वैयर्थ्यं स्यात्। तस्मादपि न प्रतिनिध्युपादानमिति ॥ १४ ॥

## आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ सि०

**"आग्नेयोऽष्टाकपालः" इतीयं चोदना नीवारैरपि सम्पादयितुं शक्यते,** द्रव्यान्तरेऽपि कर्माभेदस्य स्थितत्वात्। तथापि कथं द्रव्यान्तरोपादानमत

---

१. द्रव्योपादानम्—क०।

२. शङ्काभिनि—क०।

आह—**प्रारब्धमवश्यं समापनीयमिति च नियमो**ऽवश्यम्भावोऽ**स्या** एव चोदनायाः शिष्टविगर्हणाकल्पितया श्रुत्या **चोद्यते**। एतच्चोपलक्षणार्थम्। यावज्जीवादिचोदनाभिरनारब्धमपि नित्यमवश्यं कर्तव्यमिति नियमश्चोद्यत एव। तथाह भाष्यकारः—"यागश्चावश्यकर्तव्यो नित्येष्वनित्येषु च प्रारब्धेषु" इति। तेन नैवं भ्रमितव्यं प्रारब्धेष्वेव प्रतिनिधिरिति। नैमित्तिकं कर्मानारब्धमपि मुख्यद्रव्याभावे निश्चितेऽपि प्रतिनिधिमेवाङ्गीकृत्य प्रारब्धव्यमेव। तस्मादुपलक्षणार्थमेवैतत् प्रारब्धमवश्यं समापनीयमिति नियमश्चोद्यत इति। किमतो यन्नियमश्चोद्यते? अत आह—**या च** प्रधानचोदना **नियमेन** यत्किञ्चिदर्थाद् **द्रव्यमाकाङ्क्षति, सा** व्रीहिभिर्यजेतेति **श्रुतै**र्व्रीहिभिर्विध्यमानै**रेकवाक्यतां प्रतिपद्यमानार्थप्राप्तिं** द्रव्यान्तराणां **बाधते। श्रुताभावे** तु **या** द्रव्यान्तराणामर्थ**प्राप्तिः सा केन निवार्यते? तस्माद्** द्रव्यान्तरा**गमः कर्तव्यः**। यदि ह्याग्नेयचोदना न स्वयं द्रव्योपादानं प्रयुञ्जीत, व्रीहिवाक्यमेव तु तस्य प्रयोजकं स्यात्। ततस्तदभावेन द्रव्यान्तरमुपादीयेत। न चैतदस्ति, प्रधानचोदनयैव प्रयुज्यमानेषु द्रव्येषु नियममात्रं व्रीहिवाक्येन क्रियते। अतस्तदभावेऽपि प्रधानमेवावश्यकर्तव्यत्वाद् द्रव्यान्तरमुपादापयतीति। यच्चूक्तं क्वचिद्विधानादिति, तस्योत्तरं सूत्रम्—

**नियमार्थः क्वचिद्विधिः ॥ १६ ॥** इति।

सोमप्रतिनिधित्वेनानेकेषु प्राप्तेषु पूतीकनियमार्थं वचनमिति। तदाक्षिपति—**एतदयुक्तम्। कुतः? उत्पत्तिवाक्यशिष्टत्वात् सोमस्य नास्ति प्रतिनिधिः।** **कथमु**त्पत्तिवाक्यशिष्टस्य न प्रतिनिधिर्भवति? उत्तरम्—**उत्पत्तिवाक्ये यद्रूपमवगतं तद्रूपमेव** कर्म **प्रयोगवाक्येन** "ज्योतिष्टोमेन स्वर्गकामः" इत्यादिना स्वय**मरूपेण** सता **फले विधीयते**। तेन सोमानुरक्तस्यैव करणत्वात् तदभावे करण( कर्म )स्वरूपमेव हीयत इति न प्रतिनिध्युपादानप्राप्तिरस्तीति न [1]तन्नियमार्थता विधेरिति। दर्शपूर्णमासयोस्तर्हि कथं

---

१. 'तत्' नास्ति–क०।

प्रतिनिधिः ? अत आह—**नीवारैः क्रियमाणे उत्पत्तिवाक्ये यद्रूपं तन्न भिद्यते,** व्रीहीणामनुत्पत्तिशिष्टत्वात्। **इदं तु सोमेन विना भिद्यते। तस्मात्तद्रूपभेदः** करणस्वरूपस्य भेदः। **रूपभेदाच्च शब्दान्तरं** मृग्यम्। नहि ज्योतिष्टोमनामधेयं तस्य वाचकम्, उत्पत्तिवाक्यावगतसोमानुरक्तवाचकत्वात्। तन्नामकाच्च फलम्। अतो न पूतीकैः क्रियमाणं फलवदिति। इतश्च न प्रतिनिधिरित्याह—**यत्र ह्यगुणोत्पत्तिचोदना भवति** यथोद्भिदादिषु विकृतिषु केवलातिदेशाधीनगुणासु। **वाक्यान्तरेण** वा यत्र **गुणो** विहितः, यथा दर्शपूर्णमासयोः। **तत्र तदभावे** तस्यातिदिष्टस्य वाक्यान्तरशिष्टस्य वा गुणस्याभावे**ऽप्युत्पत्तिचोदनासम्पत्त्यर्थं** युक्तं [1]यद् **द्रव्यान्तरमुपादीयते।** कुतः ? **यथोत्पत्ते**रुत्पत्तिवाक्यावगतरूपापरित्यागेन **स्थितस्य** तस्य **यागस्यापेक्षावगतः प्रतिनिधिः,** यत उत्पत्तिवाक्यावगतस्वरूपं कर्म कर्तव्यतया प्रतीयमानं सामान्यतो द्रव्यमपेक्षमाणं शिष्टद्रव्याभावे प्रतिनिधिमाक्षिपति। **सोमे तु यस्मिन्नेव क्षणे** विधिप्रत्ययेन **परामर्शो यागस्य, द्रव्यस्यापि तस्मिन्नेव। अतो** द्रव्यात् **पूर्वमनुत्पन्न**त्वाद्यागस्य **द्रव्यापेक्षा नास्ति** नतरामुत्पन्नस्य, सद्रव्यस्यैवोत्पत्तेः। **अपेक्षाक्षिप्तश्च प्रतिनिधिः।** कर्तव्यतया प्रतीयमानं हि साधनमुपादापयति। इह च शुद्धो यागः कर्तव्यतया नैवावगम्यते। सोमानुरक्तस्तु कर्तव्यतया गम्यमानोऽपि नैव द्रव्यान्तरमाक्षेप्तुं पारयति, प्रतिक्षिपत्येव तु तत्। तस्मादपि न प्रतिनिधिः। उपेत्यापि तु प्रतिनिध्युपादानमुच्यते—**नियमार्थो विधिरित्येतद**स्मादपि कारण**दयुक्तम्।** कस्मात् ? **नहि** सोमस्य **सुसदृशे** द्रव्यान्तरे **सतीषत्सदृशः** पूतीकः **पक्षेऽपि प्राप्तः।** सुसदृशे हि बहवः श्रुतद्रव्यावयवाः संगृह्यन्ते, अल्पास्त्वीषत्सदृशे। न च भूयोऽनुग्रहे सम्भवत्यल्पानुग्रहो युक्तः। **तस्मादत्यन्ताप्राप्तो विधीयमानः** पूतीका **न नियमार्था भवतीति।** तेन प्रतिनिधिप्राप्त्यभावात्, भावेऽपि पूतीकाप्राप्तेर्न नियमार्थोऽयं विधिः, किन्त्वभावे विधिरेवेति। समाधत्ते—**अत्रोच्यते-प्रक्रान्तं कर्मावश्यं**

---

१. 'यद्' नास्ति-क०।

**समापनीयम्** । प्रक्रान्तग्रहणमुपलक्षणार्थमित्युक्तमेव । एवमुपरिष्टादपि द्रष्टव्यम् । **तस्मादावश्यकत्वात् सोमाभावे द्रव्यान्तरमुपादेयम्** । यत्त्वपेक्षाभावादित्युक्तम्, तत्राह – **यजेतेत्येतत्पदं यत्किञ्चिद्द्रव्यमपेक्षमाणं सोमेनेति पदान्तरेण निराकाङ्क्षीक्रियते**, यथा "आग्नेयोऽष्टाकपालः" इति **वाक्यं वाक्यान्तरेण** "व्रीहिभिर्यजेत" इत्यनेन । एकग्रन्थेनाह—**एवं चेत्पदान्तरवाक्यान्तरप्राप्तयोर्द्रव्ययोर्नैव** कश्चिद्विशेषोऽस्ति । कस्मात् ? **अपेक्षायास्तुल्यत्वात्** । **अथ यद**पेक्षानिराकरणार्थमुक्तम्—**सोमकलुषितस्यैवोत्पन्नत्वात् शुद्धस्य** यागस्य **प्रत्ययव्यापार एव** विध्यात्मको **नास्ति** । यतस्तन्मात्रं कर्तव्यतयावगम्यते । **तत्र कुतः पदान्तरापेक्षा ?** नहि कर्तव्यतयानवगम्यमानं साधनमाकाङ्क्षितुमर्हतीति । **उच्यते—पदार्थपूर्वकत्वाद्वाक्यार्थस्यापेक्षया विना सम्बन्ध एव नास्ति** ।[1] पदैरभिहिताः पदार्थाः स्वातन्त्र्येण गृहीताः परस्परमपेक्षमाणा वाक्यार्थमवगमयन्ति, न त्वनपेक्षाः ।

नन्वत्र सोमपदस्य प्रथमपठितत्वादवगते सोमे पश्चाद्यागो निपतन्ननपेक्षः स्यादत आह–**अन्यदिदानीमेतत्**, **यदुतैकस्य पूर्वकालः परामर्श एकस्य समकाल इति**; तथैकस्य **पूर्वकालेन सम्बन्ध एकस्य तु समकालेनेति** । **नानेन कश्चिद्विशेषः** । **सर्वत्रापेक्षा तावदस्ति** । नह्यनपेक्षस्य पूर्वप्रतीतेनापि सम्बन्धः सम्भवतीति । **अपेक्षाक्षिप्तश्च प्रतिनिधिः** । तेनास्त्युत्पत्तिशिष्टेऽपि प्रतिनिधिः । एवं यत् 'उत्पत्तिशिष्टरूपस्यैव फले विधानात् तद्रूपभेदे फलसाधनतैव न स्यात्' इत्युक्तं तदपि परिहृतम् । पदार्था हि पृथक्प्रतीताः परस्परेण सम्बध्यन्ते । ततश्च यजेतेत्यनेन यागः करणतया प्रतिपन्नः पश्चात्सोमादिद्रव्यमङ्गतया गृह्णाति; न तु तदनुरक्तस्य करणता । अतो न पूतीकेष्वपि करणरूपहानिरिति । तत्रैव युक्त्यन्तर-

---

**1. पदैरिति । अयमेवाभिहितान्वयवाद इत्युच्यते । पदाभिहितैः पदार्थैः, न तु पदैः, "सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि" इति न्यायेनाकाङ्क्षादिवशाद् विशेषरूपो वाक्यार्थो लक्ष्यत इति हि तन्मतस्थितिः ।**

माह—अपि च सोमो नैव साक्षाद्यागसाधनम्, किन्तु तदुपलक्षितो रसः। ततः किमित्यत आह—स चाविशिष्टः पूतीकेष्वपि सोमसदृशेषु, तदवयवसामान्यानुवृत्तेः। तस्मान्नास्त्युत्पत्तिवाक्यावगतस्य सोमाकृत्युपलक्षित-रससाधनरूपस्य भेदः। [1]एवं शब्दभेदोऽपि नास्ति न नामान्तरं मृग्यम्। अतो ज्योतिष्टोमनामधेयमविरुद्धम्, प्रतीकसाधनस्यापि रूपाभेदात्। कथं पुना रसस्य साधनत्वमत आह—एवञ्च दशमे वक्ष्यति—"पश्वाकृत्युपलक्षितं हृदयादि हविः, न तु साक्षात् पशुर्विशसनादिविधानात्" इति। इहापि स तुल्य एव न्यायोऽभिषवादिविधानात्। अथोच्येत सोमाकृत्युपलक्षितो यो रसः स यागसाधनम्, न तु पूतीकाकृतिको रसः। यद्यप्युपलक्षण-मेवाकृतिः, तथापि पूतीकेषु तदुपलक्षितस्य रसस्य सामस्त्येनाभावाद् वैगुण्यं ताव-दस्तीति। परिहरति—दर्शपूर्णमासयोरपि शक्यं वक्तुम्। व्रीह्याकृत्युप-लक्षितं ह्यवदानं यागसाधनं न तु नीवाराकृत्येति नास्ति वैषम्यम्, विगुणस्यापि नित्यस्य प्रयोगादिति। अथ यदुक्तं सत्यपि प्रतिनिधौ पूतीकाना-मीषत्सदृशत्वात् प्राप्तिर्नास्तीत्यभावे विधिरेवायमिति, तत्रोच्यते—यन्न कदाचि-दपि प्राप्नोति स विधिः। विधिरिति कर्मणि किः। यथा "अग्निहोत्रं जुहोति" इति होमः कथञ्चिदपि प्राग्विधेः प्राप्त्यभावाद् विधेयो भवति, पूती-कास्तु कदाचित् प्राप्नुवन्ति। यदा मुख्यस्याभावात् प्रतिनिधातव्यं किञ्चिदिति निरूप्यते, तस्यां वेलायां सर्वेषामेव सुसदृशानामीषत्सदृशानां चास्ति प्राप्तिरनिय-मेन। तद्यावदेव न्यायेन सुसदृशं नियन्तुमुपक्रम्यते, तावदेवेषत्सदृशाः पूतीका वचनेन नियम्यन्ते। तस्माद्युक्तमुक्तं नियमार्थः क्वचिद् विधिरिति। किञ्च यद्ययमभावविधिः स्यात्, तत इन्द्रवाय्वादिभिर्देवताभिर्न यागस्य सम्बन्धः स्यात्। कथम्? सोमरसग्रहणे हि ताः श्रुताः। तद्वशेन

1. 'एवं च' इति पू० मु० पाठः।

१. विशसनादिति—ख०।

तत्साधनकयागसम्बन्धिन्यो भवन्ति । न तु साक्षाद्यागे श्रुताः । न च पूतीके सोमरसोऽस्ति, यद्द्वारेण देवतानां यागसम्बन्धः स्यात् । अथासत्यपि सोमरसे पूतीकग्रहणमेवाश्रित्य यागसम्बन्धिन्यः स्युरित्युच्यते, अत आह—**सोमद्रव्याश्रितो यो** ग्रहणाख्यः **संस्कारः स** तस्या[1]श्रयभूतस्य द्रव्यस्याभावे **न भवति** । तेन ग्रहणमेव पूतीकानां नास्तीति कुतस्तद्द्वारेण देवतानां यागसम्बन्ध इति ।

ननु नीवारेष्विव व्रीहिधर्माः, पूतीकेष्वपि सोमधर्माः किं न भवन्त्यत आह—**न च पूतीका** भवन्मते **सोम इत्यनेनांशेन गृह्यन्ते यथा नीवारा व्रीह्यंशेन,** प्रतिनिधित्वानभ्युपगमात् । अतो न तद्वदेषां सोमधर्मप्राप्तिरिति । अथासत्यपि प्रतिनिधित्वे व्रीहियववदेककार्यकरत्वात् सोमपूतीकयोः साधारणं धर्मविधानमित्युच्यते, अत आह—**न च विकल्पेनोपदिश्यन्ते व्रीहियववत्** । कुतः ? **अभावविध्युपगमात्** । व्रीहियवौ हि समविकल्पौ; न त्वन्यतराभावेऽन्यतरस्य विधिः । अतोऽत्रोभयोराम्नानतो नित्यत्वाद् नित्यैर्धर्मविधिभिरविरुद्धः सम्बन्धः । इह तु नित्यः सोमविधिः; तदभावोपाधिकश्च पूतीकविधिरिति नित्यानित्यसंयोगविरोधात् फलचमसवन्न सामानविध्यसम्भवः । सोमकार्यापत्त्या तर्हि तद्धर्मलाभः स्यादत आह—**न च कार्यापत्तिरपि** तद्धर्मप्रापिका[2] **भवितुमर्हति, प्रत्यक्षविधानात्** । अप्रत्यक्षविधानासु हि विकृतिषु कार्यापत्त्या धर्मप्राप्तिः स्यात् । प्रत्यक्षविधानस्तु ज्योतिष्टोमो नात्र कार्यापत्त्या धर्मसम्बन्धः । किन्तर्हि ? उपदेशत एव । अपि चैक एव ज्योतिष्टोमः सोमेन पूतीकैश्च क्रियते । कथं च तत एव तस्मिन्नेवातिदेशः स्यात् । कार्यापत्तिश्चातिदेश एव न प्रमाणान्तरमित्युक्तम् । **तस्मान्नास्ति देवतासम्बन्धः** । कथं पुनरपूर्वप्रयुक्ता धर्मास्तस्मिन्नेवापूर्वे साध्यमानेऽपि पूतीकेषु न भवेयुरत आह—**सत्यप्यपूर्वप्रयुक्तत्वे द्वाराभावान्न धर्मसम्बन्धः** ।

---

१. तस्याश्रितस्य—क० ।

२. प्रापिकी—ख० ।

ननु तस्मिन्नेव कर्मणि द्रव्यभेदादुपदेशातिदेशसम्भवः। यथा सोमधर्मास्तत्कार्यापन्ने फलचमसेऽतिदिश्यन्ते, तथा पूतीकेष्वपि किन्नातिदिश्यन्ते, अत आह—**उत्पत्तिवाक्यशिष्टेन**। भावप्रधानः शिष्टशब्दः। उत्पत्तिशिष्टत्वेन कारणेन **प्रतिनिधिमनिच्छतोऽभावे विधानं प्रतिनिधिनियमश्च न स्यात्**। यथा प्रतिनिधिनियमोऽनुपपन्नस्तथाऽभावे विधिरपि भवन्मतेऽनुपपन्न एवेत्यर्थः। यथैव हि प्रतिनिहितेन द्रव्येण क्रियमाणे सत्युत्पत्तिवाक्यावगतकरणस्वरूपहानिः सोमानुरक्तस्य करणत्वात्, तथैवाभावविहितेनापि क्रियमाणे करणता हीयेत। अतो न सोमयागे पूतीकविधानं सम्भवति[1]। "गुणश्चापूर्वसंयोगे" इति न्यायात् **कर्मान्तरं तथा** सति **प्रसज्येत**। अतः कार्यापत्तेरेवाभावात् [2]तद्बलेन तद्धर्मप्राप्तिर्दूरोत्सारितैवेति। एवञ्च कर्मान्तरत्वे सति **प्रक्रान्तं कर्म न समाप्येत**। तच्चायुक्तम्, प्राक्रमिकत्वदोषापत्तेः। अतोऽस्त्युत्पत्तिशिष्टस्यापि प्रतिनिधिरिति प्रतिनिधिनियम एवायं नाभावे विधिरिति "वचनाच्चान्याय्यम्" इत्यत्र वक्ष्यमाणमेव दर्शितम्। इतिः समाप्ताविति ॥१६॥

(५-देवताग्निशब्दक्रियाणां प्रतिनिध्यभावाधिकरणम्)

## न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥ सि०

स्थिते प्रतिनिध्युपादानेऽपवाद आरभ्यते। मन्त्रस्य[3] सत्यपि स्मरणसाधनान्तरोपादाने शब्दान्तरं नोपादेयमित्यनेनाशयेनोदाहरणम्। तत्र पूर्वेण न्यायेन प्रतिनिधौ प्राप्ते सिद्धान्तमाह—**अर्थो वाचिकया श्रुत्योच्यमानो देवतात्वं प्रतिपद्यते, नान्यथा**। शब्दद्वारेण हि कर्मणि देवतायाः समवायो न [4]स्वरूपेण।

---

१. सम्भवतीति—क० ख०।

२. तद्बलेन नास्ति—ग०।

३. 'मन्त्रस्तु'—ख० ग०।

४. स्वस्वरूपेण—क०।

शब्दोऽपि च विधिगत एव नान्यः। ततः किमित्यत आह—**तद्वाचकस्याग्न्यादिशब्दस्याभावे च कथमर्थो देवता स्यात्**, द्वाराभावात्। ननु यथैव व्रीहिषु नियतेष्वपि तदभावेऽपि च यथाशक्ति प्रयोगान्नीवारोपादानम्, तथैव चोदितशब्दाभावेऽपि तत्स्थाने शब्दान्तरं किमिति नोपादीयते, अत आह—**नीवारैस्तण्डुलनिर्वृत्तिः प्रत्यक्षा, न तु देवतात्वं** प्रत्यक्षम्। मुख्यकार्यसिद्धये हि प्रतिनिधीयते। द्रव्येषु व्रीह्यादिष्वर्थसमवायिषु क्रियासाधनभावप्रकारः प्रत्यक्षः। व्रीहयस्तण्डुलनिर्वृत्तिद्वारेण, पुरोडाशस्तु [1]त्याज्यतयेत्यादि। ततश्च द्रव्यान्तरस्यापि नीवारादेस्तत्कार्यकरत्वावगमाद् युक्तं प्रतिनिधानम्। देवता तु केन प्रकारेणोपकरोति कर्मण इति न प्रमाणान्तरेण गम्यते, किन्तु शास्त्रेणैव। तच्च शास्त्रं विशिष्टशब्दोद्देश्यतयैव तस्याः क्रियान्वयं बोधयति, तेन तदभावे न देवतात्वसम्भवः। ननूद्देश्यत्वं देवतात्वम्, तच्च शब्दान्तरेऽप्यविशिष्टमेव। वैगुण्यमात्रं तु विधिशब्दहान्या स्यात्, न तु देवतात्वहानिः। तत्रोत्तरसूत्रे परिहारं वक्ष्यति—देवतायां च तदर्थत्वादिति। उद्देश्यत्वमात्रं न देवतात्वम्, तन्मात्रे देवताशब्दाप्रयोगात्। किन्तु विधिरपि [2]तदुपलक्षणम्। या यदर्थे विधीयते सा तस्य देवता स्यात्। नन्वेवमितरेतराश्रयं स्यात् देवता हि विधीयते, विहिता च देवता भवतीति। नैव [ नैष ] दोषः। नहि देवतायाः सत्या विधानम्, किन्तु विशिष्टशब्दोद्देश्यतामात्रेण विहिता पश्चाद्देवतात्वं प्रतिपद्यते। ततो विधिशब्दे विस्मृते शब्दान्तरं तदर्थवाचकमर्थान्तरवाचकं वा न प्रतिनिधातव्यम्। एवं च गत्यभावाद् यागस्यापि लोपः। नहि त्यागमात्रं यागः, किन्तु देवतोद्देशेन त्यागः। तेनासत्यां देवतायां प्रधानस्यैव यज्यर्थस्यासम्भवाल्लोपः। किञ्च, **सदृशं प्रतिनिधातव्यम्**। ततः किमित्यत आह—**देवताभावश्च शब्द-**

---

१. पुरोडाशस्त्यज्यनया—क०।

२. तदुपलक्षणया—क०। किन्तु न विधरर्पितदेवताशब्दप्रयोगाक्षिप्तदुपलक्षणया—ख०।

**नाशे**। शब्दद्वारेण हि देवतात्वम्। तथापि किमित्यत आह—**अतो मुख्यदेवताशब्दं स्मृत्वोत्तरकालं** तत्सदृशशब्दान्तरस्य **स्यादुपादानम्**। नह्यस्मृते मुख्ये तत्सदृशो बुद्धावारोपयितुं शक्यः। ततोऽपि किमित्यत आह—

**तत्तु उपादानं मुख्येनैव सिद्धम्**। अन्यत्कृतकरमित्यर्थः। नहि स्मृतस्य मुख्यस्य परित्यागो युक्तः। तस्मान्न प्रतिनिधिरिति। **मन्त्रेऽप्येष एव प्रसङ्गः**। तत्रापि हि मुख्ये मन्त्रे त्विस्मृते तत्सदृशं शब्दान्तरं मन्त्रान्तरं वा न प्रतिनिधातुं शक्यते। स्मृते तु मुख्ये तेनैव सिद्धत्वान्न[1] प्रतिनिधिः। **इयांस्तु विशेषो** देवतातो मन्त्रस्य। अयं चापरो हेतुरस्तीत्यर्थः। तं दर्शयति। **अर्थेन स्मृतेन** प्रयोजनमस्तीति सम्बन्धः। **न तु मुख्येन** मन्त्रेण, **नापि तत्सदृशेन** शब्दान्तरेण **प्रयोजनमस्ति**। अवश्यं ह्यनेन मन्त्रार्थप्रतिपादकं शब्दान्तरं प्रतिनिदधता येन केनचिदुपायेनार्थः प्रथमं स्मर्तव्यः, तदभावे तत्प्रतिपादकशब्दान्तरोपादानासम्भवात्। ततश्च सिद्धे स्मरणे न प्रतिनिधिना कार्यम्। स्मरणार्थमेव हि तत् प्रतिनिधीयते, नान्यार्थमिति। यदि तु सिद्धेऽपि स्मरणे शब्दसाधनस्मरणसिद्ध्यर्थं शब्दान्तरमुपादेयमित्युच्यते, तत आह—**न च शब्देन स्मरणं कर्तव्यमिति** वचनमस्ति। **किं तर्हि?** मन्त्रविशेषा**म्नानसामर्थ्यादुपद्रष्ट्राद्यपायनिवृत्तिः, मन्त्रनियमात्**। **तदभावात्**तस्य नियतस्य मन्त्रस्याभावाद् **उपद्रष्ट्रादि केन वार्यते**। अतो नास्ति शब्दान्तरप्रतिनिधिः।

तथाग्नीनामदृष्टार्थत्वान्नास्ति प्रतिनिधिरित्याह—**आहवनीयो यागहोमाभ्यामनाक्षिप्तोऽदृष्टोपकारित्वाद्** दृष्टोपकारित्वाभावात्। नहि त्यज्यमानस्य देशः कश्चिदुपकारं करोति। शक्यते ह्यप्रतिष्ठिते द्रव्ये त्यागहोमौ कर्तुम्। अतो यदाहवनीये जुहोतीति **वचनाददृष्टार्थतया विधीयते**। ततस्तयोर्यागहोमयोराहवनीयाभावे **नास्त्यन्याक्षेपः**। नह्यन्यस्य तददृष्टसाधनत्वे प्रमाणमस्ति। **आक्षेपाभावाच्च न प्रतिनिधिः**। एतदेव क्रियायामपि दर्शयति—**यत्प्रयाजादिभिरदृष्टं क्रियते तदन्या क्रिया करिष्यतीति नास्ति प्रमाणम्**।

---

१. त्वात् प्रति—ग०।

यदि क्रियायां न प्रतिनिधिः, ततो हन्त्या[ अवहन्त्या ]दीनामपि क्रियात्वात्तदसम्भवे न क्रियान्तरं तण्डुलनिर्वृत्त्यर्थमुपादीयेत, अत आह—**हन्त्यादीनां तु दृष्टार्थत्वाद् द्रव्यवदस्त्येव** प्रतिनिधिः। क्रियाग्रहणं त्वदृष्टार्थक्रियाभिप्रायमिति। सूत्रोक्तं हेतुमनुसन्धत्ते—**अन्यार्थसंयोगादिति। किमुक्तं भवति?** नहि प्रतिनिधीयमानं देवतादि प्रयोजनान्तरमपि साधयति। तेनायुक्तमिदमिति प्रश्नार्थः। उत्तरम्—**प्रतिनिधिकारणासंयोगादिति यावत्।** नायमर्थशब्दः प्रयोजनवाची, किन्तु वस्तुपर्यायः। तेन प्रतिनिधिन्यायाद् न्यायान्तरयुक्तमेवंजातीयकं न प्रतिनिधातव्यं भवति, न तु प्रतिनिधिन्याययुक्तमित्यर्थः॥ १८॥

( ६–प्रतिषिद्धमाषादेः प्रतिनिधित्वाभावाधिकरणम् )

## प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः॥ २०॥

वचने सति कथं पूर्वपक्षोऽत आह—**वरकादेः** श्रुतव्रीह्यादि **द्रव्यचिकीर्षयोपादानम्।** श्रुतस्य व्रीह्यादिद्रव्यस्यावयवास्तत्र सन्तीति तेनांशेन तस्योपादानम्। **न तु तेषां** स्वरूपेणाङ्गत्वेन **विधान**मुपादानमित्यर्थः, कार्ये कारणवदुपचारात्। ततः किमित्यत आह—**अङ्गत्वं च प्रतिषिध्यते** "अयज्ञिया वै माषाः" इति माषरूपस्य यज्ञसम्बन्धः प्रतिषिध्यते। इह च माषगतस्य श्रुतद्रव्यावयवस्य यज्ञसम्बन्धो न माषस्य। **तस्मात्** प्रतिनिधित्वेनाप्रतिषिद्धत्वाद् **वरकाद्युपादेयमेव। एवं प्राप्ते ब्रूमः।** अर्थाद् यद् वरकादि यत्र यज्ञसाधनं प्राप्तम्, तत्तत्र प्रतिषिध्यते। वरकादीनां मध्ये यदेव यत्रैव विषये**ऽर्थादङ्गत्वेन** वा प्रतिनिधित्वेन वा **प्राप्तम्, तत्तत्र** सर्वत्र **प्रतिषिध्यते** विशेषाश्रवणात्। तदुक्तम् 'अविशेषेण हि तच्छ्रुतिः' इति। श्रुतद्रव्यांशेनापि ह्युपादाने वरकादेरवर्जनीयो यज्ञसम्बन्धः। तन्मात्रं च प्रतिषिध्यते, ततः प्रतिनिधित्वेनाप्युपादानं नास्त्येव प्रतिषेध इति॥ २०॥

( ७–स्वामिनः प्रतिनिध्यभावाधिकरणम् )

## तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात्॥२१॥ सि०

प्रोषिते कार्यान्तरव्यापृते मृते वा यजमाने तत्स्थाने याजमानपदार्थानुष्ठानार्थं

पुरुषान्तरं प्रतिनिधेयं व्रीह्याद्यपचार इवेति पूर्वः पक्षः। तत्र यदा तावत् **प्रतिनिधीयमानो दक्षिणादानं हविःप्रदानं च करोति, तदा स एव** फलसम्बन्धान्मुख्यः स्वामी **स्यात्**, न प्रतिनिधिः। **यदा तु द्रव्यपरित्यागं कृत्वान्यत्र** लौकिके कार्ये **व्यापृतो भवति** मुख्यो यजमानः, तदा **यानि क्रत्वर्थानि** आज्यावेक्षणादीनि **तेष्वध्वर्युरेव प्रतिनिधित्वे कर्ता** विद्य इति नान्यः प्रतिनिधातव्यः। ऋत्विग्वरणाद्यर्थं तर्हि प्रतिनिधानं स्यात्, अत आह—**पुरुषसंस्काराणां च** ऋत्विग्वरणादीनां **क्रत्वर्थत्वाद्** विनापि यजमानेन नास्ति **वैगुण्यम्**; पत्न्यापि तदनुष्ठानसम्भवात्। **यानि च ब्रह्मचर्यादीनि फलग्रहणयोग्यतायाः कारणानि, तानि बहिरवस्थितेन** यजमानेन क्रियमाणानि क्रतोरुपकारकाण्येव। **तस्मादेकत्रा**ज्यावेक्षणादौ अध्वर्य्वादेरेव **विद्यमानत्वाद् इतरत्र** ब्रह्मचर्या**दावसम्भवात्** प्रतिनिधे**रनुपपन्नो** यजमान**प्रतिनिधिः**। नहि पुरुषान्तरेण क्रियमाणानि ब्रह्मचर्यादीनि यजमानस्य फलप्रतिग्रहणयोग्यतां सम्पादयन्तीत्यसम्भवः प्रतिनिधेः। तस्मान्न प्रवासादिनापचरति स्वामिनि तत्स्थाने स्वाम्यन्तरं प्रतिनिधेयमिति। यत्तु मृते प्रतिनिधिरिति, [1]तदतिमन्दमित्याह—**मृते तु नैव प्रतिनिध्याशङ्कास्ति,** प्रतिनिधातुरसम्भवात्। पत्नीति चेत्? न; तस्याः पतिहीनाया अग्न्यभावेनाधिकारासम्भवात्। तस्मान्न स्वामिनः प्रतिनिधिः। पत्न्यां तु मृतायां किमस्ति प्रतिनिधिरुत नेति नायमस्याधिकरणस्य विषयः। तत्रापि हि यदा तावत्—

भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि।

इत्ययं पक्षः समाश्रीयते, तदाग्न्यभावादेवानधिकारः सिद्धः। यदा तु नाग्नयः पत्न्यै दत्ताः, तदाप्याचारप्रामाण्याद् नापत्नीकस्य दर्शपूर्णमासाद्यनुष्ठानम्। अग्निहोत्रमात्रं तु वचनादनुष्ठीयते। तदाहुः—"अपत्नीकोऽप्यग्निहोत्रमाहरेदिति वचनात् [ रेद् वचनात्" इति ]। तन्नास्ति पत्न्याः प्रतिनिधिः॥ २१॥

---

१. तदमिति।

( ८–कस्यचित् स्वामिनो मरणे प्रतिनिध्युपादानाधिकरणम् )

**बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २२ ॥ सि०**

अपवाद आरभ्यते—अस्ति सत्रेषु स्वामिस्थाने प्रतिनिधिरिति। ननु सप्तदशावरा इति विहितसंख्यापूरणार्थं प्राजापत्येष्विव पशुष्वेकस्मिन् अपचरत्यन्योपादानं कर्तव्यम्। कथं पूर्वपक्षोऽत आह—**आसीरन्निति कर्तृगताऽनियमेन या बहुत्वसंख्या प्राप्ता सा सप्तदशावरा इत्यनेन नियम्यते**। यदि हि संख्यामात्रं श्रूयेत, ततस्तत्सिद्धये पुरुषान्तरं प्रतिनिधीयेत। आख्यातगता कर्तृसंख्यानेन नियम्यते। न च प्रतिनिधीयमानेन सा पूरयितुं शक्यते। अतो न प्रतिनिधिरिति। ननु प्रतिनिधीयमानोऽपि कर्तृत्वेनैव प्रतिनिधीयते, ततः कथं न संख्यापूरणमत आह—**फलेन व्याप्यमानश्च कर्ता भवति**। स्वतन्त्रकर्तृगता हि बहुत्वसंख्या प्रयोगवचनाख्यातेन विधीयते। सैव च सप्तदशावरा इत्यनेन नियम्यते। फलसम्बन्धिनश्च स्वातन्त्र्यम्, नान्यस्य। तथापि किमित्यत आह—**तत्रान्य आनीयमानः क्रियाफलेन न सम्बध्यते। अतस्तत्फलाभावाद्** आनीयमानेनाख्यातोपात्तस्वतन्त्रकर्तृगतबहुत्वसंख्यापूरणं **नास्तीति** वैयर्थ्यान्नास्ति प्रतिनिधिः। एतेन यत्केनचिदुक्तम्—आनीयमानेनापि कर्तृसंख्यापूरणसम्भवाद् वैगुण्यमेव नास्तीति; तन्निरस्तम्। **अपि च** 'ये यजमानास्त ऋत्विजः' इत्यनेन कर्त्रभिप्रायक्रियाफलविहितशानजन्तेन यजमानशब्देन स्वामिनामेवार्त्विज्येऽपि विधानाद् आनीयमानस्य च स्वामित्वाभावात् कथमवैगुण्यम्। यदप्युच्यते—यागकर्तृत्वमात्रमत्र विवक्षितं न तु स्वामिकर्तृत्वम्, उद्दिश्यमानानेकगुणविधाने वाक्यभेदादिति; तदपि न युक्तम्, एकशब्दोपात्तत्वात्। एकेनैव च शानचा कर्तृत्वं फलत्वं [ फलवत्त्वं ] स्वामित्वं चोच्यते। तेन तदुभयमप्यार्त्विज्योद्देशेन विधीयमानं न वाक्यं भिनत्ति। किञ्च, फलभागितैवात्र विवक्षिता, कर्तृत्वं तु नित्यप्राप्तानुवादः कर्तृत्वमात्रे तु विवक्षिते सत्यस्वामिनोऽपि तत्सम्भवात् फलभागित्वं पाक्षिकानुवादः स्यात्। तच्चान्याय्यम्। तस्मादस्वामिनि **कर्तरि स्पष्टमेव** वैगुण्यम्। असति च वैगुण्ये आरम्भसमयेऽप्यनधिकृतोपादानं

प्रसज्येत । तत्र यदुच्यते भवत्वेवमिति; तद्वैयात्यमात्रम्, प्रवृत्तेऽन्यमागमयेदिति सूत्रविरोधात् । किञ्चैवमनधिकृतानेव षोडश पुरुषानुपादाय सत्रमेक एवाधिकृतः कुर्याद् वरणदक्षिणयोरतिदेशप्राप्तयोरबाधार्थम् । नह्यसत्युपदेशविरोधेऽतिदेशबाधो युक्तः । ततश्च "वरणमृत्विजामानमनार्थत्वात्", "सत्रे न स्यात् स्वकर्मत्वात्", "परिक्रयश्च तादर्थ्यात्", "पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात्", "सत्रमेकः प्रकृतिवत्", "वचनात्तु बहूनां स्यात्", "अन्ये स्युर्ऋत्विजः प्रकृतिवत्", "अपि वा स्युः" इत्यादिविरोधः स्यात् । सिद्धान्तसमये च भाष्यकारः "एवं तावदुपपादितं भविष्यति" इति वदन् अङ्गीकृत्यैव वैगुण्यं यथाशक्ति प्रयोगात् सिद्धान्तं दर्शयिष्यति, न तु वैगुण्यमेव नास्तीति वदिष्यति । ननु सत्राणां काम्यत्वात् कथं यथाशक्ति प्रयोग इति ? इमामेवाशङ्कां निराकर्तुं सूत्रकारेण प्रवृत्तग्रहणं कृतम् । प्रवृत्तं हि काम्यमप्यवश्यं यथाशक्ति समापनीयमित्युक्तम् । तस्माददोषः ।

प्रकृतमनुसरामः—**अपि च देवतोद्देशेन द्रव्यत्यागं कुर्वत इयं संख्या । न चानीयमानो द्रव्यत्यागं करोति** । कुतः ? **तस्य** त्यागस्य **प्रथममेवा-** नागतावस्थ एव प्रतिनिधौ **कृतत्वात्** । सर्वे हि सत्रिणः प्रारम्भसमय एव कर्मोपयोगि द्रव्यं साधारणीकृत्य सत्रमारभन्ते । तदैव [1]तत् त्यक्तप्रायम् । न च तस्यामवस्थायामानीयमानस्य द्रव्यं तत्र निविष्टम् । अतो नासौ द्रव्यं त्यक्तुं क्षमत इति । **अत आनीयमानः स्वामिगतां कर्तृगतां त्यक्तृगतां च संख्यामसमर्थः पूरयितुम्** । तस्मान्नास्ति **प्रतिनिधिः** । **प्रारब्धसमाप्तिस्त्ववशिष्टैरेव** कर्तव्येत्येवं **प्राप्ते ब्रूमः—प्रारब्धमवश्यं समापनीयम्** । ननु समाप्यत एव परिशिष्टैरित्युक्तम्, तत्राह—**यथाश्रुतमेव** । सप्तदशकर्तृकमेव समापनीयम्, तथाविधस्यैव प्रारब्धत्वात्, प्रारब्धस्य च समापनीयत्वात्; न तु षोडशकर्तृकम्, अयथारम्भसमापने वैगुण्यप्रसङ्गात् । यत्तु स्वामिसंख्यात्र श्रुता, न च सा प्रतिनिधीयमानेन पूरयितुं शक्यते । अतो वैयर्थ्यान्न प्रतिनिधिरित्युक्तम्; तत्राह—**तत्र यद्यप्यानीयमानः स्वामिगतां संख्यां न पूरयति**; तथापि **यस्तु**

१. 'तत्' नास्ति—क० ।

**म्रियते तस्य पदार्थे**, तस्य यः पदार्थः कर्तव्यस्तस्मिन्, **कर्तृत्वं शक्नोति प्रतिपत्तुमिति । तस्मादनेन** कर्तृत्वांशेनावश्यमुपादेयः प्रतिनिधिः । नहि स्वामिसादृश्यं न सम्भवतीत्येतावता सम्भवदपि कर्तृत्वांशे सादृश्यं हातव्यं भवति ।

नन्वस्य त्यक्तृत्वं न सम्भवति ? यथा सम्भवति तथा यतितव्यम् । तेन प्रागेव साधारणीकृतमपि द्रव्यं क्रयादिना प्रतिनिहितेनापि स्वीकर्तव्यम् । तस्मादस्ति प्रतिनिधिः । ननु वाचनिक एवात्र प्रतिनिधिः "यदि सत्राय दीक्षितानां प्रमीयेत तस्य यो नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्" इति । किमर्थमिदमधिकरणम् ? उच्यते । नियमार्थं वचनम् । नेदिष्ठमेव प्रतिनिर्धयेरन् [ प्रतिनिदधीरन् ] नान्यमिति । न प्रतिनिधिविधानार्थम् । तस्माददोषः ॥ २२ ॥

( ९–सत्रे प्रतिनिहितस्य स्वामित्वाभावाधिकरणम् )

## स स्वामी स्यात्तत्संयोगात् ॥ २३ ॥ पू०

स स्वामिस्थाने निपातात् तद्वदेव फलसम्बन्धी युक्तः, नह्यन्यथा तत्स्थाने पतितः स्यादिति पूर्वः पक्षः ॥ २३ ॥

सिद्धान्तमाह—**एतस्मिंश्च** कर्त्रंशेनोपादाने स्थिते सति, **उत्तरेऽधिकरणे यो विचारः स नैवो**त्तिष्ठति । उत्तरशब्देन पूर्वाधिकरणे स्थित्वेदमधिकरणं निर्दिशति । स्वामिस्थाने निपतन् कर्त्रंश एव निपतति, न स्वामित्वांशे, सकलकर्मानुष्ठानायत्तत्वात् फलसिद्धेः । प्रतिनिहितस्य चैकदेशकर्तृत्वान्नास्ति फलसम्बन्धः, विध्यभावाच्च । नहि प्रतिनिधीयमानस्य कर्तव्यतया कर्म विहितम्, यदसौ फलेन युज्येत । इतरे तु प्रारब्धमवश्यं समापनीयमित्याचारानुमितविधिवशेन सादृश्यसम्पत्त्यै पुरुषान्तरमृत्विक्स्थानीयमुपाददते । तस्मात्तेषामेव फलं न तु प्रतिनिहितस्येति ॥ २४ ॥

## तस्मिंश्च फलदर्शनात् ॥ २५ ॥

इति लिङ्गदर्शनसूत्रम् । "यः सत्राय दीक्षितानां प्रमीयेतापि तस्य फलम्" इति मृतस्य फलं दर्शयत् प्रतिनिधेर्नास्ति फलमिति दर्शयति । तदिदं मृतस्य

फलसद्भावप्रतिपादनपरं मा विज्ञायीत्याह—**फलसरूपोऽयमर्थवादः**, पर्णमय्य-धिकरणन्यायात् । अथ मा भून्मृतस्य फलपरमिदम्, सत्रमासीरन्निति तु विधितः प्रवृत्तस्य मृतस्यापि किमिति फलं न भवतीत्यत आह—**सत्यपि फले मृतस्य प्राप्त्यभावात्** । अपिशब्दस्यायमर्थः—"ऋद्धिकामाः सत्रमासीरन्" इति विधिप्रमितं यत्फलम्, तत्तावदेकस्मिन्नपि मृते सर्वेषां विपन्नमेव, स्वामिसंख्याहान्या वैगुण्यात्, विगुणात् काम्यात् फलानुदयात् । प्रारब्धं समापयेदिति तु विध्यन्तर-प्रमितफलेच्छया अत्रशिष्टाः सत्रिणः प्रवर्तन्ते । न च मृतस्य तत्र प्रसङ्गोऽप्यस्तीति । अथापि नाम सत्रविधिप्रमितमेव फलं विगुणादपि निष्पद्यते, तथापि मृतस्य फलप्राप्तिर्नास्ति सकलाननुष्ठानात् । नहि प्रारम्भमात्रात् फलं भवति । **इतरस्य** च प्रतिनिहितस्य न केवलं सकलाननुष्ठानात् **कर्मकरत्वादपि** विधिवशेन परप्रेरितस्यर्त्विग्वत् प्रवर्तमानत्वादपि **नास्ति फलसम्बन्ध** इत्यधिकरणसिद्धान्त एव पूर्वं संक्षिप्तः, इदानीं तु विवृत इति ॥ २५ ॥

( १०–सत्रे प्रतिनिहितस्य स्वामिधर्मत्वाधिकरणम् )

## स तद्धर्मा स्यात् कर्मसंयोगात् ॥ २६ ॥ सि०

स्वामिधर्माणां फलप्रतिग्रहणयोग्यतापादकत्वात् प्रतिनिधेश्च फलप्रतिग्रहाभावाद् न स्वामिधर्मैः सम्बन्धः । तदुच्यते[1]—यद्यपि नास्य फलसम्बन्धः, तथापीतरेषां फलप्राप्तेर्यथोपक्रान्तकर्मानुष्ठानाधीनसिद्धित्वात् सप्तदशकर्तृकस्य च ब्रह्मचर्यादेः स्वकार्यसाधनत्वात् तत्सिद्ध्यर्थं प्रतिनिहितोऽपि ब्रह्मचर्यपयोव्रतादिस्वामिधर्मान् कुर्यात् । इतरथा कर्तृसंख्यालोपादितरेषामपि ब्रह्मचर्यकार्यं न सिद्ध्येत् । तस्मात् स्वामिधर्मायमिति ॥ २६ ॥

( ११–श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधिनियमाधिकरणम् )

## सामान्यं तच्चिकीर्षा हि ॥ २७ ॥ सि०

पूर्वपक्षमाह—**अष्टाकपालचोदना येन केनचिद् द्रव्येण निर्वर्त्यते तत्र**

---

1. तदुच्यत इति । तत् तस्माद् यथादर्शितस्य पूर्वपक्षस्य प्राप्तत्वाद् उच्यते । सिद्धान्त इति शेषः ।

किं सादृश्योपादानेन ? अथोच्येत व्रीहिचोदनानुग्रहार्थं सादृश्योपादानम्, न त्वाग्नेयचोदनासम्पत्त्यर्थमिति । उत्तरमुच्यते— व्रीहिचोदनायां फलार्थिनः प्रवर्तामहे, न तु तस्या व्रीहिचोदनायाः स्वरूपानुग्रहार्थम् । न च[1] शक्यं वक्तुं नीवारा व्रीहिसदृशास्तत्फलं व्रीहिफलं साधयन्ति । तेन फलार्थमेव नीवारोपादानमिति । कथम् ? यदि नीवारास्तत्फलं साधयेयुस्ततो व्रीहिभिर्विकल्पेरन्, एककार्यत्वाद् यववत् । न चैतदिष्टम् । तस्मान्न व्रीहिनियमादृष्टं नीवारैः सिद्ध्येत् । विनापि तु तेन विगुणोऽप्याग्नेयचोदनार्थः कर्तव्य इति कृत्वा द्रव्यान्तरोपादानम् । तत्र च सदृशासदृशयोर्नास्ति विशेषः । तस्मान्न सादृश्योपादानम् । एवं प्राप्ते ब्रूमः-फलार्थिना यथाश्रुतं व्रीह्यादिद्रव्यकं कर्म प्रक्रान्तम्, तादृशस्यैव फलसाधनत्वेन श्रवणात् । तत्र व्रीह्यभावेऽङ्गहान्या फलाभावात् तदन्तोत्सर्गे प्राप्ते शिष्टाचारानुमिताद्वचनात् "प्रारभ्य यजेतैव" इत्येवंभूतात् समाप्तिर्विधीयते । ततः किमित्यत आह—सा च समाप्तिर्यादृशः क्रतुः प्रक्रान्तस्तादृशस्य विधीयते, नान्यादृशस्य । तथापि किमित्यत आह—तत्र च प्रक्रान्ते क्रतौ व्रीह्याकृतिर्यागसाधनं स्वाश्रयभूतं द्रव्यं परिच्छिन्दत्यङ्गतां प्रतिपद्यते यथा, एवं तद्गता द्रव्यगता ये विशेषा दीर्घशूकत्वादयस्तानपि परिच्छिनत्ति । तेऽपि च क्रियायाः साधनमेव । नह्यव्याप्रियमाणेष्ववयवेष्ववयवी व्याप्रृतः सम्भवति । त्यागोऽपि नावयवानामभवन् अवयविनो भवति । व्रीहिसोमादिषु चायमपरो विशेषः—पेषणाभिषवादिविधानादवयवानामेवाङ्गत्वम्, नावयविनो विनष्टत्वात् । रूपादिष्वपि येषु नावयविनो विनाशः, तेष्वपि सहैवावयवैरवयविनः कार्यसाधनत्वात्, तादृशस्यैव क्रियाक्षिप्तस्य खदिरचोदनादिभिर्नियमविधानात्, जात्या च स्वाश्रय-

---

1. न चेति । पुण्यपत्तनमुद्रिते मूलपुस्तके 'न च' इतीदं नास्ति । तथापि व्याख्याने तन्त्ररत्ने तस्य 'शक्यं वक्तुम्' इति शेषपूरणाद् गम्यते मूले 'न च' इत्यनेन भाव्यमिति ।

वत्तदवयवानामप्युपलक्षणसम्भवाद्, जातिर्व्यक्तिस्तदवयवाश्च सर्वं एव क्रियाङ्गतया व्रीहिखदिरादिचोदनाभिर्विधीयन्ते। तथापि नीवारेषु तेषां समस्तानामभावात् कथं तदुपादानमत आह–**तत्र यद्यपि नीवाराकृतिर्व्यक्तिश्च** [1]व्रीहिजातिव्यक्तिभ्या-**मन्या, तथाप्यन्ये बहवो धर्मा** व्रीहि**समाना**स्तेषु विद्यन्ते। **ते श्रुतसम्पत्तये-ऽवश्यमुपादेयाः**, श्रुतैकदेशसम्पत्तय इत्यर्थः। नहि सम्भविनस्त्याग उचित इति। नन्वसमाना अपि तत्र धर्मा विद्यन्त इति कथं तदुपादानमत आह—**यत्त्वधिकं तन्नान्तरीयकत्वादुपादीयते, न तूपादित्सया**। तस्मात्तदुपादानमदोषः। ननु सदृशोपादानेऽपि वैगुण्यात् तत्फलसिद्धिर्न स्यादत आह **तत्र प्रारब्धस्यावश्य-कर्तव्यतोपदेशादवश्यमेव विगुणादपि फलेन भवितव्यम्**। किं पुनः फलमित्यत आह—**सोमयागस्य**। प्रारब्धकर्मोपलक्षणमेतत्। प्रारब्धस्य कर्मणो **यत्फलं** स्वर्गादिक**मवगतम्, तदेवात्राप्यनुषज्यतेऽवश्यकर्तव्ये**। कुतः? **सौकर्यात्**, बुद्धिसन्निधानादित्यर्थः। **विप्रकर्षात्तु न दर्शपूर्णमासफला-नुषङ्गः**। असन्निहितफलोपलक्षणमेतत्। **किञ्च, अनाकाङ्क्षितत्वाच्च न फलान्तर-कल्पनं युक्तम्**। यो हि स्वर्गं कामयमानस्तत्साधनं कर्म प्रारभ्याङ्गसाकल्यासम्भवाद् वैफल्यं मन्वानोऽवीतेच्छ एव कर्मणः परावर्तितुमुपक्रमते, तं प्रति नैतदुत्स्रष्टव्यम्, अवश्यमेतत्समापयितव्यमिति विहिते, यदेव तस्य मनसि विपरिवर्तते फलं तदेव फलापेक्षायां सन्निहितत्वा[द]पेक्षितत्वाच्च फलतया सम्बध्यते, नान्यत्। यस्तु वीतेच्छः प्राप्तफलो वा तं प्रति प्रकृतफलस्यानपेक्षितत्वादसन्निहितोऽपि पापक्षय एवापेक्षित-त्वात् फलं कल्प्यते। तदेवं यथाश्रुतस्योपक्रमात्तत्सिद्ध्यर्थं सदृशोपादानमित्युक्तम्।

प्रकारान्तरमाह–**अथवाऽवश्यकर्तव्यतानियमः, स च गुणो** दध्यादिवत्। स च **तस्य** पुरुषस्य फलविशेषकामस्य **यन्मनसि विपरिवर्तते तदेव साध-यति। वीतायां तु फलेच्छायां पापक्षयादि**, सन्निहितस्यानपेक्षितत्वात्।

---

१. व्रीहीत्यारभ्य धर्मा इत्यन्तस्य स्थाने 'व्यक्तिस्तदवयवाश्च सर्वं एव क्रियाङ्गतया' इति ख० पुस्तके।

अवीतायां तु फलेच्छायां सौकर्याद् यत्सन्निहितं तदेव साधयति । ततः किमित्यत आह—स च गुणो दध्यादिवदनाश्रितो न शक्नोति फलं साधयितुमिति प्रक्रान्तं कर्माश्रयति । तथापि किमित्यत आह—तच्च साङ्गम् । व्रीह्याद्यङ्गोपेतं प्रक्रान्तम् । तत्र व्रीह्याकृतिर्व्यक्तिर्वा केवलाऽसम्भवाद् नीवारेषूपादीयमानेषु परित्यज्यते । शिष्टं तु तदवयवादि यथाश्रुतमेवाश्रयत्वेन गृहीतम् , अतस्तदनुग्रहार्थं सदृशोपादानं कर्तव्यमिति सिद्धम् ॥२९॥

( १२–द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् )

## निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २८ ॥ सि०

वैकल्पिकानामन्यतमेन प्रयोगे प्रारब्धे तदपचारे सति वैकल्पिकान्तरमुपादेयम्, न त्वपचरितसदृशम् ; मुख्ये सति प्रतिनिधेरशास्त्रीयत्वादिति प्राप्तेऽभिधीयते—यथारम्भमेव समापनीयत्वान्निर्दिष्टैकसाधनके च प्रयोगे श्रुतस्यापि साधनान्तरस्यानङ्गत्वात्[1] प्रवृत्तस्यैव तत्राङ्गत्वात् तदपचारे तत्सदृशमेवोपादेयम् , न वैकल्पिकान्तरम् ; अयथाप्रारम्भसमापनप्रसङ्गादनङ्गत्वाच्चेति ॥ २८ ॥

( १३–पूतीकानां सोमप्रतिनिधित्वाधिकरणम् )

## वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥

इदमधिकरणं प्रागेव "नियमार्थः क्वचिद्विधिः" इत्यत्र प्रसङ्गाद्वार्त्तिककारेण व्याख्यातम् । उत्पत्तिशिष्टत्वात् सोमस्य पूतीकानां च सुसदृशेषु द्रव्यान्तरेषु सत्सु प्राप्त्यभावात् , अभावे विधिरेवायं "यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इति, न प्रतिनिधिनियम इति पूर्वः पक्षः । उत्पत्तिशिष्टस्यापि क्रियापेक्षयैव ग्रहणात् तदपचारे च क्रियया द्रव्यान्तरस्याप्यपेक्षयाक्षेपसम्भवात् , ईषत्सदृशानामपि, न्यायात् सुसदृशेष्वप्राप्तेष्वेव, बलीयसा वचनेन नियमसम्भवान्नियमविधिरेवायं

१. साधनस्यानङ्गत्वात्–क० ।

नाभावे विधिः । तेनायं वाक्यार्थः—सोममलभमानस्तदवयवान् यत्र क्वचन स्थितान् उपादित्सिते[ दित्सते ]स पूतीकस्थानुपाददीतेति । प्रयोजनं भाष्योक्तम् ॥ ३१ ॥

( १४–प्रतिनिध्यपचारे श्रुतद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् )

## न प्रतिनिधौ समत्वात् ॥ ३२ ॥ सि०

यथैव वैकल्पिकेष्वेकस्मिन् प्रवृत्तेऽपचरिते तस्यैव तस्मिन् प्रयोगेऽङ्गत्वाद् मुख्यमपि वैकल्पिकान्तरमनुपादायापचरितसदृशमेवोपादीयते, तथैव प्रतिनिधौ प्रवृत्ते तस्यैव तत्प्रयोगाङ्गत्वात् तदपचारे तत्सदृशमेवोपादेयम्, न तु मुख्य-सदृशम्; तस्य तत्रानङ्गत्वात् । नैतदेवम्[1] । भवेदेतदेवं यदि प्रतिनिधिरङ्गं स्यात्, न तु तस्याङ्गत्वे श्रुत्यादीनामन्यतमद[ म ]स्ति प्रमाणम् । श्रुतद्रव्यसाधा-रणास्तु येऽवयवा नीवारगतास्तदुपादित्सया प्रवर्तमानो नान्तरीयकतया नीवार-मुपादत्ते । तस्मान्नीवारस्यानङ्गत्वाद् व्रीह्यवयवानामेवाङ्गत्वात् तत्सिद्ध्यर्थं व्रीहि-सदृशमेवोपादेयं न नीवारसदृशमिति ॥ ३२ ॥

( १५–श्रुतप्रतिनिध्यपचारे मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् )

## स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥ पू०

श्रुतिलक्षणे पुनः को विशेषः ? ननु श्रुतिरपि प्रतिनिधिनियमार्थैवेत्युक्तम्[2] । सत्यमेतत्; तथाप्यस्त्यत्र काचिदाशङ्का—सोमावयवानामन्यत्रापि सद्भावे सति पूतीकनियमादेवं विज्ञायते—नूनं पूतीकांशोऽप्यस्यां वेलायां क्रियाङ्गमिति । इतरथा सोमावयवस्याङ्गत्वे तस्यान्यत्रापि सम्भवान्न पूतीका एवोपादीयेरन्; तत्र नियमविधिरुपरुध्यते । तस्मात् पूतीकस्याप्यङ्गत्वात् तदपचारे[3] तत्सदृश-मेवोपादेयं न सोमसदृशमिति । सिद्धान्तस्तु—सत्यं न सोमावयवमात्रमङ्गम्; न

---

१. 'नैतदेवम्' नास्ति–ख० ग० ।

२. नियमार्थैव–क० ।

३. 'तदपचारे' नास्ति–ख० ।

तु तावता पूतीकावयवाः[1] क्रियाङ्गं भवन्ति, प्रतिनिधिनियमव्याघातप्रसङ्गात् । किन्तु सोमावयवा एव क्रियाङ्गम्, पूतीकावयवसाहित्यं तु तेषामेवाङ्गम्, मैत्रावरुणग्रहस्येव पयस्संसर्गः । ततः पूतीकापचारे द्वयसम्पादनार्थमुभयसदृशमुपादेयम्, न केवलपूतीकसदृशम्, नापि केवलसोमसदृशम् । उभयसदृशालाभे तु सोमावयवानां प्राधान्यात्तल्लिप्सया सोमसदृशमेवोपादेयं न पूतीकसदृशमिति ॥३३॥

( १६–मुख्यापचारे पुनर्मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् )

## मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३५ ॥ सि०

मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितेन यद्यप्यन्तरा मुख्यं लब्धम्, तथापि मिथ्यासङ्कल्पदोषपरिजिहीर्षया तदनादृत्य प्रतिनिधिरेवोपादातव्य इति । नेत्याह– नहि सम्भवति मुख्ये जघन्योपादानमुचितम् । समग्रानुष्ठानशक्त्यामसत्यां हि विकलानुष्ठानं शास्त्रीयं भवति, न सत्यामपि । सङ्कल्पोऽपि शास्त्रार्थविषय एव कर्तव्यः–यथाशास्त्रमनुतिष्ठतामिति, न तु प्रतिनिधिस्वरूपमेव झटिति सङ्कल्पयितव्यम् । तस्मान्मुख्याधिगमे तदेवोपादातव्यमिति ॥ ३५ ॥

( १७–प्रतिनिधौ संस्कृतेऽपि श्रुतद्रव्यलाभे तदुपादानाधिकरणम् )

## प्रवृत्तेऽपीति चेत् ॥ ३६ ॥ सि०

यदा पुनः प्रतिनिधिमुपादाय केचन संस्काराः कृताः, तदा यद्यपि मुख्यं लब्धम्; तथापि [2]शास्त्रकार्यस्योपादानस्य कृतत्वाद् निवृत्तव्यापारं शास्त्रं न पुनर्मुख्योपादानं प्रयुङ्क्त इति विकलेनापि[3] प्रतिनिधिनैव प्रधानमपि निर्वर्तयितव्यम्, न पुनर्मुख्यमुपादातव्यमिति पूर्वः पक्षः । सिद्धान्तमाह—**केषुचित्**

---

१. तदवयवाः–क० ।

२. शास्त्रीयस्य–ग० ।

३. केवलेनापि–ख० ग० ।

**संस्कारेषु कृतेष्वनभिनिर्वृत्ते प्रयोजने** सति[1] **श्रुतमेव मुख्यमुपादातव्यम्**। नन्वेवं संस्काराणां कृतानामानर्थक्यं स्यादत आह—**न संस्काराणामनुरोधः** कर्तव्यो **द्रव्यगुणत्वा**त्तेषाम्, द्रव्यस्य च सति सम्भवे मुख्यस्यैव प्रधानावैगुण्यार्थमुपादातव्यत्वात्। तेनास्तु संस्काराणामानर्थक्यम्, न तु तदनुरोधेन प्रधानं विगुणीकर्तव्यम्। नन्वेवं संस्कृतं हित्वा मुख्यमसंस्कृतमुपाददानस्य संस्कारहानिः स्यादत आह—**तस्माद्** द्रव्यगुणत्वाद्ये **निर्वृत्ताः संस्कारास्तेषामावृत्तिः स्यात्**, प्रधानवशेन गुणवृत्तेर्न्याय्यत्वात्। यत्तु कृतकृत्यं शास्त्रं न पुनरुपादानं प्रयुङ्क्त इत्युक्तम्, तदयुक्तम्; नह्युपादानमात्रं शास्त्रकार्यम्, प्रधानानुष्ठानं तु तस्य कार्यम्। तत्सिध्यर्थं चाङ्गान्युपादापयति। प्रधानं च मुख्ये सति प्रतिनिधिना क्रियमाणं विगुणं स्यादिति तदवैगुण्याय पुनर्मुख्यमुपादापयत्येव शास्त्रम्।

"प्रवृत्तेऽपीति चेत्" इति सूत्रम् "नानर्थकत्वात्" इत्युत्तरसूत्रेणैकवाक्यतया पूर्वपक्षसूत्रवदाभाति, न तु तथा मन्तव्यमित्याह—एवम्। उक्तेन न्यायेन कृतेष्वपि संस्कारेषु मुख्योपादानस्य न्याय्यत्वाद् इदं सूत्रं **सिद्धान्तसूत्रं भवति**। तदिदं देयधर्मापयातनवद्[2] वाक्यभेदेन व्याख्यातमिति वेदितव्यम्। अयं च सूत्रार्थः—पूर्वसूत्रे मुख्याधिगमे मुख्यमित्युक्तम्। तदपेक्ष्याह—इति चेन्न्यायः, ततः प्रवृत्तेऽपि प्रतिनिधौ मुख्यमेवोपादातव्यमिति। पूर्वपक्षस्तर्ह्यसूत्रितः स्यात्? सत्यमित्याह—**पूर्वपक्षस्तूत्प्रेक्ष्यः**। भाष्यकारेणापि मन्दत्वात् पूर्वपक्षमप्रदर्श्य 'किं प्राप्तम्' इत्यादिना सिद्धान्त एव दर्शित इति॥ ३६॥

( १८–प्रतिनिधेः प्रयोजनसंपत्तौ मुख्यस्य लाभेऽपि तदनुपादानाधिकरणम् )

## नानर्थकत्वात्॥ ३७॥ सि०

कृतेऽपि तर्हि प्रधाने नियोजनादौ कदरे, खदिरे पुनर्लब्धे साद्गुण्याय नियोजनमावर्तयितव्यमिति शङ्कमानस्योत्तरम्—नानर्थकत्वादिति। तस्यार्थमाह—

---

१. 'सति' इत्यस्य स्थाने 'चोत्तसर' इति–ख०।

२. देयधर्म्यापयातनवत्–ग०।

एतदपि सिद्धान्तसूत्रमुत्प्रेक्ष्यपूर्वपक्षकम् । न पूर्वसूत्रस्योत्तरमिदम्, किन्तूत्प्रेक्ष्यपूर्वपक्षकम् । अधिकरणान्तरसिद्धान्तसूत्रमिदमित्यर्थः । भाष्यकारेणापि पूर्वसूत्रे "कृतेषु संस्कारेषु श्रुतमुपादेयम्" इत्युक्त्वा, अत्र "यूपप्रयोजने नियोजने निर्वृत्ते किं खदिरेण कुर्यात्? नियोजनार्थं हि खदिरोपादनम्, न स्वार्थतया। तच्च निर्वृत्तम्, तस्मान्न श्रुतमुपाददीत" इति वदताधिकरणभेद एव स्पष्टीकृतः। यत्तु प्रक्रमे 'नैतदेवम्' इत्युक्तं भाष्ये, तदेवमुपस्कृत्य व्याख्यातव्यम्। प्रवृत्तेऽपि प्रतिनिधौ प्राक् प्रयोजनाद् मुख्याधिगमे मुख्यमित्युक्तम्। कृते तु प्रयोजने नैतदेवं मन्तव्यमिति। एवं यथाभाष्यं सूत्रं व्याख्याय सूत्रानुगुण्यादेकाधिकरण्यमेव समर्थयते—**अथवा 'प्रवृत्तेऽपीति चेत्' कृते प्रयोजने श्रुतमेवागमयितव्यमिति पूर्वपक्षसूत्रमिदम्। एतस्योत्तरं 'नानर्थकत्वात्' इति** ॥३७॥

( १९—द्रव्यसंस्कारविरोधे द्रव्यस्यैवोपादानाधिकरणम् )

## द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३८ ॥ सि०

संस्कारक्षमकदरोपादाने खदिरविधेर्वैकल्य[1]मात्रत्वेनात्यन्तपीडाभावाद् अक्षमखदिरोपादाने तु संस्कारविधीनामत्यन्तपीडाप्रसङ्गात् प्रतिनिधिरेवोपादेयः। मैवम्। नहि गुणानुरोधेन प्रधानमुपरोद्धव्यं भवति। तेन भवतु संस्काराणामत्यन्तपीडा, न तु प्रधानं तदनुरोधेन किञ्चिदपि पीडयितव्यम्। तस्मादसंस्कृत एव खदिरे पशुं नियुञ्जीतेति ॥ ३८ ॥

( २०—कार्यासमर्थे मुख्यद्रव्ये प्रतिनिधेरेवोपादानाधिकरणम् )

## अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ ३९ ॥ सि०

संस्कारग्रहणस्य प्रत्युदाहरणमेतत्। संस्कारविरोधे सत्यपि श्रुतमेवोपादेयम्। प्रयोजनविरोधे तु श्रुतमप्यनादृत्य प्रयोजनक्षममेवाश्रुतमपि प्रतिनिधातव्यं प्रयोजनार्थत्वाद् द्रव्यस्येति ॥ ३९ ॥

---

१. वैकल्प—क० ग०।

( २१–प्रधानमात्रसमर्थमुख्यद्रव्यलाभे तस्यैवोपादानाधिकरणम् )

## विधिरप्येकदेशे स्यात् ॥ ४० ॥ पू०

ननु 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेन गतमिदमधिकरणम् ? न; व्रीहीणामप्यङ्गाङ्गत्वात्। यद्यपि यागोद्देशेन व्रीहयो विधीयन्ते, तथाप्युत्पत्तिशिष्टपुरोडाशवि[ शाव ]रोधान्न साक्षात्तेषां यागसाधनता, किन्तु पुरोडाशप्रकृतितया। ततश्च व्रीहीणामपि पुरोडाशाङ्गत्वात् स्विष्टकृदिडाप्राशित्रचतुर्द्धाकरणशंयुवाककालभक्षरूपाणां च शेषकार्याणामश्वशफपरिमाणस्य च सर्वेषां पुरोडाशाङ्गत्वाद् नाङ्गप्रधानगुणत्वकृतो विशेषः। तत्राश्वशफपरिमाणस्य शेषकार्याणां च भूयसामनुग्रहाय व्रीहिशास्त्रमेकं बाधितव्यम्। किञ्च, प्रतिनिध्युपादानेऽपि व्रीहिशास्त्रस्य नात्यन्तं बाधोऽस्ति। व्रीह्युपादाने तु शेषकार्याणामत्यन्तलोपः स्यात्। तस्मात् प्रधानाङ्गभूतपुरोडाशजात्यभिव्यक्तिमात्रसमर्थेषु सत्स्वपि व्रीहिषु शेषकार्यविध्यबाधाय नीवारा एवोपादेयाः। भाष्ये च द्व्यवदानग्रहणं प्रधानाङ्गभूतद्रव्योपलक्षणार्थम्।

अत्राभिधीयते–श्रुत्या तावद्यागाङ्गत्वमेव व्रीहीणामवगम्यते, वस्तुतोऽपि तथा। यद्यपि हि पुरोडाशप्रकृतिद्रव्यत्वं व्रीहीणाम्, तथापि तदवयवा एव पुरोडाशतामापन्ना यागद्रव्यं भवन्ति। ते च नीवारेषूपादीयमानेषु विकला भवन्ति। ततश्च प्रधानमेव विगुणं स्यात्, तच्चान्याय्यम्। तस्मात् प्रधानाङ्गभूतपुरोडाशजात्यभिव्यक्तिसमर्थेषु व्रीहिषु सत्सु शेषकार्यानुरोधेन न नीवारोपादानं युक्तम्। भूयांसोऽप्यङ्गविधयो न प्रधानाङ्गबाधनं कर्तुमर्हन्ति, तेनात्र व्रीहीणामेव संग्रहः ॥ ४० ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने

षष्ठस्य तृतीयः पादः ॥

( १–अवत्तहविर्नाशे हविरन्तरोपादानाधिकरणम् )

## शेषाद् द्व्यवदाननाशे स्यात् तदर्थत्वात् ॥ १ ॥ पू०

भाष्यकारीयस्य सन्देहस्य कारणं सन्देहमेकेषां मतेनाह—**यद्याग्नेयचोदना द्व्यवदाननिष्ठा** द्व्यवदानस्यैव यदि यागार्थतां प्रतिपादयति, **ततस्तद्विनाशे शिष्टस्यानाग्नेयत्वाद्** अग्नियागार्हत्वाभावाद् **द्रव्यान्तरमाग्नेयमुत्पाद्यम्** । **अथ तु सकलपुरोडाशनिष्ठा ततः शिष्टस्याप्याग्नेयत्वात् तत एव ग्रहीष्यत इति केचिदेवं संशयमाहुः** । तेनाग्नेयचोदना किं सकलनिष्ठा उत द्व्यवदानमात्रनिष्ठैवेति चिन्त्यत इति । **अन्ये पुनः** सर्वप्रदानाधिकरणन्यायेनैव द्व्यवदानोपसंहारस्य सिद्धत्वाद् **एवं** वक्ष्यमाणप्रकारां चिन्ता**माहुः** । तमेव न्यायं दर्शयति—**'आग्नेयोऽष्टाकपालो भवति'** इति । **यद्यग्निमुद्दिश्य त्यज्यते, एवमस्याग्नेयतोपपद्यते,** नान्यथेति । **एवमन्यथानुपपत्त्या हि कृत्स्नस्य** पुरोडाशस्य **यागार्थता** कल्प्यमाना कल्प्येत । **मध्यपूर्वार्धयोस्तु** **'चतुरवत्तं जुहोति'** इति प्रत्यक्ष**वचनेनैव यागार्थत्वा**त्तन्मात्रेणैवाकृत्स्नसंयोगेऽपि तद्धितसंयोगोपपत्तेस्ततो ग्रहीतव्यमित्यनेन न्यायेन कृत्स्नस्याग्नेयत्वोपपत्ते**रन्यथानुपपत्तिः क्षीयते । अतो मध्यपूर्वार्धयोर्वचनेन यागार्थतायां स्थितताया**मेव हि **चिन्ता**—किं शिष्टादवदेयं न वेति ।

तदा तर्हि शिष्टस्यायागार्थत्वाद् [1]द्रव्यान्तरोत्पादनमेव सिद्धमिति कथं पूर्वपक्षोऽत आह—**मध्यपूर्वार्धावयवोपलक्षितम्** । पुरोडाशस्य यौ मध्यपूर्वार्धावयवौ तदुपलक्षितं तदापा[दपा]दानकं तदवयवभूतमवदानद्वयं **होमसाधनम्** । ततः किमित्यत आह—**नष्टेऽपि मध्यपूर्वार्धावयविनि** । पूर्वं सकलरूपे पुरोडाशे यो मध्यावयवः पूर्वार्धावयवश्च अवदानापादानभूतः, स एवावदानापेक्षयावयवी । तस्मिन् अवदानोद्धरणेन विनष्टेऽपि मध्यान्तरस्य पूर्वार्धान्तरस्य चावदान-

---

१. द्रव्योत्पादन–क० ।

द्वयोपलक्षणत्वेन[1] **विद्यमानत्वात्तत एव पुनरवदेयम्** । **कृत्स्नस्य मध्यपूर्वार्धे** अवदेये न विकल**स्येति चेत्? तन्न, कुतः? अशास्त्रार्थत्वात्**।[2] "मध्यादवद्यति" इत्येतावच्छ्रूयते, न तु सकलस्याऽसकलस्य वा पुरोडाशस्य मध्यादिति । ननु हविर्विनाशे प्रतिनिधित्वेनाज्यमस्ति विहितम्, कथं शिष्टावदानमत आह—**यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरिति**। **कृत्स्नस्य** हविषो **नाशे दोषे वा आज्यस्य प्रतिनिधित्वम्**, हविःशब्दस्य कृत्स्नवाचित्वात्; अपेक्षितविधानाच्च । सकलविनाशे हि हविरन्तरमपेक्षितं भवति । तत्राज्यविधानं दृष्टार्थं भवेत् । द्वयवदानमात्रविनाशे तु शिष्टादेव पुनरवदानसम्भवादनपेक्षितं हविरन्तरम् । तत्राज्यविधानमदृष्टार्थं स्यात्। तच्चान्याय्यम् । तस्मात् कृत्स्ननाश एवाज्यविधानम् । **न चेह कृत्स्ननाशः**, द्वयवदानमात्रनाशात् । तस्माच्छिष्टादवदेयमिति ॥१॥

## निर्देशाद्वाऽन्यदागमयेत् ॥ २ ॥ सि०

विशिष्टस्याविकलस्य[3] पुरोडाशस्य **मध्यपूर्वार्धे** अवदानोपलक्षणत्वेन **निर्दिश्येते**, न तु मध्यपूर्वार्धमात्रम्। **कथम्? प्रमाणवेलायां** शास्त्रप्रवृत्तिवेलायां **यावद्भिरङ्गुष्ठपर्वमात्रैरुपलक्षितो** मध्यावयवः पूर्वार्धावयवश्च **स यागसाधनम्**। एकग्रन्थेनाह—**एवञ्चेत्** कृत्स्नस्याविकलस्य पुरोडाशस्य **मध्यपूर्वार्धे** एवावदानोपलक्षणमिति **शास्त्रार्थ एवायम्**, कृत्स्नस्यैव शास्त्र-

---

1. "मध्यादवद्यति", "पूर्वार्धादवद्यति" इत्यनेन पुरोडाशस्य मध्यभागः पूर्वार्धश्चावदानापादानत्वेन निर्दिष्टः । सोऽङ्गुलिपर्वमात्रस्यावदानस्यावयवीह विवक्षितः । तस्य च सकलस्यावदानं नास्ति, किन्तु तत्संबन्धिनोऽवयवरूपांशमात्रस्यैव । अतोऽवयवीहोपलक्षणमुक्तः ।
2. 'शास्त्रार्थत्वात्' पूनामुद्रितः पाठोऽसंगतः ।
3. अविकलस्येति । इदं व्याख्यानपदम् । एतदनुरोधाच्च मूले 'विशिष्टस्य'इत्येव व्याख्येयपदं युज्यते, न तु यथा पूनामुद्रितं तथा 'विशिष्य' इति ।

वेलायामवगतत्वात् । **इतरथा** यदि कृत्स्नपुरोडाशमध्यपूर्वार्धलक्षितमवदानद्वयं शास्त्रार्थ इति न गृह्येत, ततो **द्व्यवदानानाशे** सतीतरत् सर्वं तस्योप**लक्षणम्** **नाशे तु** सत्युप**लक्षण**भूतमेव, शिष्टं पुनरवदीयमानमुपलक्ष्यं प्रसज्येतेति **वैरूप्यं** शास्त्रस्य स्यात् । भवत्विति चेदत आह—**एकरूपेण च**[1] **शास्त्रेण भवितव्यम्** । **तस्माद्यागाङ्गभूतद्व्यवदानोपलक्षणत्वेनैवेतरन्निर्दिश्यते,** न तु स्वयं यागाङ्गतया । तस्मान्न शेषादवदेयम् । एवञ्च द्व्यवदानमात्रनाशेऽपि हविरन्तरस्यापेक्षितत्वादाज्यस्य प्रतिनिधित्वं युक्तम् ।

यदा पुनर्न द्व्यवदानमात्रं यागार्थं तद्धि तन्निर्देशेन [तद्धितनिर्देशेन] सकलस्य यागार्थत्वप्रतीतेः, "चतुरवत्तं जुहोति" इत्यस्य चोत्पत्तिवाक्याप्राप्तप्रक्षेपाधिक्यमात्रविधित्वेनोपपन्नस्य तदुपसंहारसामर्थ्यादिति वार्त्तिककारीयं दर्शनमाश्रीयते, तदा शिष्टस्यापि यागार्थत्वेन तत एवावदानं प्राप्नोतीति कथमिदमधिकरणं नेतव्यम् ? उच्यते—तथापि यागस्य [2]यथासिद्धसकलपुरोडाशसाध्यत्वाद् द्व्यवदानमात्रनाशेऽपि विगुणत्वात् पुरोडाशस्य हविरन्तरमुत्पाद्यमेवेत्यदोषः । तस्माद् द्व्यवदाननाशे हविरन्तरेणैवाधिकारः ॥ २ ॥

( ३—शेषकार्यार्थमवत्तद्रव्यनाशे शेषकार्यलोपाधिकरणम् )

## अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥ सि०

पूर्वपक्षमाक्षिपति—**स्विष्टकृदन्यप्रयुक्तस्य**[3] द्रव्यस्य ग्राहकः । ततः किमित्यत आह—**एवं चेत् सन्निहितं परकीयं ग्रहीष्यति** । यच्चानेन गृहीतं तद्विनष्टम् । न चान्यस्य द्रव्यस्यासौ प्रयोजक इति लोप एव सिद्ध इति **किमतोऽधिकरणात् कृत्यम् ? उच्यते**—यत एवायमप्रयोजकः, अत एव पुनः

१. 'च' क० नास्ति ।

२. 'यथासिद्ध इत्यतः पूर्वं 'तदुपसं' इति ख० अधिकः पाठः ।

३. स्विष्टकृदग्निप्रयुक्तस्य—क० ख० ग० ।

पूर्वपक्षवादी मन्यते। तथाहि—**यदि प्रयोजकः स्यात्** ततो **यादृशं प्रयुक्तं तादृशस्याभावात्** पूर्वाधिकरणवन्न **पुनः शिष्टादवदेयं** स्यात्। हविरन्तरमेव त्ववैगुण्यार्थमुत्पाद्येत। इदं पुनरप्रयोजकं द्रव्यसंस्कारार्थत्वात् स्विष्टकृतः। **यत्तु द्रव्यं संस्कार्यं तस्य** कस्मिंश्चिद्देशे विनष्टेऽपि शिष्टस्य **विद्यमानत्वात् पुनरवदानेन संस्कारः किमिति न क्रियते ? न चात्र** प्रधानवत्पुरोडाशावयवी स्विष्टकृदव**दानोपलक्षणार्थः। किं तर्हि ? संस्क्रियतेऽसाववयवी** स्विष्टकृता। संस्कार्यश्च संस्कारं पुनः पुनरपि प्रयुङ्क्त इति। **एवं प्राप्ते ब्रूमः—विशिष्टो देशः** सकलपुरोडाशोत्तरार्धावयवरूपः स्विष्टकृद्यागस्य **संस्कार्यत्वेनापेक्षितः**, न तु सकलोऽवयवी, "उत्तरार्द्धात् स्विष्टकृतेऽवद्यति" इति वचनाद् अवशिष्टस्येडाभक्षणादिप्रतिपत्त्यन्तरगृहीतत्वात्। **तस्य** च विशिष्टस्य **देशस्याभावात् कः प्रतिपत्तिं प्रयुञ्जीत। अपूर्वमिति चेत् ?** उभयार्थो हि स्विष्टकृत्, न केवलं द्रव्यप्रतिपत्त्यर्थः। अतः प्रतिपाद्याभावेऽप्यपूर्वमेव स्विष्टकृद्यागं प्रयुञ्जीतेति। तन्न, कुतः ? **द्रव्यप्रतिपादनानुनिष्पाद्यत्रापूर्वम्।** उक्तं ह्येतत् "एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्" इत्यत्र यथा परप्रयुक्तद्रव्यकयागसाध्यमित्यतः **तदपूर्वं** स्वयम**प्रयोजकं** द्रव्यस्य, तदभावे च यागस्याप्यशक्यत्वादप्रयोजकमेव। तदेव दर्शयति—**द्रव्यप्रतिपत्तिः चिकीर्षिता।** प्रयोजिकेत्यर्थः, **न तु यागनिर्वृत्तिः।** एवमिडादीनामपि। तस्माच्छेषभाजां स्वार्थतयाऽवत्ते नष्टे सर्वेषां न शेषादवदेयम्, किन्तु लोप एव तेषामित्यध्याहृत्य सूत्रं व्याख्येयम्। इदं च स्विष्टकृतो लोपाभिधानं न्यायप्राप्तमुक्तम्, वचनात्तु तस्याज्येन समापनमिष्टमेव। इडादीनामेव तु लोपः। स्विष्टकृदर्थावत्तस्यापि हविःशब्दाभिधेयत्वात्, तन्नाशे दोषे चाज्यस्य प्रतिनिधित्वं युक्तम्। ननु सत्यामपेक्षायामाज्यं प्रतिनिधीयेत। न च स्विष्टकृतः प्रतिपत्तित्वात् प्रतिपाद्यद्रव्यनाशे द्रव्यान्तरमपेक्षितमिति कथमाज्यं प्रतिनिधीयते ? सत्यं प्रतिपत्त्यर्थं नापेक्षते, अपूर्वसिद्ध्यर्थं त्वपेक्षित[क्षत] एव। एतदपि हि स्विष्टकृतः प्रयोजनमेव। यद्यपि चैकदेशद्रव्यत्वादसौ न स्वयं द्रव्यं पुरोडाशमुत्तरार्धं वा प्रयोक्तुं क्षमः।

तथापि [1]तावदपेक्षत एव। तावता च साधारणविहितं नैमित्तिकमाज्यं किमिति न गृह्णाति। तस्मात्तस्याज्येन समापनम्। इदमेव चाश्रयिष्वपूर्वप्रतिपादनस्य प्रयोजनमित्युक्तम्। तथा च परिसंख्याफलदर्शनावसरेऽभिहितम्[2]—"हविःशब्दाभिधेयनाशदोषनिमित्तचोदिताज्यसाधनीयस्विष्टकृद्व्यतिरिक्तानामिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षरूपशेषकार्याणामप्रयोजकत्वात् प्रतिपत्तित्वाच्च तद्द्रव्यनाशे दोषे च लोप एव युक्त इत्यध्याहृत्य व्याख्यास्यते" इति ॥ ३ ॥

( ३–शेषभक्षणे ऋत्विङ्नियमाधिकरणम् )

## निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥ पू०

शेषकार्यप्रसङ्गायातमिदमधिकरणम्। पूर्वपक्षमाह—**भक्षो निर्वर्तयितव्यः। तस्मिन्** सर्वस्मिन् **यथासमाख्य**मध्वर्य्वादिषु **कर्तृषु प्राप्तेषु** "यजमानपञ्चमा इडां भक्षयन्ति" इति वचनेन विधिनियमार्थत्वासम्भवात्, यजमानस्यापि कर्तृत्वादेव प्राप्तेस्तद्विधानार्थतया[ताया अ]प्यसम्भवात् **परिसंख्या क्रियते—इडामेवैते भक्षयेयुरिति**। तस्मादितरेषु भक्षेष्वप्रकृताः कर्तारः स्युः। नन्वन्यत्रापि प्रकृता एव निर्दिश्यन्ते कर्तारः। चतुर्धाकरणे हि 'इदं ब्रह्मणः' इत्यादि[3]व्यादेशसामर्थ्यादृत्विजामेव भक्षः। तथा प्राशित्रे "ब्रह्मणे परिहरति" इति वचनात्। अतः कथमप्रकृतानां कर्तृत्वमत आह—**अनिर्ज्ञातकर्तृकेषु शंयुवाककालभक्षेषु पूर्वपक्षोत्थानम्**। केचित्तु वचनान्तरेण भक्षान्तराणां कर्तृविशेषो न निर्ज्ञात इति कृत्वा चिन्त्यत इति व्याचक्षत इति ॥ ४ ॥

## सर्वैर्वा समवायात् स्यात् ॥ ५ ॥ सि०

यदुक्तं परिसंख्यार्थं वचनमिति, तदयुक्तम्; यजमानविधिपरत्वे सम्भवति परिसंख्यापरत्वस्यान्याय्यत्वादित्याह—**द्रव्यसंस्कारत्वाद्** भक्षाणाम्। तत्र

---

१. तदपेक्षते—क० ।

२. 'अभिहितम्' इत्यनन्तरं 'स्विष्टकृतः' इत्यधिकः पाठः—ख० ।

३. व्यपदेश—ग० ।

कर्तृत्वेन ऋत्विजामेव कर्मकराणां न्यायतः प्राप्तेर्यजमानोऽप्राप्तो विधीयते। यदि हि पुरुषसंस्कारा भक्षाः स्युः, ततो वपनादिष्विव प्राप्त एव यजमान इति न विधीयेत। द्वितीयानिर्दिष्टद्रव्यसंस्कारास्तु भक्षाः। तस्मात्तत्राप्राप्तो **यजमानो विधीयते**। कथं तर्हि भाष्यकारेण पुरुषसंस्कारकत्वमुक्तमत आह—**वाक्यप्रकरणसमाख्याभिः प्रमाणैरेभिरेव ऋत्विग्भिर्भक्षयितव्यमित्यस्यापि कर्तृनियमस्य दृष्टमेव प्रयोजनम्**। तथाहि—**कर्तॄणामपि कियत्यपि तृप्तिरुपजायते**। अतस्तन्नियमप्रयोजनं क्रियाप्रयोजनानुनिष्पाद्यपेक्ष्याह—**तद्धि भक्षणं पुरुषसंस्कारार्थमिति**। तथा च स्वयमेवान्ये कर्मकरत्वेनैव प्राप्ता इति वदन् गुणभावं तेषां भक्षणे दर्शयति। **याज्ञिकैस्तु** क्रियाप्रयोजनं द्रव्यसंस्कारः, नियमप्रयोजनं तु कर्तृसंस्कार इति **विवेकमगृहीत्वा भक्षाः पुरुषसंस्कारार्था इत्युक्तम्** ॥ ५ ॥

( ४–एकदेशभेदनादावपि प्रायश्चित्ताधिकरणम् )

## अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥ सि०

किं कृत्स्नभिन्न एव प्रायश्चित्तम्, उतैकदेशभिन्न एव, किं वोभयत्रापीति त्रयः पक्षाः। तत्रोपन्यासावसरे भाष्यकारेण द्वितीयः पक्षोऽनुपन्यस्तोऽप्युत्तरसूत्रे परिग्रहाद्दर्शनीयः। तत्र प्रथमं पक्षं मन्दत्वाद् भाष्यकारेणानुपपादितमुपपादयति—**कृत्स्नभिन्न एव प्रायश्चित्तम्। कुतः?** उत्तरम्—**तस्य भिदुरद्रव्यस्य परस्परसंघर्षणादवश्यम्भावी कियानपि मात्रापनयः**। एकदेशभेद इत्यर्थः। ततः किमित्यत आह—**तस्य**। मात्रापनय**स्यावर्जनीयत्वाद् नित्यता** होमस्य **प्रसज्यते**। न चैवमिष्टम्। किञ्च, **भिन्नमिति भिदिक्रियोपसर्जनीभूतम्**। भिदिक्रिया उपसर्जनीभूता यस्य तत् प्रधानभूतं **निष्ठया द्रव्यमभिधीयते**। ततः किमित्यत आह— **तच्च** भेदनमेव**मुपसर्जनं भवति** यद् **यदि कृत्स्नं व्याप्नोति**। नह्यङ्गुलिमात्रे रक्ते 'रक्तो देवदत्तः' इति भवति प्रत्ययः। उपसर्जनं हि विशेषणम्, तच्च व्यवच्छेदकम्। तेन भिन्नमेव

नाभिन्नमिति गम्यते। कृत्स्नभेदे चैवं भवति, एकदेशभेदे त्वेकदेशान्तरस्याभेदाद् भिन्नमभिन्नञ्च स्यात्। तत्र भिन्नमिति विशेषणं न स्यात्। **तस्मान्नैकदेशे भिन्ने होम इत्येवं प्राप्ते ब्रूमः**—यत्तावत् संघर्षणान्नित्यं भेदनं न निमित्तं भवितुमर्हतीति, तत्राह—**संघर्षणे संघृष्टमिति बुद्धिर्भवति, न तु भिन्नमिति। भेदनञ्च कदाचिदेव भवति न नित्यम्। तस्मादेकदेशकृत्स्नभिन्नयोरुभयत्र भिन्नबुद्धेः सम्भवात्**, अनित्यत्वाच्चोभयत्रापि होमः। यदप्युक्तं **भेदनविशिष्टं द्रव्यं प्रधानमिति**, तत्रोच्यते—**विशेषण एव भेदने निमित्तप्रत्यये जाते किमर्थं विशेष्यं यावद् गम्यते।** ननु विशेष्यभूतं द्रव्यमेव शब्देनोच्यते, न तु भेदनमात्रमत आह—**अर्थाद् द्रव्यं** [1]**लक्ष्यते न तु शब्दात्।** विशिष्टाभिधाय्यपि शब्दो द्रव्यस्य नित्यत्वेन निमित्तत्वानुपपत्तेर्विशेषणपरत्वं लोहितोष्णीषवत् प्रतिपद्यते—भेदने सञ्जाते होतव्यमिति। द्रव्यांशस्त्वर्थप्राप्तोऽनूद्यते, न तु शब्दस्तत्परः। **तस्माद्भेदश्चेदुपजातः कृत्स्न एकदेशे वा ततो** [2]**होमः** कार्य इति। एतच्च तत्त्वकथनार्थमुक्तम्, विशिष्टेऽपि च निमित्ते भवत्येवैकदेशे भिन्ने होमः; तत्रापि भिन्नबुद्धेः, बुद्धिलक्षणत्वाच्च वस्तुव्यवस्थायाः। भेदनस्पर्शनादयो ह्येकदेशेऽपि वर्तमानाः [3]स्वानुरक्तबुद्धिं जनयन्ति, रागादयस्तु न जनयन्ति। किं कुर्मः? उपपद्यते च सत्तयैव विशेषणत्वम्। तस्मादुभयत्र होमः॥ १०॥

## न त्वशेषे वैगुण्यात्तदर्थं हि॥ ११॥

द्वितीयपक्षवाद्याह—**एकदेशभेद एव होमः।** कुतः? **भिन्न इति द्रव्यप्रधानो निर्देश इत्युक्तमेव।** तेन तत्परत्वे सम्भवति न विशेषणपरत्वं युक्तम्। निमित्तत्वे च द्रव्यपरत्वासम्भवः। संस्कार्यत्वे तु द्रव्यपरत्वमेव सम्भवति, तदाह—

---

१. लप्स्यते—क० ग०।

२. होमश्च—ख० ग०।

३. स्वानुरक्तां बुद्धिम्—क०।

**भेदनेन द्रव्यदोष**[1] उत्पन्नः। **स होमेन प्रतीसन्धीयते। निर्हृतदोषश्च यागयोग्यं भवति।** तथापि [2]किमिति? आह—**सकलभेदे चायोग्यत्वात्तदर्थो होमः सन्ननर्थकः स्यात्।** ननु सप्तम्या निमित्तत्वमेवोच्यते, न संस्कार्यत्वमत आह—**भिन्न इति सप्तमी द्वितीयार्थे** कल्प्या **भिन्नं द्रव्यं** होमेन संस्कुर्यादिति। तद्यथा 'अगारे गावो [3]वास्यन्ताम्' इत्यत्र गोवासनेनागारं संस्कुर्यादिति वाक्यार्थो भवति, तद्वदिहापि। किमर्थं पुनर्लक्षणाश्रयणमत आह—**एवञ्च** संस्कार्यत्वे सति **वाक्येन होमस्य** प्रयोजन**सम्बन्धः सन्निपत्योपकारिता च** लभ्यते। **निमित्तत्वे तु प्रकरणेन** होमस्य याग**सम्बन्धः। स च दुर्बलो** वाक्यसम्बन्धात्। **किञ्चारादुपकारकः सन् होमोऽसंयुक्त उपकुर्यात्, अयमपि दोषः** सम्भवति संयुक्तोपकारित्वे। तस्मात् संस्कारत्वादेकदेशभेद एव होम इति॥ ११॥

## स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्नहि तस्य गुणार्थेनानित्यत्वात्॥ १२॥

न भिन्नसंस्कारार्थो होमः, नित्यानित्यसंयोगविरोधात्[4]। तथा हि—**कपालार्थे होमे** सति निमित्तसंयोगाभावात्, **अश्रुतनिमित्तकानामङ्गानां दर्शपूर्णमासापूर्वमेव** नवमाद्यन्यायेन **निमित्त**मनुष्ठापकमिति। **यावद्दर्शपूर्णमासापूर्वं निमित्त**भूतमनुष्ठेयं **तावन्नैमित्तिकेन** तदनुष्ठाप्येन होमेन **भवितव्यम्।** कुतः? **निमित्तेन** दर्शपूर्णमासापूर्वेण नित्यवत्**प्रयोजितत्वाद्धोमस्य।** ततः किमित्यत आह—**भेदनञ्च तत्र कदाचित्,** न तु नित्यम्। तथापि किमित्यत आह—**तत्रोपकार्यस्य** भिन्नस्या**नित्यत्वात् प्रयोजकस्य**

---

१. द्रव्ये दोषः–पु. मु. पाठः।

२. किमित्यत आह–क०।

३. विवास्यन्ताम्–ख०।

४. विरोधप्रसङ्गात् ख० ग०।

चापूर्वस्य **नित्यत्वान्नित्यानित्यसंयोगविरोधः**। नित्यवदनुष्ठेयस्यानित्यार्थत्वायोगात्, अनित्यार्थत्वे च न नित्यवदनुष्ठानमिति विरोधः। **भेदनस्य तु निमित्तत्वे** सति **भिन्नेन** निमित्तेन **होमे** प्रयुक्ते सत्यपूर्वस्य कृते इतरस्य **तादर्थ्यमित्यदोषः**। निमित्तप्रयुक्तं हि नैमित्तिकम्। [1]**निमित्तेन होमे प्रयुक्ते** [2]**प्रयोजकं** कर्माङ्गं भवति, नासतीति नित्यवदनुष्ठानप्रसङ्गाभावात्, नित्यानित्यसंयोगविरोधदोषो न प्रसज्यते। **सप्तमी च निमित्तत्वेन यथाश्रुता** भवति, संस्कार्यत्वे तु लक्षणा स्यात्। तस्मान्निमित्तमेव भिन्नं न संस्कार्यमिति। पूर्वोक्तस्यैव व्यतिरेकमाह—**निमित्ततादर्थ्ययोर्नित्यत्वादस्ति सम्बन्धः**। निमित्तशब्देनानुष्ठापकमुच्यते, तादर्थ्यशब्देन च फलम्, यत्रानुष्ठापकं फलञ्च नित्यं भवति तत्र तयोरेकेन कर्मणा सम्बन्धः सम्भवति। **यथा जीवनं निमित्तं होमं प्रयुङ्क्ते। स च** होम उपात्तदोषोपघातार्थः। **तत्र जीवनस्य पुरुषदोषस्य च** पूर्वोपात्तस्य सर्वदा **विद्यमानत्वादविरुद्धः सम्बन्धः**। **द्वयोरपि** प्रयोजकफलयोर**नित्ययोरस्ति सम्बन्धः**। **यथा ब्रह्महत्याद्यनित्यं** प्रायश्चित्त**निमित्तं पुरुषदोषश्चा**नित्यः। **तत्र प्रायश्चित्तं ब्रह्महत्याप्रयुक्तं दोषनिर्घाताय** चेति नास्ति विरोधः। **तस्मादुपकार्ये** फले यावत्प्रयोजकं **विद्यमानेऽस्ति सम्बन्धः**। **इह तूपकार्यं** भिन्नं **कदाचित्**, प्रयोजकं त्वपूर्वं नित्यमिति विरोधः। अत्र भाष्यम्—**न शक्यं** [3]**नित्यस्योपकर्तुमि**त्यनुभाष्य व्याचष्टे—**होमो न शक्नोति नित्यमुपकर्तुम्**। कुतः? **उपकार्यस्य** भिन्नस्य नित्यम**भावात्**। **तेन** होमेन नित्यमुपकर्तुमशक्नुवता। नित्यमुपकुर्यादिति वचनं प्रलाप इति भाष्यं **दर्शपूर्णमासापूर्वं ब्रवीति**। कथं ब्रवीतीत्यत्राह—**नित्यमुपकुर्यादिति**। एवं होमं **प्रयुञ्जानमपूर्वं** ब्रवीतीत्यनुषङ्गः। निमित्ताभावे हि नित्यवदङ्गत्वावगमात् स्वाङ्गभूतो होमोऽपूर्वेण नित्यमुप-

---

१. निमित्तेन होमे प्रयुक्ते–क० ग० नास्ति।
२. निमित्ते कर्माङ्गम्–क० ग०।
३. नित्यं येनोपकर्तुम्–क०।

कुर्यादित्येवं प्रयुज्येत। तेनैवं प्रयुञ्जानमपूर्वमनेन भाष्येण कथितमिति। तस्मान्नित्यवत्प्रयुक्तस्यानित्यार्थत्वानुपपत्तेः **कपालविशिष्टं भेदनं निमित्त**मिति भिन्नमात्रे होमः ॥ १२ ॥

## गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥

इतश्च न भिन्नार्थो होमः। होमभिन्नयोर्द्वयोरपि प्रधानार्थत्वे संभवत्यन्योन्यार्थत्वायोगादिति सूत्रार्थः। तत्र कथं निमित्तपक्षे द्वयोः प्रधानार्थत्वम्? नहि निमित्तस्य क्रतुशेषत्वमस्तीत्याशङ्क्याह—**प्रकरणात् प्रधानार्थो होमः**[१]। **भिन्नमपि होमं प्रयुञ्जानं प्रणाड्या तदर्थमेव**। अतो न भिन्नार्थो होमः। ननु प्राकरणिकप्रधानार्थत्वबाधेन वचनाद् भिन्नसंस्कारार्थता युक्ता, अत आह—**न च कपालार्थत्वेन होमस्य प्रतिपादकं वचनमस्ति**। कुतः? 'भिन्ने जुहोति' इत्यत्र तादर्थ्यप्रतिपादिकाया **द्वितीयाविभक्तेरभावात्**। **न च भिन्नस्य प्रत्यक्षतो दोष उपलभ्यते, येना**सत्यामपि द्वितीयायां दृष्टार्थत्वादेव **दोषनिर्घातार्थो होमः स्यात्**। तस्मान्न भिन्नार्थो **होमः**। अथासत्यपि होमस्य भिन्नार्थत्वे भिन्नस्यैव सप्तमीश्रुत्याधारत्वेन होमार्थत्वात् कृत्स्नभिन्नस्य चाधारत्वायोगादेकदेशभिन्न एव होम इत्युच्यते, अत आह भाष्यकारः—"**न च भिन्नमाधारत्वेनोपदिश्यते**" इति। तन्न। पूर्वमेव न गुणो गुणार्थो भवितुमर्हतीति सिद्धे किंनिबन्धनेयमाशङ्का? अत आह—**श्रुतिसम्भवमात्रेणोपन्यस्यते**। **सम्भवति हि सप्तमीश्रुतिर्निमित्त आधारे च**। तेन द्वितीयाया अभावाद् मास्तु प्राधान्यम्। सप्तम्यां तु गुणभावः किमिति न भवतीति। निराकरणभाष्यमर्थतोऽनुभाषते—**आधारः सन्नाग्नेयादीनामेव** प्रकरणादङ्गं **स्यात्**, **तेषामेव विपरिवर्तमानत्वात्**[1]। **न त्वङ्गानाम्**, प्रकरणाभावात्। **न** चापि **कर्मान्तरम्**, विशिष्टविधेरन्याय्यत्वात्। तत्र **आहवनीयसंयोगो बाध्येतेति**।

---

1. विपरिवर्तमानत्वादिति। बुद्धाविति शेषः। बुद्धौ संनिहितत्वादित्यर्थः।

१. 'होमः' ख० ग० नास्ति।

नन्वाहवनीयस्यापि विधानात् कथमेकान्ततो बाधाभिधानमत आह—**पाक्षिकं बाधमनेनाह, न तु नित्यम्**। विकल्पेऽपि हि पक्षे बाधः स्यात्। स चान्याय्य इत्यभिप्रायः। परस्तु **बाधमभिप्रेत्य** अङ्गीकृत्यैवाह—**वचनाद्विकल्प इति चेत्**। वचनबलाद्धि पाक्षिको बाधो व्रीहियवादिष्विव न दोष इति। इदं विकल्पाभिधानमाक्षिपति—**अयुक्तोऽयं विकल्पः**। कुतः? **भिन्नस्य प्रकरणसम्बन्धादाहवनीयस्य चानारभ्याधीतत्वात्**। **तद्यथा** प्रकरणसम्बन्धेन [संबद्धेन] **पाञ्चदश्येन साप्तदश्यम**नारभ्याधीतं **बाध्यते, एवमिहा**प्याहवनीयस्य भिन्नेन बाध एव युक्तो न तु विकल्पः। **किञ्चाहवनीयस्यान्यत्र** होमान्तरेष्वपि **कृतार्थत्वाद् भिन्नस्य तु** प्रकृतहोमानुवादेन विधीयमानस्यान्यत्रानवकाशत्वात् **तदुपमर्देनैव** [1]**आहव**नीयोपमर्देनैव भिन्नस्य पदवन्निवेशो न्याय्यः। **तस्माद्** भिन्नस्याधारत्वे सत्याहवनीयस्यैकान्ततो बाधः स्यादेवेति **विकल्पाभिधानं** भाष्यकारेणाभ्युपेत्यवादेनोक्तम्। विकल्पोऽपि सत्यां गतावयुक्तः। अस्ति च गतिर्निमित्तत्वेनापि सम्भवादिति।

**केचिदाहुः—युक्त एवायं विकल्पः**। **उभयो**र्भिन्नाहवनीययो**र्वाक्येन जुहोतिसम्बन्धात्**। ननु भिन्नस्य [2]प्रकरणमस्तीत्युक्तमत आह—**न प्रकरणात् किञ्चिदभ्यधिकं** लभ्यते, वाक्यबलीयस्त्वात्। पाञ्चदश्यसाप्तदश्ययोस्तर्हि कथं बलाबलम्, अत आह—**तत्र** हि **सामिधेनीसम्बन्धे** संख्ययो**रानर्थक्यादपूर्वसम्बन्धोऽवश्यमेषितव्यः**। **तत्रैकस्य** पाञ्चदश्यस्य **करणेना**पूर्वसम्बन्धः **क्लृप्तः**। **इतरस्य** तु साप्तदश्यस्याव्यभिचरितक्रतुसम्बन्धसामिधेनीद्वारेणापूर्वसम्बन्धः **कल्प्य इत्यपूर्वसम्बन्धविप्रकर्षात् पाञ्चदश्येन साप्तदश्यं बाध्यते**। नन्वेवं साप्तदश्यशास्त्रमनर्थकं स्यात्? नेत्याह—विकृतिषु **कृतार्थत्वात्**। किञ्च, **तदर्थत्वे** विकृत्यर्थत्वे **च न शास्त्रं नियमेन कारणम्**। **कुतः**?

1. 'आहवनीयोपमर्देनैव' क० नास्ति।
2. 'अस्तीत्युक्तम्' ख० नास्ति।

**अननुग्राह्यत्वात् शास्त्रस्य** । नहि प्रमाणानुग्रहार्थः प्रेक्षावतां प्रयासः, किन्तु समीहितप्राप्त्यर्थः । तस्मात् **प्रमाणाद्यस्य बाधो गम्यते स बाध्यते** । गम्यते च साप्तदश्यस्य बाधः । तेन तत्प्रकृतिविषये बाध्यते । विकृतिसम्बन्धोऽपि च तस्य प्रमाणबलादेव, न शास्त्रानुग्रहार्थ इति । **इह तु जुहोतिशब्दः समानो** भिन्नस्याहवनीयस्य च । तथा**धिकरणविभक्तिश्च सप्तमी** समानैव । **तस्माद्विकल्पः** । नन्वेवं **'पदे जुहोति'** इत्यत्रापि सप्तमीजुहोतिशब्दयोस्तुल्यत्वात् पदेन **नाहवनीयस्य बाधः** स्यात् ? **उच्यते—उत्पत्तिवाक्यशिष्टेन वाक्यान्तरशिष्टं बाध्यते** । **पदं चोत्पत्तिवाक्यशिष्टम्**, वाक्यान्तरशिष्टस्त्वाहवनीयः । तेनासौ पदेन बाध्यते । एवं तावत् पदवाक्यालोचनया बाध उक्तः । आहवनीयवाक्यमपि न तत्र विदधातीत्याह—**किञ्च, होमेनाधारस्यानपेक्षितत्वाद् वाक्येना**सावाधारो **नीयमानो ये शुद्धा** उत्पन्नाग्निहोत्रादयो **होमास्ताननूद्याहवनीय आधारो विधीयते; न तु ये** पदहोमादय उत्पद्यमाना **एवाधारकलुषितास्ताननूद्य,** तेषामयोग्यत्वात् । यदि त्वाधारो होमेनाक्षिप्येत, ततस्तेन सामान्यत आहवनीयस्याप्याक्षेपात् कदाचित् पदहोमेऽप्याहवनीयः शङ्क्येत । न त्वेवमस्तीति । अत्र तूभयोर्भिन्नाहवनीययोरुत्पन्नवाक्यशिष्टत्वान्न बलाबलविशेषः, नापि सामान्यविशेषभावः । उभयत्रापि सामान्यवचनस्यैव जुहोतिशब्दस्य श्रवणात् । तस्मादाधारत्वे सति भिन्नस्याहवनीयस्य च विकल्पः स्यादेव । इदं तु परमत एव विकल्पाभिधानम्, असत्यप्यस्मिन्[1] कारणे सावकाशनिरवकाशत्वेनैव बलाबलसिद्धेः । तथा हि—निरवकाशं प्रमीयमाणमेवेतराबाधनेनासंभवन्निवेशत्वाद् बाधकत्वेनैव स्वप्रमाणेन प्रतीयते । सावकाशं त्वन्याबाधेनाप्यन्यत्र विशेषे निवेशसंभवान्न बाधते । तस्मान्निरवकाशेन भिन्नेन सावकाशस्याहवनीयस्य बाधः स्यादेव । निमित्तत्वेन तूपपत्तेर्न बाधो युक्त इति निमित्तस्याधिकारणत्वात् सर्वस्य तद्गतस्य विचारस्य लक्षणासङ्गतिः स्पष्टैवेति नोच्यते ॥ १२ ॥

---

१. अन्यस्मिन्—ख० ।

( ५–सर्वपुरोडाशक्षामे प्रायश्चित्ताधिकरणम् )

## क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ।। १७ ।। सि०

पूर्वेण न्यायेन क्षाणमपि कृत्स्नैकदेशवर्ति निमित्तं स्यात् । नन्वेकदेशक्षाणस्यावर्जनीयत्वेन नित्यत्वान्निमित्तता न घटते, तत्र यच्छब्दावगतनिमित्तत्वबाधः स्यात् । उच्यते—अवर्जनीयक्षाणातिरेकेण भवत्क्षाणमेकदेशवर्त्यपि भवत्येव निमित्तमित्युभयत्रापि नैमित्तिकं यज्ञान्तरं कर्तव्यमिति ।

यद्वा—एकदेशक्षाणमेव निमित्तं न सर्वक्षाणम्, "यदा तद्धविः सन्तिष्ठते" इति तेनैव हविषा समाप्तिदर्शनात् ; कृत्स्नक्षाणे च हविषा समाप्त्ययोगात् । अत्रोच्यते–सर्वदाह एव प्रायश्चित्तम्, एकदेशक्षाणस्यावर्जनीयत्वान्निमित्तत्वानुपपत्तेः । न च तत्रेयत्ताऽवगन्तुं शक्यते—इयतोऽवश्यंभावि क्षाणं नेयत इति । अथ यावति क्षाणेऽक्षाणमिदमिति लौकिका मन्यन्ते, ततोऽधिके एकदेशेऽपि क्षाणे प्रायश्चित्तमित्युच्यते । तन्न; तस्यैवानियतत्वात् । केचिद्धि पादमात्रमर्धं वा क्षाणं मन्यन्ते । अन्ये तु ततः परमप्याचक्षते । तस्मादेकदेशक्षाणस्य निमित्तत्वानुपपत्तेः सर्वक्षाणमेव निमित्तम् । [1]"यदा तद्धविः सन्तिष्ठते' इत्येतदपि गत्यन्तराभावाद् लक्षणया बहुव्रीह्याश्रयणेन वा मुख्यैव वृत्त्या प्रक्रान्तकर्मपरिसमापनपरमेव व्याख्येयम् । तस्यैव च संस्था संभवति, न तु हविषः । तस्मात् कृत्स्नक्षाणे प्रायश्चित्तम् ॥१७॥

( ६–हविरार्त्यधिकरणम् )

## यथाश्रुतीति चेत् ।। २२ ।। पू०

ग्रहाधिकरणेन सहास्यापौनरुक्त्यमेकेषां मतेनाह—प्रत्ययः प्रातिपदिकार्थमवश्यमुच्चारणीयः । नहि केवलं प्रातिपदिकमसाधुत्वात् स्वार्थे वर्तत इति हेतोः । तेनाविवक्षितस्वार्थमप्येकवचनं प्रातिपदिकप्रयोगार्थतया कर्मत्व-

---

1. यदा तद्धविरित्यतः पूर्वं 'यत्तु' इति क० ख० पुस्तकयोः पाठो दृश्यते । तत्र 'सन्तिष्ठत इति' एतदन्तं पृथग् वाक्यं कृत्वा तस्य 'एकदेशक्षाणस्यैव निमित्तत्वसमर्थनाय वाक्यमुदाहृतम्' इति शेषपूरणे व्याख्येयम् ।

प्रतिपादनेन च प्रयोजनवत्त्वान्नानर्थकम्। इह तूभयपदस्य न हविर्विशेषणत्वादन्यदुच्चारणे प्रयोजनमस्ति। तस्माद्विवक्षितम्। अपरे त्वाहुः— द्वितीयया ग्रहस्य प्राधान्यं प्रतिपादयन्त्या संमार्गस्य तादर्थ्ये प्रतिपादिते संमार्गः कथं विनियुज्यत इति तत्र चिन्ता—किं ग्रहमात्रे, उतैकस्मिन् ग्रह इति। इह तु किमुभयेनैव हविषाधिक्रियते, उतैकेनापीति। तेन तत्र विनियोज्यविषयभूतस्य शेषिणो विशेषणस्याविवक्षा प्रतिपादिता। अत्र त्वधिकारहेतुभूतस्य निमित्तस्याविवक्षितविशेषणत्वं प्रतिपाद्यत इत्यपौनरुक्त्यम्। एतदेव विवृणोति—द्वितीया संमार्गस्य तादर्थ्यं प्रतिपादयन्ती किं ग्रहमात्रे प्रतिपादयति, उतैकस्य ग्रहस्येति तत्र चिन्ता। तस्मात्तत्र शेषभावश्चिन्तितः—किं विवक्षितविशेषणे शेषिणि शेषो विनियुज्यते किं वा नेति। इह त्वधिकारश्चिन्त्यते—किं हविर्मात्रमार्तमधिकारकारणमुतोभयत्वविशिष्टमिति। एवं प्रकारद्वयेन कैश्चिदपुनरुक्ततोक्ता।

सा चेयमयुक्ता। कथम्? तत्र प्रथमस्य पक्षस्य तावद्दूषणमाह— 'यस्य पुरोडाशौ क्षायतः' इति। इदमप्यत्रोदाहरणम्, निमित्तत्वात्। ततः किमित्याह—अत्रापि[1] च न विभक्तेर्वचनमेवैकं प्रयोजनमिति ग्रहन्यायेन द्वित्वाविवक्षा सिद्धैवेति पुनरुक्ततैव स्यात्। ननु नैतदत्रोदाहरणम्, ग्रहाधिकरण एव त्वेतदुदाहरणमिति तत्रैवोक्तम्। इह तु यत्र पदान्तरेणैव विशेषणमुपात्तम्, तदेवोदाहरणमिति कथं पौनरुक्त्यमत आह—न च[2] न[3] विभक्तेर्वचनमेवैकं प्रयोजनमित्यस्य हेतोः प्रसादात्तत्राविवक्षा विशेषणस्य, किन्तु उपचयत्वेन तत्रायमायातः। वाक्यभेद एव तु मूलहेतुः, स

---

१. 'तत्रापि' इति पूनामुद्रितमूलपाठः

२. 'विभक्तेः पुरस्ताद् वचन' इत्यधिकं ख०।

३. 'न वा' इति पूनामुद्रितमूलपाठः।

चात्रापि तुल्य इति नास्त्यपौनरुक्त्यम्। द्वितीयं पक्षं दूषयति—**इत्थं विनियुज्यते, इत्थमधिकार इति विकल्पमात्रम्**। विशेषमात्रम्, न त्वौपयिकम्। शेषिणोऽपि ह्युद्देश्यत्वादेवाविवक्षितविशेषणत्वम्, न तु शेषित्वात्। तच्चाधिकारहेतोरपि निमित्तस्याविशिष्टमिति नानेनापौनरुक्त्यसिद्धिः।

**तस्मादन्यथा वर्ण्यते**। **निमित्तमात्रमिह चिन्त्यते**—किमुभयार्त्तिर्निमित्तमुत हविर्मात्रार्तिरिति। निमित्तमेव कीदृशमिति चिन्त्यते, न तु निमित्तस्य सतो [1]विशेषणविवक्षाविवक्षे। ततः किमिति। आह—**तच्च निमित्तमुद्दिश्यते**। तथापि किमिति? अत आह—**उद्दिश्यमानस्य च विशेषणमविवक्षितमिति** ग्रहाधिकरणे **स्थितमेव**। न तूद्देश्यमप्यविवक्षितमिति। तदिहैवं चिन्ता—**उभयपदं किं निमित्तसन्निपात्युत नेति**। एकत्वस्य हि संस्कार्यत्वं न संभवति, अमूर्तत्वादकार्योपयोगित्वाच्च। न चैकत्वविशिष्टस्य ग्रहस्य द्वितीयया शेषित्वमभिधीयते। संख्याप्रातिपदिकयोर्हि परस्परमसम्बध्य कारकेणैव कर्मत्वादिना प्रथममन्वयः। तत्र कर्मत्वेनान्वितयोर्द्वयोः क्रियां प्रति प्रधानत्वात् तया वशीकारासंभवाद् नारुण्यैकहायन्यादिवत् परस्परनियमसिद्धिः। तत्रैकमात्रे ग्रहमात्रे च संमार्गान्वयान्नैकत्वविशिष्टस्य शेषिता। तेन ग्रहमात्रमेवोद्दिश्य संमार्गो विधीयते। तस्य तु किं केनचिदपि प्रकारेणैकत्वं विशेषणं संभवत्युत नेति तत्र चिन्त्यते। इह तु किमुभयं निमित्तमुत हविर्मात्रमिति विचारः। तत्र **पूर्वपक्षवादी मन्यते—यथार्तिहविषोः श्रवणा**दुभयोर्मिलितयोर्निमित्तत्वा**त्तयोर्द्वयोरन्यतरस्याप्यभावे नास्ति निमित्तम्, एवमुभयपदश्रवणात्तदभावेऽपि नास्त्येव निमित्तम्** त्रयाणामपि मिलितानां निमित्तत्वात्। इतरथार्तिहविषोरपि मेलनं न विवक्ष्येत। ततश्चार्तिमात्रं हविर्मात्रं वा निमित्तं स्यात्। अथ तयोः संसृष्टयोर्निमित्तत्वं स्यात्। तथा सत्युभयपदश्रवणात् त्रयाणामपि मिलितानां निमित्तत्वं युक्तम्। **अथवा यस्येत्यस्मात्** पूर्वपठिताद्यद्वृत्तात्

1. विशेषणविवक्षे—क०।

**सामान्येन** निमित्तबुद्धावुपजातायां[1] **किं यस्य** इत्यपेक्षा भवति। **तत आह—उभयमिति। किमुभयमिति** पुनरपेक्षायां सत्यामाह**—हविरिति। एवमुक्तेऽप्यनिराकाङ्क्षत्वाद् आर्छतावुच्चरिते** यद्वृत्तात् प्रक्रान्तो **निमित्तप्रत्ययो निराकाङ्क्षीभवति। अतः सर्वमपेक्षितत्वाद्विवक्षितमिति** ॥२२॥

**न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३ ॥ सि०**

**नैमित्तिकप्रयोगवचनो यथैव पञ्चशरावं** विधेयभूत**मपेक्षते, आत्मसिद्ध्यर्थम्** । नह्यसति विधेये विधिः संभवतीति । **एवं निमित्तमपि।** नह्यसति निमित्ते नैमित्तिकविधिरवकल्पते । **तत्र यन्निमित्तासन्निपाति तदनपेक्षितत्वादविवक्षितम्। उभयमिति चासन्निपाति । कथम्? यस्य हविरार्तिमार्छेदिति** [1]**एतावति** [2]**निमित्तप्रत्यये जाते नैमित्तिकेन च गृहीतेऽन्यस्योभयपदस्या**नपेक्षितत्वादविवक्षा । पृथक्पदनिर्दिष्टं हि हविरुभयपदानपेक्षमेवार्छतिना सम्बध्यते। तावदेव च शक्नोति निमित्तीभवितुमिति निमित्ते तावदुभयपदस्य नान्तर्गतिः। तत्र यदि[3] यस्य **हविरार्तिमार्छेदिति** निमित्तमनूद्य **पञ्चशरावो विधीयते, तच्च** हवि**रुभयमिति** हविरनुवादेनोभयं विधीयते, ततो हविःशब्दस्य विधिप्रत्ययस्य **चावृत्तेर्वाक्यभेदः** स्यात्। **ग्रहैकत्वन्यायेन** । यथा ग्रहसंमार्गसम्बन्धविधाने ग्रहैकत्वसम्बन्धविधाने

---

1. किं यस्येति। अत्र 'यस्य' इति पदस्य निरूढलक्षणया यत्पदप्रतिपाद्यस्येत्यर्थः।
2. 'एतावति' इति पदं श्लिष्टम्। एतदाकारे, एतत्परिमाणे चेत्यर्थः। तयोश्चार्थयोर्यथाक्रमं 'प्रत्यये' इत्यत्र, 'गृहीते' इत्यत्र चान्वयो द्रष्टव्यः।
3. यदीत्यस्योपरितनेन 'विधीयते' इति द्वयेनान्वयः—यदि पञ्चशरावो विधीयते, यदि च उभयं विधीयत इति।

१. एतावती—ख० ग०।

चाश्रीयमाणे ग्रहोऽप्यावर्तनीयः स्यात्, सम्बन्धद्वयसिद्धये विधायकश्च[1]। नैकेन विधिना तौ हि सिध्यत इत्यनेन न्यायेन वाक्यभेदः, तद्वदिहापीति। आह— "यदि विशेषणं न मृष्यते, हविषाऽपि ते विशेषणं मा भूत्" इति भाष्यं हविषो विशेषणत्वं निराकरोति। तच्चायुक्तम्। नहि सिद्धान्ती हविर्विशेषणमिच्छति, "आर्तिसम्बद्धं द्रव्यमुपपाताभिधेयं पञ्चशरावस्य कारणम्" इत्युपक्रमे आर्तिविशिष्टस्य हविषो निमित्तत्वाभिधानात्। अत आह—**यद्युभयशब्दस्य** स्वरूपेण हविर्विशेषणद्वारेण **वार्त्तिना सम्बन्धो नेष्यते**, ततो **हविषोऽपि मा भूत् सम्बन्ध** इति भाष्यार्थः। कथमित्याह—**विशेषणशब्देन सम्बन्धमभिधत्ते**। तेनार्तिमात्रमेव हविःसम्बन्धानपेक्षं निमित्तं प्राप्नोतीत्यभिप्रायः। ननु न तन्मात्रस्य निमित्तता घटते, नित्यत्वात्। कथमिदं चोद्यम्? अत आह—**कियान् पदगणो निमित्तत्वं प्रतिपद्यत इति विवेकमगृहीत्वा चोद्यते**। निमित्तविशेषणे वाक्यभेदाभिधानाद् आर्तिहविषोरन्यतरेण चान्यतरस्य विशेषणेऽवाक्यभेदादुभयपदस्य निमित्तानन्तर्भावः, इतरयोश्चान्तर्भाव इति विवेकमगृहीत्वा[2] चोदितवानिति। "**मृष्यामहे हविषा विशेषणम्**" इति सिद्धान्तभाष्यमनुभाष्य अभिप्रायमाह—**हविरार्तिसम्बन्धादृते निमित्तप्रत्ययाभावः**। तेन **हविर्विशेषणमिति**[3]। नह्यार्तिमात्रं निमित्तं भवति नित्यत्वात्। तेन विशिष्टस्यैव

---

1. विधायकश्चेति। आवर्तनीय इत्यनुषज्यते।

2. विवेकमगृहीत्वेति। उभयं 'हविः, आर्तिम्' इत्यत्र उभयस्य निमित्तविशेषणत्वे वाक्यभेदाभिधानात् तस्य निमित्तानन्तर्भावः, इतरयोः 'हविः, आर्तिम्' इत्यनयोरन्यतरेणापरतरस्य विशेषणे वाक्यभेदाभावाच्च निमित्तान्तर्भाव इति यो विवेकस्तमगृहीत्वेति योजना।

3. हविर्विशेषणमिति। अत्र भाष्ये "मन्यामहे हविषा विशेषणम्" इति वक्तव्ये "मृष्यामहे सहामहे हविषा विशेषणम्" इति सापेक्षवचनकरणाद् भाष्यकारस्येदं हृद्गतं गम्यते—सिद्धान्ते आर्तिरेव हविषो विशेषणम्, न

निमित्तत्वात् तदुद्देशेन कर्मविधाने नास्ति वाक्यभेदः । "हविषा विशेषणम्", "आर्तिर्विशेष्टव्या", "सा च हविषा" इति च भाष्यमभिप्रेतविपरीतमिव प्रतिपादयतीति मत्वा व्याचष्टे—**परपक्ष उभयथापि** विशेषणत्वे विशेष्यत्वे च **निराक्रियत इति** मत्वाऽनादराद्धविर्विशेषणं **ब्रवीति,** सर्वथा केवलयोर्निमित्तत्वयोः [निमित्तयोः] निराकरणसिद्धेः । **परमार्थतस्त्वार्तिरेव हविषो विशेषणम्** । व्यापत्तिर्हि प्रायश्चित्तनिमित्तम् । हविषश्चार्तिः [आर्ति]सम्बन्धेन व्यापत्तिः, न त्वार्तेर्हविःसम्बन्धेन । तदीयं [तदियं] वचनव्यक्तिः—यस्य हविरार्तिं गतमिति; न तु यस्यार्तिर्हविर्गामिनीति । किञ्च, आर्तिर्विनाशः । स च हविषा विशेष्टुं न शक्यते । तथा हि—न तावत् सत्तया विशेषणत्वम्, यस्यार्तिर्हविःसंयोगिनी, [1]नासंयोगिनी नित्यत्वात् । दर्शपूर्णमासयाजिनो हि सर्वदैवार्तिर्हविर्गामिनी भवत्येव । सावयवस्य हि हविषः केनाप्यंशेन सर्वदा विनाशोऽस्त्येव । तस्मान्न सत्तया विशेषणत्वम् । [2]नाप्यन्यव्यवच्छेदकतया हविर्गामिन्येवार्तिर्न वस्त्वन्तरगतेत्येवम्, असम्भवाद्वस्त्वन्तराणामपि केषाञ्चित् सर्वदार्तिसम्भवात् । हविस्त्वार्त्या शक्यमयोगव्यावृत्त्या विशेष्टुम्—यस्यार्तमेव हविर्न तु केनाप्येन [ येन केनापि ] अंशेनानार्तमिति । तस्मादार्तिरेव हविर्विशेषणम् । तथा चोपक्रमे भाष्यकारेणाप्युक्तम् । इह त्वनादरादार्तिर्हविषा विशेष्टव्येत्युक्तमिति । भवतु विशिष्टं निमित्तम्, तथाप्यार्तिविशिष्टं हविर्निमित्तम्, न तूभयत्वविशिष्टमिति कथमवगम्यत इत्याशङ्क्य भाष्यकारेणोक्तम्—"**तथा** विशिष्टे निमित्ते सति **हविरार्तिसम्बन्धनिर्वृत्तिरेव निमित्तं पञ्चशरावस्य** । कुतः ? **शक्नोति हि श्रुत्या**

---

पुनर्हविरार्तेः । तथापि यदि शङ्कितुरभिमानमनुरुद्ध्य वदामो हविरार्तेर्विशेषणमिति; एवमपि वाक्यभेदाप्रासेर्लभ्यत एव शङ्कापरिहार इति न नः किञ्चिच्छिद्यत इति ।

1. नासंयोगिनीति—क० ।

2. अन्यावच्छेदकतया—क० ।

तत्सम्बन्धं वक्तुम्। हविरुभयसम्बन्धं तु वाक्येन ब्रूयात्, दुर्बलञ्च श्रुतेर्वाक्यम्" इत्युक्त्वा, "ननु हविरार्तिसम्बन्धोऽप्यनेकपदसाध्यत्वाद् वाक्येनैव" इति चोदयित्वा उक्तम्—"आर्तिनिर्वृत्तिरपि तत्र गम्यते। सा च श्रुत्या। हविरुभयसम्बन्धे त्वत्यन्तं श्रुतिर्हीयेत। तस्मान्न तत्सम्बन्धो निर्वर्त्यमानो निमित्तं निर्दिश्यते" इति (उक्तम्)। तदस्य सर्वस्य प्रतीकेनानुभाष्याभिप्रायमाह – कर्तव्यतावचनो विधिप्रत्ययो यस्मात्परः श्रूयते तस्यैव परमार्थतः श्रुत्या कर्तव्यतामाह—स च यागः कारकैर्विना नात्मानं प्रतिलभत इति तदर्थं कारकेष्वपि विधिर्व्याप्रियते। फलनिमित्ते अपि क्रियया नैमित्तिक्या आकाङ्क्ष्येते इति ते प्रति क्रियां विदधाति। तेन कारकफलनिमित्तानां विधिनैवापेक्षितत्वाद् विवक्षा। यत्तु हविषो विशेषणमुभयत्वं तन्नासौ क्रिया न तत्साधनमिति विधिप्रत्ययेन न परामृश्यते। ननूभयत्वविशिष्टमेव [1]हविर्निमित्तं भवतु; न त्वार्तिविशिष्टमत आह— एवं चेदार्तिविशिष्टेन हविषा निमित्तप्रत्यय उपजाते नैमित्तिकप्रयोगवचनेन निर्वपेदित्यनेन तावन्मात्रस्यैवापेक्षितत्वाद् यदन्यदुभयमिति निमित्तासन्निपाति पदान्तरमुदीक्ष्यते तद्विलम्बितत्वात् पर्यवसिते विधौ पश्चादागच्छद्वाक्यं भवति। नह्युभयविशिष्टं हविर्निमित्तं भवितुमर्हति, नित्यत्वात्। तस्मादार्त्यावश्यं निमित्तेऽन्तर्भवितव्यम्, तावता नैराकाङ्क्ष्यान्नोभयस्यान्तर्भावः। तेनार्तिसम्बन्धस्य निमित्तत्वेन श्रुत्यर्थभूतक्रियासम्बन्धित्वात् श्रुतित्वम्, उभयस्य हविर्मात्रसम्बन्धाद्वाक्यत्वमिति। एवं नैमित्तिकविधिश्रुत्यपेक्षं भाष्यं व्याख्यातम्।

व्याख्यानान्तरमाह –अथवा 'आर्छेत्' इति निमित्ताभिधायी लिङ्शब्दो यस्मात् परः श्रुतस्तस्यैवार्छत्यर्थस्य श्रुत्या निमित्तभावमाह –तत्र केवलश्रुतिपरिग्रहे सत्यार्तिमात्रस्य नित्यत्वेन निमित्तभावव्याघात इति। अत आर्छतिना हविषि विशेष्यमाणेऽपि श्रुतिर्नातीव हीयते, यथा धात्वर्थेऽन्यत्र विधीयमाने "व्रीहीन् प्रोक्षति" इत्यत्र नात्यन्तं श्रुतिहानिः।

---

१. 'हविः' क० नास्ति।

एवं निमित्तेऽपि धात्वर्थस्यान्तर्भावाद् नातीव श्रुतिपीडा। **हविरुभयसम्बन्धे तु न धात्वर्थो विधीयते** निमित्ततया नाभिधीयत इत्यर्थः। **न सोऽन्यत्र** नान्यविशेषणतयापि निमित्तं भवतीत्यर्थः। **तस्मादुभयपदं निमित्तकर्तव्यतावचनेन** आर्छेदित्यनेन **नापेक्षितं नापि नैमित्तिकेन** निर्वपेदित्यनेन, **अतोऽविवक्षितम्**। "**अथ कस्मान्न पदद्वयविशिष्टार्तिर्निमित्तं प्रतीयते**" इति, "**उभयविशिष्टार्तिर्निमित्तमिति गम्यते**" इत्येवमन्तं चोद्यभाष्यं प्रतीकेनोपादाय पूर्वमेव श्रुतिबलादार्ति विशिष्टम्, न तूभयं वाक्यदौर्बल्यादिति प्रतिपादिते किमभिप्रायं चोद्यमित्याशङ्क्य व्याचष्टे—**यथा हविःशब्दाम्नानादार्तिहविषोर्विशेषणविशेष्यभावः परमार्थश्रुतित्यागेनाङ्गीक्रियते**। परमार्थश्रुत्या हि समानपदस्थाया आर्तेरेव निमित्तता स्यात्। सा च नाश्रीयते, हविःशब्दाम्नानादार्तिमात्रस्य निमित्तत्वात्। **एवमुभयपदाम्नानाद्यादृशी श्रुतिस्तदबाधेन संभवति तादृश्येव ग्राह्या**। **तस्मादार्त्या न केवलं हविर्विशेष्टव्यम्, किन्तु द्वे अपि हविरुभयत्वे इतरेतरयुक्ते विशेष्येते**। तदनेनोभयविशिष्टार्तिरिति भाष्ये[1] सम्बन्धपरं विशिष्टपदमार्तिविशिष्टमुभयमित्येवमर्थं प्रतिपादयतीति व्याख्यातम्। यथाश्रुतमेव वा व्याख्येयमित्याह—**अथवार्तिविशेषणमित्येवं विवेकं पूर्वपक्ष्यगृहीतवान्**। **कियत्तु गृहीतम्, आर्तिनिर्वृत्तिरपि तत्र गम्यत इति** पूर्वस्मात् [ तस्मात् पूर्वस्मात् ] सिद्धान्तग्रन्था**दार्तिरेव विशिष्टा निमित्तमिति गृहीतम्**। **एवं चेदार्तिरेव चेन्निमित्तम्, ततो यथैवैकेन** हविःपदेन **विशेष्यमाणाप्यार्तिनिर्वृत्तिः** श्रुत्यभिहितास्ति, न त्वपगता; **एवं द्वितीयेनोभयपदेनापि विशेष्यमाणार्तिनिर्वृत्तिरस्त्येवेति न श्रुतिर्हास्यते**। तेनोभयविशिष्टार्तिर्निमित्तम्; न त्वन्यतरविशिष्टा। **पश्चात्तु** अरुणैकहायनीवद्धविरुभयत्वयोर्मिथो नियमादुभयहविरार्तिरेव निमित्तमिति।

---

1. 'भाष्यम्' इति क० ग० पुस्तकयोः पाठः। तत्र 'भाष्यम्' इति प्रथमान्तस्य 'व्याख्यातम्' इत्युत्तरेणान्वयः। 'भाष्ये' इति सप्तम्यन्तपाठे तु 'भाष्यस्थं यत् संबन्धपरं विशिष्टपदम्' इति स्वरसं योजनमिति द्रष्टव्यम्।

"**अत्रोच्यते-इदं तावद्देवानांप्रियः प्रष्टव्यः**" इत्यादिना "तदशक्यं विशेषवचनेन प्रतिषेधस्यावाचकेन निवर्तयितुम्" इत्यन्तेनान्तर्णीतो योऽभिप्रायः सिद्धान्तवादिनः, तं वक्ष्यमाणमिदानीं **प्रतिपादयति—कर्म** फलं संस्कार्यं वा **निमित्तं** [1]**वोद्दिश्य धात्वर्थस्तत्र विधीयते**। तयोर्यद्विशेषणं **न** तत्क्रियाङ्ग-**मित्यतस्तस्याविवक्षा** पूर्वमेवोक्ता। भवतु विशेषणस्याविवक्षा; उभयपदं तु निमित्तसन्निपात्येव, न तु निमित्तविशेषणमित्युक्तम्। अतः कथं तस्याविवक्षा? अत आह—**इह चार्तिविशिष्टं द्रव्यं निमित्तम्**, तावदेव निमित्तत्वोपपत्तेः। न खल्वार्तिसम्बन्धे हविःशब्द उभयशब्दमपेक्षते, पृथक्पदत्वादित्युक्तम्। **तच्च** द्रव्यं **व्यस्तमपि हविराकृतिलक्षितं समस्तमपि। तस्माद्यद्धवि-राकृतिकं** द्रव्यं **तस्य तस्यार्तिविशिष्टस्य निमित्तता शब्देनः प्रतिपाद्यते**। न चोभयशब्देन विशेषणं सम्भवति। न ह्यसमस्तं हविःपदमार्च्छतिसम्बन्धे उभयपदानुरागमपेक्षते, नाप्युभयपदं हविःपदापेक्षम्। तेनोभयोर्हविरुभयत्वयो-रार्छतिनैव सम्बन्धः। तत्र यदि यस्य हविरार्तिमार्छेत्, यस्योभयमार्तिमार्छेदिति सम्बन्धः स्यात्, ततः प्रतिनिमित्तं नैमित्तिकसम्बन्धात् प्रत्येकसमाप्तिलक्षणो वाक्यभेदः स्यात्। निमित्तयोश्च प्रत्येकमेव परस्परानपेक्षयोर्नैमित्तिकवशीकार-सामर्थ्यान्न परस्परसम्बन्धः स्यात्। ततश्च हविर्मात्रमुभयमात्रं वार्तिविशिष्टं निमित्तं स्यादिति नारुण्यैकहायन्योरिव क्रियागुणभूतयोस्तया वशीकृतयोर्मिथो नियमसिद्धिः। उभयमात्रञ्च स्वतन्त्रं न व्यवहाराङ्गमित्यविवक्षैवावशिष्यते। अत्रैव दृष्टान्तमाह—**यथा "गौर्न पदा स्प्रष्टव्यः"** इत्यत्र गोरविधीयमानस्याविवक्षितलिङ्गसंख्यत्वाद् **यो यो गौः स स सर्वो न पदा स्पृश्यते,** नत्वेक एव नापि पुमान्; **एवमिहापि**।

**अपि चोभयशब्दे हविषा सम्बध्यमानेऽपि नैवोभयविशिष्टार्तिः प्रतो-येतेत्यादि तस्मान्नोभयविशिष्टार्तिर्निमित्तमित्यन्तं** भाष्यमाक्षिपति। पूर्वेणैव

---

१. चोद्दिश्य—क०।

**"ननूभयशब्दो हविर्विशेक्ष्यति"** **इत्यनेन** सचोद्यपरिहारेण भाष्यग्रन्थेन **गतार्थस्य किमर्थं पुनरुपन्यासः**। तत्रैव विशेषणत्वमुभयपदस्य निराकृतमिति किमधिकं वक्तुमिदं भाष्यमिति।

**उच्यते**—तत्र **ह्यार्त्या सम्बध्यमान** उभयशब्दोऽनपेक्ष एवैककर्म्याद् **हविर्विशेक्ष्यतीति** चोद्यवादिनोक्त**म्। यथा शुक्ला गौरानीयता**मित्यत्र गामानयतिना **सम्बध्यमानां शुक्लार्थ्या**दैककर्म्याद्विशेषयन् **कृष्णादिनिवृत्तिं करोति**। अनेन च तत्रत्यं यथा शुक्लो गौरानीयतामित्यादिभाष्यमर्थतः पठितम्। **एवं दृष्टान्तदार्ष्टान्तिकयो**रुपादेयोद्देश्यविशेषणयो**स्तुल्यत्वे चोदिते** सतीतरो **विवेक**मुपादेयोद्देश्यविशेषणयोः **कथयति**—विषम उपन्यास इत्यादिना। तस्यार्थं संक्षिप्य दर्शयति—**क्रियाप्राधान्ये तस्याः** क्रियाया **विधीयमानत्वाद्विशेषणं विवक्षितम्। गुणभूतायां तु** क्रियायां **यत्प्रधानस्य विशेषणं तदविवक्षितम्**। प्रधानग्रहणं निमित्तस्याप्युपलक्षणार्थम्। यत्क्रियया न वशीक्रियते, क्रियामेव वशीकरोति, तस्य विशेषणमविवक्षितमित्यर्थः। तदेवं पूर्वग्रन्थे प्रथममार्त्या सम्बद्धस्य पश्चादरुणैकहायनीन्यायेन हविःसम्बन्ध उभयशब्दस्य निरस्तः। **इह तु** अपि चेत्यादिना **हविषा पूर्वं** प्रथममेव **सम्बन्धमूरीकृत्य निराकरोति**। कथं निराकरणमित्यत आह—**आर्छतिना हविः परामृश्यते, न तूभयशब्दो विद्यमानोऽपि**। तस्य हविर्मात्रसम्बन्धित्वाद्धविर्मात्रस्यार्तिसम्बन्धात्तन्मात्रं निमित्तं नोभयमिति।

एवं हविर्मात्रसम्बन्धादार्तिसम्बन्धे निराकृते सति, **अथार्त्याश्रयविभक्तियोगादि**त्यादि चोद्यभाष्यम्। तस्यार्थः—न हविःस्वरूपेणोभयं सम्बध्यते, अपि त्वार्त्याश्रयेण। अतस्तद्द्वारेणैवोभयमप्यार्तिसम्बन्धि स्यादिति। तस्योत्तरभाष्यम्—तन्न विभक्तिसंयोगो हीत्यादि। ततः पुनश्चोद्यम्—अथोच्येतेत्यादि। हविःस्वरूपसम्बद्धमप्युभयत्वं पश्चादानन्तर्यादार्त्यापि सम्बध्यत इति। तस्याप्युत्तरम्—तन्न, असत्यां ह्याकाङ्क्षायामित्यादि। ततोऽपि चोद्यम्—एकवाक्यगतत्वादित्यादि। वाक्यभेदाद्धि युक्तं यद् न राजा पुरुषेण सम्बध्यते। अत्र त्वार्त्युभयत्वयोरेकवाक्यगत-

त्वात् सम्बन्धः स्यादिति। तस्यापि परिहारः—नैतदेवमित्यादि श्वैत्यं विशेषणं भवतीत्यन्तम्। तदिदं सर्वं प्रतीकेनानुभाष्य चोद्यत्रयमपि तावत्समाहृत्य व्याचष्टे—**अनेन** भाष्येण **एकविभक्तिम्, आनन्तर्यम्, एकवाक्य**त्वञ्च उभयशब्दस्यार्तिसम्बन्धे **प्रमाणमुपन्यस्यति**। एकविभक्तिं विवृणोति—**आर्तेर्हविराश्रयः**। तत्र आर्त्याश्रयभूते हविषि **या विभक्तिः सा** इतरत्राप्युभयपदे दृश्यते। **तस्माद्यया विभक्त्या हविरुच्चार्यमाण**मार्त्या **सम्बध्यते तथैवोभयमपि** तत्सम्बन्धिरूपेण हविषा सामानाधिकरण्यात् सम्भन्त्स्यते। आनन्तर्यं विवृणोति—**यथा च मनसि विपरिवर्तमानयार्त्या हविः सम्बध्यत एवमुभयमपि**। कुतः? **विपरिवृत्तेस्तुल्यत्वात्**। एकवाक्यत्वं विवृणोति—**एकवाक्यगते चोभे अपि** आर्त्युभयत्वे। तथापि किमित्युभयत्वस्यार्तिसम्बन्ध इत्यत आह- **आनर्थक्यादुभयशब्दस्य**। नहि सम्भवत्यार्तिसम्बन्धेनार्थवत्त्वे युक्तमानर्थक्यमिति।

**यद्येवं मन्यस इति** पूर्वपक्षवाद्यभिप्रायमुपन्यस्य **परिहरति**। तत्र प्रथमचोद्यपरिहारभाष्याभिप्रायमाह—**एकविभक्तियोगाद्धि** हविषैव तत्समानविभक्तिकेन तत्सामानाधिकरण्याद् वाक्यलक्षणः **सम्बन्धः स्यात्, न चार्त्या**। आनन्तर्यं परिहरति—**यथा** भार्या राज्ञः पुरुषो देवदत्तस्येत्यत्र **भार्यया सम्बध्यमानो राजानन्तर्येऽपि न पुरुषेण सम्बध्यते**, कुतः? भार्यासम्बन्धेनैव **निराकाङ्क्षत्वात्**। **एवं** हविःसम्बन्धेनैव निराकाङ्क्ष**मुभयपदं** न सन्निहितयाप्यार्त्या सम्बध्यत इति। एकवाक्यतां परिहरति—**यथा**श्वेन गच्छति श्वेतेन पटेनावृत इत्यत्र श्वैत्यं **पटेन सम्बध्यमानमेकवाक्यत्वे** सत्यपि **नाश्वस्य विशेषणं भवति**। कुतः? **तेनाश्वेन** गच्छतिसम्बन्धेनैव निराकाङ्क्षेण श्वैत्य**स्यानपेक्षितत्वात्**। **एवं हविष आर्त्या सम्बद्धत्वादुभयपदस्य** हविषः सम्बन्धादेव नैराकाङ्क्ष्येण **नार्छतिना सम्बन्ध इति**। एतदेव चोद्यपूर्वकं विवरीतुमारभते। यदेतद्धविःसम्बन्धनिराकाङ्क्षस्य नार्छतिना सम्बन्ध इत्युक्तम्,

तदयुक्तम् । कुतः[१] ? **अनेन** यस्योभयं हविरार्तिमार्छेदिति **वाक्येन पूर्वमेवार्ति-सम्बन्धित्वेन हविषोऽवधृतत्वात्** । तेनार्तिसम्बद्धेन हविषा विशेषणत्वेन गृह्यमाणमुभयत्वं तद्द्वारेणार्तिसम्बन्धि भवत्येव । तेन हविःशब्दस्तावन्न हवी-रूपस्योभयसम्बन्धं प्रतिपादयति; किन्त्वार्त्यानुरक्तस्य । **अपि चोभयशब्दोऽपि यो हविषा सम्बध्यते,** सोऽपि **न हविःस्वरूपेण,** आनर्थक्यप्रसङ्गात् । **किन्तर्हि**[1] ? **येन रूपेणार्तेराश्रयो** भवति **हविस्तेन** रूपेण सम्बध्यते । **तस्मादार्त्यानुरक्तेन हविषा सम्बध्यते, यथा व्रीहिषु प्रोक्षणमपूर्वीयांशेन** सम्बध्यते न व्रीहिस्वरूपेण, आनर्थक्यप्रसङ्गात्; एवमिहापि । आक्षेपमुपसंहरति—**एवं चेदुभयविशिष्टार्तिनिमित्तमिति युक्तम्** । सम्बन्धपरो विशिष्टशब्दः पूर्ववत् । आर्तिविशिष्टमुभयं निमित्तं न तु हविर्मात्रमित्यर्थः ।

उच्यते—तत्र प्रोक्षणे **प्रकरणादपूर्वीयांशता शक्या लक्षयितुम्** । प्रकरणे ह्यपूर्वसाधनत्वेन विहिता व्रीहयः । तेन शक्यते प्रोक्षणवाक्ये विदित-पूर्वमपूर्वसाधनत्वं लक्षयितुम्—ये व्रीहयोऽपूर्वसाधनभूतास्तान् प्रोक्षेदिति । किमिति लक्षणेत्यत आह—**व्रीहिस्वरूप आनर्थक्यात्** । **इह तु प्रकरणस्थानीयस्य प्रमाणस्याभावादशक्या लक्षणा** । न ह्यत्रार्तं हविः प्रकृतम्; किन्तु हविः-स्वरूपम् । तेन नैवं सम्भवति यदार्तं हविस्तचेदुभयमिति । सम्भवति त्वेवं यद्धविः तच्चेदार्तमिति । अथासत्यपि प्रमाणान्तरे किमिति लक्षणा न भवतीत्यत आह—पूर्वमार्छतिना हविषः **सम्बन्धः, ततः** पश्चात् **तदार्त्यनुरक्तस्यो-भयेनेति** । **एवञ्च लक्षणा** भवन्ती **भवेत्** । तव तु ततः किमित्यत आह—**एवञ्च** सति **हविषो द्विरुच्चारणाद्वाक्यभेदः** स्यात्, आर्तिसम्बन्धाय प्रथममुच्चारणम्—यद्धविस्तच्चेदार्तमिति; ततस्तदनुरक्तस्योभयसम्बन्धाय पुन-रुच्चारणम्—यदार्तं हविस्तच्चेदुभयमिति । अत्रानन्तरम् 'अथोच्येत' इत्यादि-भाष्यं व्याचष्टे—**एवं** पूर्वोक्तेन न्यायेन हविःसम्बन्धेन निराकाङ्क्षस्योभयशब्द-

---

1. 'किन्तु' इति पूनामुद्रितमूलपाठः ।

१. 'कुतः' इत्यनन्तरं 'तेनाश्रयेण सन्निधानात्' इति ख० अधिकः पाठः ।

स्यार्त्यनुरागे निराकृते, अथोच्येतार्तिविशिष्टेन हविषोभयस्य सम्बन्ध इत्यनेन ग्रन्थेन। आर्त्यनुरक्तेन हविषा सम्बन्धः कस्मान्न भवतीति चोद्यते—एवञ्च सति पूर्वदोषद्वयं परिहृतं भवति। किं दोषद्वयमित्याह—नार्छेतिनोभयस्य सम्बन्धः, किन्तु शुद्धेन हविषेति। यदार्तं हविस्तदुभयमित्यार्त्यनुरक्तेन हविषोभयस्य सम्बन्धः। सर्वथा तावदार्त्यनुरक्तं हविरुद्दिश्य किञ्चिद्विधातव्यम्। तत्रोभयमेव कस्मान्न विधीयत इति। इतरस्तु सिद्धान्तवाद्याह— न ह्यार्छेदित्ययं शब्दो हविर्विशेषणत्वेनोपादीयते। किन्तर्हि? पञ्चशरावस्य निमित्तत्वेनेति। नन्वेतदयुक्तम्। आर्तिर्हि हविर्विशेषयन्त्येव निमित्ततां प्रतिपद्यते। विपरीते हि विशेषणविशेष्यभावेऽवश्यंभावित्वादार्तेः पञ्चशरावस्य नित्यत्वप्रसङ्गात्, यच्छब्दावगतनिमित्तत्वव्याघातः स्यादिति प्रागेवोक्तम्। अतो हविष आर्तिविशिष्टस्य निमित्तत्वाद् नार्छेदिति हविर्विशेषणत्वेनोपादीयत इत्ययुक्तमिति।

उच्यते—नायमार्तेर्हविर्विशेषणत्वनिराकरणपरो ग्रन्थः। किन्तर्हि? परमताभिप्रायेण, हविर्न विशेषयति। तदेव विवृणोति—कथं नु नाम उभयपदेनार्तिविशिष्टं हविः सम्बध्येतेत्यनेनांशेन न हविर्विशेषयति। आर्ते हविषि पञ्चशरावं कुर्यादिति तु विशेषयति; न तु हविरार्तमुभयमिति। युगपदुभयपदसम्बन्धे पञ्चशरावसम्बन्धे चार्तिविशिष्टस्य हविषोऽभ्युपगम्यमाने हविषो द्विरुच्चारणाद्वाक्यभेदः स्यादिति। "अथ हविराकृतिलक्षितेन सम्बद्धमार्छेदिति पुनर्हविर्विशिष्टेनोभयशब्देन सम्बध्येत" इति भाष्यं प्रतीकेनोपादायाध्याहारेण पूरयति—"अथ हविराकृतिलक्षितेन सम्बद्धम्" इत्यत्र उभयमित्यध्याहारः। अस्मिन् पक्षे हविर्विशेषणम्, उभयं विशेष्यम्। तदुत्तरकालं हविरनुरक्तमुभयपदमार्छतिना सम्बध्यते। भाष्यञ्चैवं व्याख्येयम्—हविराकृतिलक्षितेन हविर्द्रव्येण तदुभयपदं प्रथमं सम्बद्धं भवति। आर्छेदिति पुनः केन सम्बध्यते? तत्राह—हविर्विशिष्टेनोभयशब्देन सम्बध्येतेति। एवमपि स एव पूर्वोक्तो वाक्यभेदः, उभयशब्दस्य द्विरुच्चारणादित्यर्थः (?)।

"आह—यथैवाख्यातार्थप्राधान्ये" इति "उभयहविःशब्दावार्तिविशेषणार्थमुच्चार्येयाताम्" इत्यन्तं भाष्यम्। तस्याभिप्रायमाह—**तत्र** वक्ष्यमाणा **वचनव्यक्तीरुपन्यस्यन्**। लक्षणे शतृप्रत्यय उपन्यसितुमभिप्रवृत्तः। प्रथमं तावदा**ख्यातस्य गुणप्रधानविवेकमाह** सचोद्यपरिहारेण ग्रन्थेन। **प्रधानभूते** विधेयभूते। **आख्याते विशेषणं विवक्षितम्, गुणभूते त्वविवक्षितमिति**। नन्वेतदयुक्तम्, निमित्तस्य गुणभूतत्वाभावाद्विशेषणविवक्षा स्यात्। ततश्चोभयविशिष्टार्तिनिमित्तं स्यादितीमामाशङ्कामपनुदन् भाष्यतात्पर्यार्थमाह—**शब्दवृत्तेनाभिधीयमानं परार्थमुच्चार्यते**। नात्रार्थगतो गुणभावो [1]विशेषणाविवक्षायां हेतुः, किन्तु शब्दोच्चारणगत इत्यर्थः। **तेनायं भाष्यार्थः—यत्राख्यातार्थः स्वविधानार्थमुच्चार्यते तत्र विवक्षितं विशेषणम्, यत्र तु** स्वयमविधीयमानः **परविधानार्थमुच्चार्यते, यथा 'दध्ना जुहोति' इति दधिसम्बन्धविधानार्थं होम**[2] **उच्चार्यते, तत्र द्वितीयस्य** पदस्य यद्विधानार्थमुच्चार्यते तद्व्यतिरिक्तस्य पदस्य **सम्बन्धो नास्ति, वाक्यभेदप्रसङ्गात्**। नह्येकेन विधिनार्तिहोमाद्यनुवादेन पञ्चशरावदध्यादि विदधतार्तौ होमे वा विशेषणान्तरं विधातुं शक्यते, विधायकस्यार्छत्यादिपदस्य चावृत्तिप्रसङ्गात्। **एवं विवेके कथिते वचनव्यक्तय उपन्यस्यन्ते**, सर्वथा विशेषणविवक्षायां वाक्यभेदान्न मुच्यामह इति दर्शयितुम्। [3]**प्रथमम्** "अथ पुनरुच्चारणं न क्रियेत" इत्यादिना **हविःशब्दस्तन्त्र्यते**। तन्त्रशब्दात् साधारणपर्यायात् 'तत्करोति तदाचष्टे' इति णिच्। ततः कर्मणि लकारः। हविःशब्दस्यार्छत्युभयशब्दाभ्यां तन्त्रेण सम्बन्धः प्रदर्श्यत इत्यर्थः। **"एवमुभयशब्दो यद्यार्छतिना सम्बध्यते,** ततो **न** हविरुभयत्वेन **विशिष्टं स्यात्" इत्यनेन** भाष्येणार्तिपदं **तन्त्र्यते। अथ हविःशब्देन सम्बध्यत** इत्यत्र भाष्ये **उभयमित्यध्याहृत्योभयशब्दस्तन्त्र्यते**। सर्वत्र दूषणमाह—**ततो**

---

१. 'विशेषण' ख० नास्ति।

२. 'होम' क० नास्ति।

३. 'प्रथमम्' इत्यतः पूर्वं 'तत्र' इति क० ग० अधिकः पाठः।

दोषो वाजपेयाधिकरणोक्त आवृत्तिलक्षणः प्रसज्यते। यदेवैषामेकमितराभ्यां सम्बध्यते तन्त्रेण, तद्यदीतराननुरक्तमितरेण सम्बध्यते ततो न विशिष्टं निमित्तं स्यात्। अन्यतरानुरक्तस्यान्यतरसम्बन्धाश्रयणे सत्यावृत्तिलक्षणवाक्यभेदप्रसङ्गः। प्रधानभूते पुनराख्यातार्थे तस्य सर्वविशेषणविशिष्टस्य युगपदनावृत्तेनैकेन विधिना विधानसम्भवादवाक्यभेद इति वैषम्यम्। कथं पुनर्हविर्ग्रहणमेवात्र विवक्षितं न तूभयग्रहणम्। अन्यतरस्मिन् खलु विवक्षिते विशेषो न गृह्यते। अत आह भाष्यकारः—अवश्यावहेयेऽन्यतरस्मिन् व्यवहितो वा गुणो [1]वा हातव्यो भवतीति।

एतच्च इदमेव वाक्यं दर्शपूर्णमासप्रकरणे [2]श्रुतमिति कृत्वा विचारितम्। परमार्थतस्तु "यस्य सायंदुग्धं[3] हविरार्तिमार्छति" इत्यादि प्रकृत्येदं वाक्यं श्रूयते। तस्माद्यस्योभयमित्येतावन्मात्रमत्र वाक्ये विवक्षितम्, हविरार्तिशब्दौ तु प्रकरणप्राप्तानुवादौ। न च प्रकरणलभ्योऽर्थो वाक्यं भिनत्तीत्युभयार्ताविव पञ्चशरावः; [4]वाक्यान्तराभावे तु हविर्मात्रमार्तं निमित्तमिति ॥ २३ ॥

( ७–होमाभिषवोभयकर्तुर्भक्षणाधिकरणम् )

## होमाभिषवभक्षणं च तद्वत् ॥ २४ ॥ सू०

हविर्धाने "ग्रावभिरभिषुत्य" इत्यादिवाक्यं विधेयान्तराभावादभिषवहोमसमानकर्तृकभक्षणविधायकमिति यत् तृतीये साधितम्, तदेवोपोद्घातत्वेन स्मारयति—**सत्यपि पदार्थाभिधाने**[1]। यद्यप्यत्र बहवः पदार्था [5]होमाभिषवतत्क्रम-

---

१. 'वा' क० नास्ति।

२. न श्रुतम्–ख०।

३. दुग्धमार्च्छति–क०, दुग्धमार्तिमार्च्छति–ग०।

४. शक्त्यन्तराभावे–ख०।

५. होमाभिषे वक्रन्तमेव प्रत्यागमनादयः–ख०।

1. सत्यपि पदार्थाभिधान इति। पदार्थाश्रितक्रमादिरूपधर्मापेक्षया स्वतन्त्रपदार्थानां प्रबलत्वेन यत्रोभयसमभिव्याहारः, तत्रोत्सर्गतः पदार्थविधान-

[1]प्रत्यगमनादयोऽभिधीयन्ते, तथापि **होमाभिषवयोः क्रमो न विधीयते।** विवक्षितविशेषणमेतद् होमाभिषवयोः क्रम इति। होमाभिषवौ च तत्क्रमश्च न विधीयत इत्यर्थः। कुतः? **अर्थप्राप्तत्वात्।** उपलक्षणमेतत्। वाक्यान्तरेण होमाभिषवौ प्राप्तौ, तत्क्रमस्त्वर्थात्। नहि हुतस्याभिषवः सम्भवतीति। क्वचित्पाठः "सत्यपि पदार्थाविधाने" इति। तत्रायमर्थः—पदार्थविधाने पाठप्राप्तः क्रमो न विधीयते, पदार्थाविधाने तु क्रमविधिर्दीक्षावाक्यवदिति स्थितिः। इह तु सत्यप्यविधाने क्रमो न विधीयत इति। भाष्यकारेण यजिना होमः प्राप्त इत्युक्तम्। तदाक्षिपति—**ननु यागहोमयोर्भिन्नत्वादप्राप्तो यजिना होमोऽत्रैव विधीयते? उच्यते—वाक्यान्तरेण**[2] "यद् ग्रहान् जुहोति" इत्यादिना **विहितत्वादिहाविधेयो** होमः। भाष्ये तु वाक्यान्तरोपलक्षणार्थं यजिग्रहणमिति। सदसीति

---

मेव भवति; क्रमस्तु पाठादिनैवेति स्थितिः। ततश्च "अभिषुत्याहवनीये हुत्वा" इत्यत्र होमाभिषवयोः पदार्थयोरेव विधानमिति प्राप्नोति। तथापि तयोर्वाक्यान्तरप्राप्तत्वात् 'वेदं कृत्वा' इतिवत् तयोः क्रममात्रमिह विधेयमिति प्रतीयते। किन्तु क्रमस्याप्यत्रार्थतः प्राप्तिसंभवात् सोऽपीह न विधेय इति भावः। अत्र 'होमाभिषवयोः' इत्यस्य 'पदार्थाभिधाने' इत्यनेनान्वयः। अभिषुत्य हुत्वेति पदार्थाभिधानं यद् होमाभिषवयोस्तस्मिन् सत्यपीति। अपिशब्देन पदार्थभूतयोस्तयोरेवोत्सर्गतो विधेयत्वप्राप्तिं सूचयति। यद्यप्येवम्, तथापि तयोर्वाक्यान्तरविहितत्वान्नात्र विधिः संभवतीति भावः। एवं तर्हि तयोः क्रमो विधीयताम् 'वेदं कृत्वा' इतिवदिति चेत्, तदपि नेत्याह—क्रमो न विधीयते, अर्थप्राप्तत्वादिति। यद्यप्येवं व्याख्याने बहूनां वाक्यार्थानामेकस्मिन् वाक्येऽन्तर्निगूहनात् कियानपि क्लेशो भवत्येव, तथापि तन्त्ररत्नस्थव्याख्यानापेक्षया न्यून एव स क्लेश इति प्रतिभाति।

१. प्रत्यागागमनादयः—ग०।

२. 'यत्' नास्ति—क०।

तर्हि विधेयं भविष्यति, नेत्याह—**सदसि भक्षान् भक्षयन्तीत्यप्यविधेयम्।** कुतः ? **अर्थप्राप्तत्वाद्देशस्य ।** होत्रादीनां हि सदसि कर्मप्रवृत्तेरवश्यं वषट्कारसमाख्यानिमित्तभक्षार्थं सदः सोमा आनेतव्याः, अध्वर्युणा चोपहवो दातव्यः । तेन सदसीत्यर्थप्राप्तो देशोऽनूद्यते । तथा **प्रत्यक्त्वमप्यविधेयम्।** अर्थप्राप्तत्वादित्यनुषङ्गः । आहवनीयाद्धि सद आगच्छन्तः प्रत्यञ्च एव प्रतिपद्यन्ते। यदि हुत्वा प्रत्यञ्चः परेत्येति क्रमो विधीयत इत्युच्यते, तत्राह— **होमोत्तरकालं भक्षणं होमोत्तरकालमेव प्रत्यग्गमनम्** । भक्षार्थं हि गमनं हुतस्य च भक्षणमिति हुत्वैव गमनमर्थप्राप्तम् । तेनोभयस्य होमस्य प्रत्यग्गमनस्य च **क्रमो न विधीयते,** पारिशेष्याद्भक्षोऽभिषवकर्तुर्होमकर्तुश्च **विधीयते ।** पूर्वपक्षमाह— **कर्तृसंस्कारत्वाद्भक्षस्य ।** कर्तृगतं **साहित्यमविवक्षितमुद्देश्य**गतत्वात् । अथापि नाम न कर्तृसंस्कारः, तथापि निमित्तत्वादभिषवहोमयोरविवक्षितमेव साहित्यम् । अतो ये सवनमुखीयेषु मध्यतःकारिणां चमसाश्चत्वारः, तेषु चमसाध्वर्यवोऽपि होमकर्तृत्वाद्भक्षं लभेरन्; तथा सर्वेऽध्वर्यवोऽभिषवकर्तृत्वात् सर्वत्र भक्षं लभेरन्निति । **नन्वभिषुत्येत्यपि साकाङ्क्षत्वादुत्तरेण** हुत्वेत्यनेन **क्त्वान्तेन सह सम्बध्यते ।** ततः किमित्यत आह—**एवं चेद्** हुत्वेत्यनेनाभिषवसमानकर्तृकहोमाभिधानादुभयक्रिया**विशिष्टेन कर्त्रा सम्बन्धाद्भक्षस्य नास्त्येकक्रियाकर्तुर्भक्षः** । **उच्यते—नास्त्येव क्त्वान्तानां परस्परसम्बन्धः । कुतः ? यस्मादभिषुत्ये**त्यपि **साकाङ्क्षम्, उत्तरमपि क्त्वान्तत्वादेव साकाङ्क्षम्** । न च साकाङ्क्षयोर्मिथः सम्बन्धो युक्तः । **तस्माद्यन्निराकाङ्क्षीकरणसमर्थमाख्यातम् ,** तदेव द्वयमप्य**भिलषतीति सर्वान्त्येन** भक्षयन्तीत्यनेन द्वयोरपि **सम्बन्धः** । अथासत्यप्याख्यातसम्बन्धेऽरुणैकहायन्योरिवैककर्म्यात् परस्परसम्बन्ध इत्युच्यते, अत आह—**एवमुभयो**राख्यातेन चेदभिसम्बन्धः, तथा सत्यभि**षुत्य [1]भक्षयन्ति,** हुत्वा भक्षयन्तीति **नास्ति** होमाभिषवयोः परस्पर**सम्बन्धः** । उपादेयानां ह्यैककर्म्यान्नियमो

---

१. 'भक्षयन्ति' क० ग० नास्ति ।

नोद्देश्यानामिति तत्र तत्र क्षुण्णम् । असत्यां च तन्न्यायप्राप्तौ **प्रत्ययेनैव** परस्पर-**सम्बन्धे क्रियमाणे वाक्यभेदः** स्यादित्येतदपि बहुशश्चर्चितम् । तस्मादेकैकेनैव भक्षणमिति ॥ २४ ॥

## उभाभ्यां वा नहि तयोर्धर्मशास्त्रम् ॥ २५ ॥ सि०

**भक्षस्य** द्वितीयानिर्दिष्टप्रधानप्रत्यासन्नापेक्षितप्रतिपत्तिक**द्रव्यसंस्कारत्वेन** विधानात् कर्तुस्तत्र **गुणभावः** । **तस्मा**त्तस्य गुणभूतत्वेनोपादेयत्वा**दुभयक्रिया-संयुक्तता विवक्षिता** । **अत उभयनिमित्तो भक्षः** । नन्वस्मिन् पक्षे कर्तृ-विशेषणत्वाद्धोमाभिषवयोर्निमित्तत्वाभावात् कथं निमित्तवाचोयुक्तिः ? उच्यते— सत्यम्, न होमाभिषवौ निमित्तीकृत्य भक्षणं विधीयते, निमित्तप्रतिपादकयद्वृत्ताद्य-भावात् । किन्तु कर्तृविशेषणत्वेनैव तयोरुपादानम् । तथापि प्रयोजनान्तर-प्रयुक्तयोस्तयोः कर्तृविशेषणत्वेनोपादानम्; न तु भक्षणं तौ प्रति प्रयोजकम् । अतः प्रयोजनान्तरप्रयुक्तयोस्तयोरनुष्ठितयोस्तत्कर्त्रा भक्षोऽनुष्ठीयत इति अर्थाद्धोमा-भिषवयोर्निमित्तत्वं जातमित्यदोषः ॥ २५ ॥

( ८–उभयाग्निनाशे पुनराधानरूपप्रायश्चित्ताधिकरणम् )

## पुनराधेयमोदनवत् ॥ २६ ॥ पू०

**यस्योभावनुगताविति** यद्वृत्ताद**नुगमनमग्निं प्राप्नुवन्निमित्तम्** । अनुगतोऽग्निर्निमित्तमित्यर्थः । **तस्य** च निमित्तस्य **यत् स्वपदगतं** विभक्त्युपात्तं **पदान्तरगतं वा विशेषणं** "यस्य पुरोडाशौ क्षायतः" इतिवत् "यस्योभयं हविरार्तिमार्च्छेत्" इतिवच्च, **तदविवक्षितमित्युक्तम्**, आर्त्यधिकरणे ग्रहाधिकरणे च । **इहापि** निमित्तत्वात् स **एव न्यायः** । तस्मादन्यतरानुगमनेऽपि पुनराधेयं स्यादिति । "यथा इह यक्ष्ये, इह सुकृतं करिष्यामि" इति पूर्वपक्षान्ते भाष्यम् । तस्यायमर्थः प्रतीयते—यथेदं शातपथं वाक्यमन्यतराग्निविषयम्, तथा 'यस्योभौ' इत्येतदपीति । न तु तथा मन्तव्यमित्याह—**"इह यक्ष्ये, इह सुकृतं करिष्यामि"** इति । अस्मिन् वाक्येऽग्निद्वयदर्शनात् **सिद्धान्तग्रन्थोऽयं** प्रमाद्यद्भिर्लेखकैरत्र लिखित इति ॥ २६ ॥

## द्रव्योत्पत्तेर्वोभयोः स्यात् ॥ २७ ॥ सि०

आहवनीयस्यालौकिकत्वाद् यथा ब्राह्मणवसन्तादिसद्भावेनात्मलाभः, एवं गार्हपत्येन सहोत्पत्त्यैवात्मलाभः, न केवलस्य। एवं गार्हपत्यस्याप्याहवनीयेन सहोत्पत्तिः, न केवलस्य। यथाधानं ब्राह्मणकर्तृकत्वादीतिकर्तव्यतोपेतमेवाग्निजनकं नान्यादृशम्, तथा सहैवाग्निद्वयं जनयितुं तस्य सामर्थ्यमवगतं नान्यादृशम्। यथावगतञ्च निमित्ते विधीयते। नहीदं कर्मान्तरविधानम्, "पुनराधेयमेव तस्य प्रायश्चित्तिः" इति एकवाक्यत्वात्। आवृत्तौ ह्ययं भवति, यथा पयसा भुक्त्वा देवदत्तः पुनः पयसैव भुङ्क्त इति। तेन यद्वसन्तादि[1]वाक्यविहितं तदेवाग्न्यनुगमे प्रायश्चित्तम्। तच्चाग्निद्वयं सहैवोत्पादयितुं शक्तं नान्यतरम्। तथा शातपथिका द्विवचनयुक्तमेवाधानं समामनन्ति। "तस्यैवमग्नी आदधीत" इत्युपक्रम्य "मथित्वा ज्वलयन्ति, इह यक्ष्ये इह सुकृतं करिष्यामि" इत्याद्याम्नाय पश्चादप्युपसंहृतम्—"अग्नी आधाय सत्यं वदति" इति। तस्माद्यथास्मिन् वाक्येऽग्निद्वयजनकमाधानम्, एवं पुनराधानवाक्येऽपि तस्यैव निमित्ते विधानात्तदग्निद्वयजनकमेतत्, नान्यतरजनकमिति। अथान्यतरानुगमेऽपि द्वयमप्युत्पाद्यत इत्युच्यते, तत्राह—**कार्यार्था चोत्पत्तिः। सा चान्यस्मिन् विद्यमाने** तेनैव कार्यसिद्धेर्न **घटते। अथ सहैवोत्पाद्यते, इतरस्य च** यस्य कार्यं नास्ति तस्य पूर्वावस्थितस्याधुनातनस्य वा **त्यागः** क्रियते? उत्तरम्, [2]**अविद्यमान उत्पाद्यते। स च विद्यत एव** यो नानुगतः। नह्याहवनीयद्वयमस्ति, येन विद्यमानेऽप्येकस्मिन्नपर उत्पाद्येत। **किञ्चोत्पन्नस्य चाग्नेर्यावज्जीवं धारणम्। परित्यागे दोषः श्रूयते** "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति। **किञ्चाविद्यमानसहोत्पत्त्याहवनीयस्योत्पत्तिः शास्त्रादवगता, नेतरथा। तस्मान्नैमित्तिकमपि सत्** स्वसामर्थ्यादुभयानुगमने **पुनराधेयम्**॥ २७ ॥

---

१. 'वाक्य' नास्ति—क०।

२. अविद्यमानम्—क० ख० ग०।

(९—हविरार्तौ कर्मान्तरविधानाधिकरणम्)

**पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २८ ॥ पू०**

**द्रव्यविनाशे द्रव्यमभिलषतः** प्रकृतस्यामावास्याकर्मण **ओदनः पञ्चशरावपरिमितो द्रव्यं विधीयते**। कुतः? **एवं हि सत्यपेक्षितसम्बन्धो** भवति, द्रव्यान्तरस्यापेक्षितत्वात्। **कर्मान्तरे तु** सत्यनपेक्षितत्वाद- **दृष्टं कल्प्यम्। एवञ्चौदनस्य आनन्तर्यलक्षणया** प्रत्यासत्तिलक्षणया **श्रुत्या न्याय्यैव कर्तव्यता** विधेयता। निर्वापे हि धात्वर्थे स्वपदस्थे द्रव्यमस्मिन् पक्षे विधिना विधीयत इति श्रुत्यनुग्रहः। कर्मान्तरपक्षे तु निर्वपतेः परेण प्रत्ययेन द्रव्यदेवतयोः सम्बन्धविधानादत्यन्तं वाक्यं स्यात्। तस्माद्दोहप्रतिनिधिः पञ्चशरावः। तस्य चैन्द्रत्वादैन्द्रपदं नित्यानुवादः ॥ २८ ॥

**चोदना वा द्रव्यदेवताविधेरवाच्ये हि ॥ २९ ॥ सि०**

**देवताया** इन्द्रस्य **परिमाणस्य** पञ्चशरावस्य **चाप्राप्तत्वात्** तयोर्द्वयोरोदनस्य च द्रव्यविधावनेकगुणविधानात्, प्राप्ते च कर्मण्यनेकगुणविधानानुपपत्तेः **कर्मान्तरमिदम्**। न चेन्द्रो नियमेन प्राप्तः, पक्षे महेन्द्रस्यापि देवतात्वात्; पाक्षिकानुवादस्य चान्याय्यत्वात्। यत्त्वपेक्षितं द्रव्यमिति, तत्राह—**द्रव्ये चासति प्रतिनिधिर्भवति, विद्यते च लौकिकं पयः**। तस्मिन मुख्ये सति द्रव्यान्तरमनपेक्षितमिति ॥ २९ ॥

(१०—नैमित्तिकपञ्चशरावयागस्य दर्शाङ्गताधिकरणम्)

**स प्रत्यामनेत् स्थानात् ॥ ३० ॥ पू०**

**अमावास्याभावो द्रव्याभावात्**। नन्वत्रास्ति लौकिकं पयः? न, संस्काराभावेन विगुणत्वात्। तस्मादभावः कर्मणः। **ततः किम्? उत्तरमाह— कर्माभावेन प्रतिषेधो लक्ष्यते**। नहि विनष्टस्य निष्फलस्य कर्तव्यता भवतीति विनाशेनाकर्तव्यतात्मा प्रतिषेधो लक्ष्यते, **प्रतिषेधेन च स्वकार्यं** लक्ष्यत इत्यनुषङ्गः? अकर्तव्ये हि कर्मणि तत्साध्यं फलं साधनाभिलाषि संप्रतीयते।

तथा **पञ्चशरावोऽपि दर्शाभावे विधीयमानः प्रयोजनाभिलाषी।** **तस्मात् साकाङ्क्षत्वादभावेन यत्प्रयोजनं** दर्शसाध्यं **लक्ष्यते तत्साधयन्नेकवाक्यतां** [1]**दर्शेन याति**—यस्य हविरार्त्या सम्बद्धं तस्य दर्शो न कार्यः, स तत्फलं पञ्चशरावेण भावयेदिति। ननु दर्शस्य फलसाधनस्य सन्निधानात्तदङ्गमेव स्यादत आह—**फलसाधनस्य नाङ्गं भवति। अयथाश्रुतकरणे** तस्य **फलवत्त्वाभावः, फलवत्त्वाभावाच्च** पञ्चशरावस्यापि तदङ्गत्वाभावः। कुतः? **अफलसाधनस्य हि यदङ्गं तदनर्थकं** स्यात् ॥ ३० ॥

## अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३१ ॥ सि०

**आरब्धं कर्म** येन केनापि द्रव्येणावश्यं **समापनीयम्। तस्माद्दर्शकर्मणो नास्त्यभावः। तद्भावात्तस्य** दर्शस्य विद्यमानत्वात्। [1]**कार्यस्य लक्षकं नास्ति।** नहि सत्येव साधने फलस्य साधनान्तरापेक्षास्ति। तेन द्रव्याभावेन तावत् प्रतिषेधो लक्षयितुं न शक्यते। **न** चाहत्य **दर्शं प्रतिषिध्य पञ्चशरावो विधीयते। यथा गिरापदं प्रतिषिध्यैरापदं** विधीयते "न गिरा गिरेति ब्रूयात्, ऐरं कृत्वोद्गायेत्" इति। **तत्र** **ऐरापदस्य** विधीयमानस्य **गिरापदं कार्यं लक्षयति प्रतिषिध्यमानम्। एवमिह नास्ति** प्रतिषेधो येन कार्यं लक्ष्येत। **तस्मात् पञ्चशरावविधावपि।** यद्यपि पञ्चशरावो विधीयमानत्वात् फलापेक्षस्तथापि **कार्यापत्तेरभावाद्दर्शस्थानापत्तिर्नास्ति।** किन्तर्हि तस्य [2]फलम्? नह्यश्रुतफलकल्पना युक्ताऽत आह—**यथाश्रु**तेन द्रव्येणा**करणा**द्दर्शस्य यो **दोषो वैगुण्यात्मक उपजायते, तन्निर्घाताकाङ्क्षायां विधीयमानं** कर्म **तद्दोषप्रतिसमाधानार्थत्वेन** दर्शे**नैकवाक्यतां याति।** तस्मात्तदङ्गमेतदिति सिद्धम् ॥ ३१ ॥

---

1. 'दर्शं नयति' इति मुद्रितमूलपाठः। दर्शेनायाति—क०।

१. तत्कार्यस्य—ग०।

२. 'फलम्' नास्ति क०।

( ११–सत्रसङ्कल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानाधिकरणम् )

## विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ ३२ ॥ सि०

प्रवृत्ते चाप्रवृत्ते च विशेषाश्रवणाद्भवेत् ।
प्रवृत्त एव वा कुर्यादन्यथा फलकल्पनात् ॥

प्रवृत्तेन हि क्रियमाणः सत्राङ्गमेव भवतीति न फलं कल्प्यं स्यात् । तत्रैकेषां मतेन सिद्धान्तमाह—**फलमात्मसम्बन्धि** स्यात्, तदर्थं च[1] **कर्मापीत्येवमभिसन्धाय पुमान् प्रवर्तते** । न तु केवलं कर्माभिसन्धाय । अतश्च यथासिद्धागोरणानुवादात् **सत्रायागूर्येति सत्रफलमागूर्येत्यर्थः** । किमिति पुनरेवं भवति, कर्मणोऽपि ह्यस्त्येवागोरणम् । अतः सत्रशब्दस्य श्रुत्यर्थलाभाय कर्मागोरणमेवानूद्यताम्, अत आह—**तत्र फल आगूःकृतेऽभिसंहित इत्यर्थः** । **विश्वजिदुपायत्वेन विधीयते** । तृतीयायोगाद्धि करणभूतो विश्वजित् । न चास्य सत्रस्वरूपं प्रति करणत्वमुपपद्यते । तेनायं वाक्यार्थः—**सत्रफलमागूर्य विश्वजिता तत्साधयेदिति** । **एवं च[2] यदि विश्वजिता तत्साधितं न सत्रेणार्थः** । **अथ सत्रेण** साधितं **न विश्वजितार्थः** । तस्मात्तुल्यकार्यत्वाद्विश्वजित्सत्रयोर्विकल्पः, तस्मादप्रवृत्तावेव[3] विश्वजिदिति । एवन्तु सत्रग्रहणमतन्त्रं स्यात् । अन्याय्यश्च विकल्प आपद्येतेति मत्वा पक्षान्तरमाह—**अथवा यः सत्रेण फलं करिष्य इति सत्रं सङ्कल्पयति, तस्य सत्रकर्तव्यताऽशक्तौ यत्फलमभिप्रेतं तस्मिन्** मनसि विपरिवर्तमाने साकाङ्क्षे **विश्वजिदुपायत्वेन विधीयते** । ततश्च **सत्रं** करणत्वेनागूर्य तदशक्तौ **विश्वजितं** तस्मिन् फले मनसि विपरिवर्तमाने उपायत्वेन **कुर्यादित्ययं वाक्यार्थः** । पूर्वपक्षं दूषयन्प्रथमपक्षस्य तावद्दूषणमाह—**आगोरणमात्रे** निमित्ते सत्येकस्य [4]**वाक्यस्य द्वे भिन्ने प्रयोजने स्याताम्,**

---

१. 'च' नास्ति क० ।

२. 'च' नास्ति क० ।

३. देव–क० ।

४. 'वाक्यस्य' नास्ति क० ।

प्रवृत्ते कर्माङ्गत्वादप्रवृत्ते फलसाधनत्वात् । ततः किमित्याह—**तत्र विवक्षाभेददोषः स्यात्** । **सत्राय विश्वजिदित्येका** विवक्षा, **फलाय** विश्वजिदित्यपरा। एकरूपेण च शास्त्रेण भवितव्यम् । अथोभयत्रापि फलान्तरमेव कल्प्यते, तथा सति प्रतीतसत्रफलातिरेकेण फलान्तरकल्पनैव दोषः । तस्मान्नाविशेषः । द्वितीयं पक्षं दूषयति—**अङ्गपक्षे चागोरणस्य** नित्यप्राप्तत्वाद् **आगूर्येत्येतदवाच्यं** स्यात् । यः सत्रायागुरत इति यच्छब्दोपात्तं निमित्तत्वं न घटत इत्यर्थः । **यथान्येष्वङ्गेषु यः सत्रायागुरत इत्येतद् नोच्यते तथात्रापि** नोच्येत । तस्मात् सत्रमात्रमागूर्याशक्नुवतो विश्वजिदिति ॥ ३२ ॥

( १२–वत्सस्य व्रतकालोपलक्षणत्वाधिकरणम् )

## वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥ पू०

वत्सो व्रताङ्गं वत्सलक्षितो वा काल इति शेषशेषिचिन्तायाः कथं सङ्गतिः ? अत आह—**एतदौपोद्घातिकम्** । कथमित्याह—**अनेन कालेन कस्मिन् पक्षेऽधिकार इति** । चिन्तयितुमिति शेषः । किं सन्नयत्पक्षेऽयं काल उतासन्नयत्पक्षेऽपीति चिन्ता कालविधाने स्थितेऽवकल्पते नान्यथेति तदुपोद्घातोऽयं विचार इति । तत्र श्रुतिबलाद्वत्सविशिष्टं व्रतं विधीयते; वाक्यान्तरप्राप्ते वा व्रते वत्सोऽङ्गं विधीयत इति पूर्वपक्षद्वयम्, वत्सस्य हस्तादिव [हस्तादिवत्] व्रतकरणा[करणत्वा]नुपपत्तेः, प्रकारान्तरेण च साधनताऽज्ञानात्, कर्मत्वे च तृतीयाविरोधात्, वत्सस्य च व्रतयितुमशक्यत्वात्, विशसने च वत्सत्वव्याघातात्, "युत्पुरा वत्सानामपाकर्तोः" इत्यनेन चैकवाक्यत्वात्, विधित्वे च वाक्यभेदापत्तेः, अनुवादस्य च यथाविज्ञातगोचरत्वाद्वत्सलक्षितः कालो व्रताङ्गतया विधीयत इति सिद्धान्तः ॥ ३४ ॥

( १३–सान्नाय्येऽप्रवृत्तस्यापि व्रतनियमाधिकरणम् )

## कालश्चेत्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ ४१ ॥ पू०

उपांशुयाजे कालोपलक्षणत्वेन पुरोडाशद्वयमुपात्तम् । तत्राग्नीषोमीयाभावेऽपि एकपुरोडाशायामाग्नेयस्य पुरोडाशस्य सद्भावात्तेनैव तत्कालोपलक्षणसम्भवाद्युक्तः

कालानपायः। व्रतकालस्य तु वत्सापाकरणव्यतिरिक्तोपलक्षणानुपादानाद् असन्नयतश्च तदभावात् केन कालो लभ्यताम् [ लक्ष्यताम्। ] अलक्षितश्च कथमङ्गं स्यात्। तस्मान्नानेन कालेनासन्नयतोऽधिकारः। तदिदमुक्तं भाष्यकारेण— "अपाकरणं लिङ्गम्" इति। अपाकरणमेव कालस्य लिङ्गं चिह्नं नान्यदित्यर्थः। उच्यते—सर्वथा तावल्लक्षणमेव वत्सापाकरणं व्रतकालस्य, न तु व्रताङ्गम्, दोहार्थत्वात्। अतश्च तल्लक्षित एव कालो व्रताङ्गम्। स चान्वाधानादूर्ध्वः कालोऽसन्नयतोऽपि सम्भवत्येव। वत्सापाकरणं हि स्वकालद्वारेण व्रतकालं लक्षयति—न स्वरूपेणासम्बन्धात्। तेनायमत्र वाक्यार्थः—यो वत्सापाकरणयोग्यः कालस्तस्य पुरस्तात्काले व्रतमुपेयादिति। वत्सापाकरणाभावेऽपि तद्योग्यकालसद्भावादस्त्येव व्रतकालोपलक्षणम्। तस्मादसन्नयतोऽप्यस्त्येव काल इति ॥ ४१ ॥

( १४–प्रस्तरप्रहरणकाले शाखाप्रहरणाधिकरणम् )

## प्रस्तरे शाखा श्रयणवत् ॥ ४२ ॥ पू०

सङ्गतिमाह—**वत्ससंयोगप्रसङ्गेनारभ्यते**। वत्ससंयोगः कालार्थो नाङ्गाङ्गिभावार्थ इति स्थिते तत्प्रसङ्गात् प्रस्तरसंयोगोऽपि कालार्थ इति प्रतिपाद्यते। **अथवा शाखाप्रहरणे क्वाधिकारः?** किममावास्यायामेवोत पौर्णमास्यामपीति? एवं साक्षादेव **सम्बन्धः। ननु चतुर्थे प्रतिपत्तिः शाखाप्रहरणमिति स्थितम्,** "प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात्" इत्यत्र। एवं सति कथमधिकरणारम्भः। **उच्यते—प्रस्तरस्य प्रतिपत्तावपि** सत्यां **जुह्वादेरङ्गभावो दृष्टः। तेनेहापि** शाखायास्तद्वदेव गुणभावः **सम्भवेत्**। नह्यवश्यं प्रतिपत्तौ सर्वमेव प्रधानं भवति। **तत्कथमिदमित्याशङ्कायां युक्तस्तन्निकरणार्थ आरम्भः**। अस्यार्थः—चतुर्थे हरतेर्यज्यर्थत्वात्, तत्र च प्रस्तरस्य गुणत्वात्, तत्तुल्यत्वाच्च शाखापि गुणभूतेत्याशङ्क्य हरतिमात्रे साहित्यम्, न यजताविन्युक्तम्। इह तु भवतु हरतौ साहित्यम्, तथापि नावश्यं प्राधान्यं प्रह्रियमाणस्यैव प्रस्तरस्य शाखामिश्रणमङ्गं स्यात्, मैत्रावरुणश्रयणवदित्याशङ्का निराक्रियते ॥ ४३ ॥

कथं निराकरणम् ? तत्सूत्रं पठित्वा दर्शयति—

**कालविधिर्वोभयोर्विद्यमानत्वात् ॥ ४४ ॥ सि०**

**ननु च "सहयुक्तेऽप्रधाने" इति सहयोग एव तृतीया।** तेन प्रस्तरवत् शाखापि प्रधानमेव। जुह्वास्तु गुणभावः श्रूयते न साहित्यमिति चोदयति। **उच्यते-यद्येवं ततः शाखाया अपि यजौ गुणभावः प्रस्तरवत् स्यात्।** सहयोगे हि द्वयोरपि तुल्यवत् क्रियान्वयो गम्यते। यथा देवदत्तेन सहागतो यज्ञदत्त इत्युभयोरप्यागन्तृत्वम्, एवमत्रापि। तेन सहयोगबलादेव गुणत्वं गम्यते। प्रस्तरवदित्येतद्विवृणोति—**यथा "सूक्तवाक एव याज्या। प्रस्तर आहुतिः"** इति प्रस्तरस्य गुणभावस्तद्वदत्र शाखाया अपि स्यात्। उपसंहरति—**एवं चेन्न कालार्थता** संयोगस्य, किन्त्वङ्गप्रयोजनसम्बन्ध एवेति। **उच्यते—प्रस्तरे** यज्यङ्गभूतदेवताभिधायिसूक्तवाकस्य याज्यासंस्तुतस्य **निर्देशात्।**[1] **अथवा प्रस्तरस्यैव यज्यङ्गत्वेन** हविष्ट्वेन प्रस्तर आहुतिरिति वाक्यशेषे **निर्देशात्** प्रहरतेर्यजिरूपं कल्पितम्। कथमित्याह—**अन्यथा** यदि यागो न स्यात्तदा **याज्यादीनि न स्युरिति** हेतोर्याज्याशब्देन सूक्तवाकोऽभिधीयते। स च यद्यपि परमार्थतो न याज्या, तथापि यागसाधनत्वेन याज्यासाधर्म्याद् याज्येत्युक्तम्। तदयमर्थः—देवताभिधायिसूक्तवाकसम्बन्धस्तदभिधेयदेवता-सम्बन्धः सूक्तवाकस्य याज्यात्वसंस्तवः प्रस्तरस्य चाहुतित्वमिति सर्वमिदमसति यजिरूपत्वेऽनुपपन्नमिति प्रस्तरस्य यज्यङ्गत्वं कल्पितम्, **न त्वेवमत्र शाखायां** यज्यङ्गत्वे प्रमाणमस्ति। ननु प्रस्तरवत्तस्या अपि सहयोगबलादेव यागाङ्गत्वं स्यादितीमामाशङ्कामपनुदन्नुपसंहरति—**अतः प्रहरतिमात्रे शुद्धे सहयोग इति सूक्तम्।** नहि मन्त्रेण तयोः सहभावोऽश्रवणात्। अत एव न च देवतान्वयः। तस्मान्न यज्यन्वयः शाखायाः। सहयोगोऽपि शाखायाः प्रहरण एव, न यागे। प्रहरणे च प्रस्तरस्य प्रधानत्वात्तुल्यत्वेन शाखापि प्रधानमेवेति। एतच्चतुर्थ-सिद्धमिह प्रसङ्गादुक्तमिति वेदितव्यम् ॥ ४४ ॥

---

1. अथवा प्रभृति निर्देशात्पर्यन्तं ख० नास्ति।

## तस्माच्च विप्रयोगे स्यात् ॥ ४६ ॥

प्रयोजनसूत्रमेतत् । तत्र भाष्यकारेण प्रस्तराभावे शाखा न प्रहरतव्या [ हर्तव्या ] पूर्वपक्षे । सिद्धान्ते तु तदभावेऽपि प्रहर्तव्येत्युक्तम् । तत्र दर्शपूर्णमासयोः सर्वदा प्रस्तरसद्भावान्नेदं प्रयोजनं सम्भवतीति मत्वान्यथा व्याचष्टे—**यदि प्रस्तरस्य** प्रह्रियमाणस्य **गुणभूता शाखा ततो विना शाखया प्रस्तरो न प्रहर्तव्यः**, किन्तु सहैव शाखयेति व्याख्येयम्। अतः **पौर्णमास्यामपि प्रस्तरः शाखां प्रयोजयेदात्मसिद्ध्यर्थम्** । **सिद्धान्ते तु** पौर्णमास्यां **विनैव शाखया प्रहर्तव्य** इति भाष्याभिप्रायमाह—**अथवान्यथा व्याख्येयमुदाहरणम्**। यद्भाष्यकारस्याभिमतमुदाहरणं तदेवं व्याख्येयमित्यर्थः । तद्दर्शयति—**प्रातःसवनीयेषु प्रस्तरेण विना न प्रहर्तव्या शाखा पूर्वपक्षे, सिद्धान्ते तु प्रहर्तव्येति** । सवनीयेषु पशुतन्त्रमेव प्रसङ्गेनोपकरोतीति वक्ष्यते । तेन पाशुक एव प्रस्तरः सवनीयानां नान्यः । तस्य च प्रहरणं तार्तीयसवनिकाग्निमारुतादूर्ध्वमुत्कृष्यमाणैरनुयाजैरुत्कृष्टम् । शाखा तु पशोरनुपयुज्यमानत्वात् पयस्यार्थमेवाद्रियते । तस्याश्च प्रहरणं वैशेषिकत्वान्न प्रासङ्गिकैरनुयाजैरुत्कृष्टमिति प्रातःसवन एव कर्तव्यम्, शाखा प्रतिपत्त्यर्थत्वात् । प्रस्तराङ्गत्वे तु न कर्तव्यमिति ।

तस्मात्प्रधानमेव स्याच्छाखा नाङ्गं कथञ्चन ।
नह्यन्यत्र कृतार्थाया अन्यत्र गुणतोचिता ॥

इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
षष्ठस्य चतुर्थः पादः ॥



( १–अभ्युदितेष्ट्यधिकरणम् )

**अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥१॥ पू०**

अधिकरणमारिप्समानो निमित्तनैमित्तिकभावं तावत्समर्थयितुं परमतमुपन्यस्यति—"**यस्य हविर्निरुप्तं** [1]**पुरस्तात् चन्द्रमा अभ्युदियात्**"इति, "**ये मध्यमास्तानग्नये दात्रेऽष्टाकपालम्**" इति च द्वे एते वाक्ये। कुतः? **अर्थभेदात्**, उभयत्राप्याख्यातश्रवणात्। अतो न तयोः परस्परं निमित्तनैमित्तिकत्वसम्बन्ध इति केचिद्वदन्ति। तन्न, अर्थैकत्वात् प्रयोजनैकत्वादेकं वाक्यमित्युक्तम्। निमित्तनैमित्तिकत्वेन चैक एवार्थः। यदि हि निमित्तमपि विधेयं स्यात्, ततः प्रयोजनभेदाद्वाक्यभेदः स्यात्, न तु तदस्तीत्याह—**न चाभ्युदयो विधीयते**। यच्छब्दोपबद्धत्वान्निमित्तमेवाभ्युदयः। उपबन्धवशेन चाख्यातयोरपि युक्तैकवाक्यता।

**इदानीं** कियन्निमित्तमिति चिन्त्यत इति शेषः। '**यस्य, हविः, निरुप्तम्, पुरस्तात्, चन्द्रमाः**' इत्येतैः पञ्चभिः पदैर्विशिष्टं निमित्तमभ्युदयाख्यं प्रतीयते। चोदयति—**न च तावत्** परिमाणं पञ्चपदविशिष्टमित्यर्थः, [2]**निमित्तं नैमित्तिकेन सङ्गच्छते**; किन्तु **यावानेवाश्रयस्तावानपेक्ष्यते**। यावता विशेषणेन विनाभ्युदयस्य निमित्तता न घटते तावदेव गृह्यते, **यथा हविष आर्तिः**। **उच्यते—सर्वमत्रापेक्षितम्**। कथम्? **अभ्युदस्य** [ दयस्य ] **तावत्कर्ता चन्द्रमा विवक्षित एव**। **नह्यविशिष्टोऽभ्युदयो** नित्यत्वान्निमित्तं **भवति**। नियतदिक्त्वाच्चाभ्युदयस्य **पुरस्तादिति नित्यानुवादः**। ननु शुक्लादौ पश्चादपि चन्द्रमसोऽभ्युदयः सम्भवत्येव। तथा च तत्रापि प्रयुज्यते—'यदीजानस्य पश्चाच्चन्द्रमा अभ्युदेति' इति। कथं नित्यानुवादोऽत आह—**यत्पश्चाद्दर्शनं न सोऽभ्युदयः**। औपचारिकस्तत्राभ्युदयशब्दप्रयोग इति। हविर्निरुप्त-

---

१. 'पुरस्तात्' नास्ति क० ख०।

२. 'न' अधिकं ख० ग०।

मित्येतदपि विवक्षितमेवेत्याह—**न च कदाचिच्चन्द्रमा नोदेतीति** तन्मात्रस्य नित्यत्वेन निमित्तत्वानुपपत्तेर्**हविःप्रक्रमेण विशेष्यते। ततः**[1] **सर्वमीप्सितं** नैमित्तिकस्य। अतः सर्वं **विवक्षितम्। एवं** निमित्तं **विशोध्य** नैमित्तिकं **विचार्यते—किं कर्मान्तरं किं वा** प्रक्रान्तस्यैव **दर्शस्य विशेषमात्रमिति।** पूर्वपक्षमाह—**यागे च विधीयमाने** सति **नानेकगुणविधानं दुष्करम्। प्रकृते तु गुणविधाने वाक्यभेदः स्यात्।** विष्ण्वादिदेवतानां तद्गुणानाञ्च शिपिविष्टत्वादीनां चरुत्वस्य दध्याद्यधिकरणभावस्य च प्रकृतयागोद्देशेनैकेन[2] वाक्येन विधातुमशक्यत्वात्, तस्माद्यागान्तरं द्रव्यदेवतान्तरयुक्तं विधीयते। प्रकृतं तु कर्मकाले प्रवृत्तं लुप्यत इति ॥ १ ॥

## अपनयो वा विद्यमानत्वात् ॥ २ ॥ सि०

**विद्यन्ते हि कर्माणि प्रकृतानि,** येषु देवतान्तरमात्रं विधातुं शक्यते। **कतमानि तानि ?** प्रकृतानि हि देवतान्तरद्रव्यान्तर[3]युक्तत्वान्नैताभिर्विधीयमानाभिर्देवताभिर्द्रव्येण च सम्बन्धुमर्हन्तीति भावः। **उच्यते—श्रूयते ह्यत्र "त्रेधा तण्डुलान् विभजेत्"** इति। तत्र तावन्मध्यमादिरूपेण तण्डुलानां विभागं विधत्ते, मध्यमादीनां देवताविशेषविधानादेवार्थसिद्धत्वात्। किं तर्हि विधीयते ? तद्दर्शयितुमाह—[4]**तत्र त्रेधेत्यनुवादः।** कुतः प्राप्तिरित्याह—**त्रित्वादर्शयागानाम्। तण्डुलानित्यपि** संयुक्तमात्र**प्रदर्शनार्थम्। कुतः ? विभागस्य** विधेयस्य **दर्शनात्। अन्यथा** यदि तण्डुलानित्यपि विधीयते, ततो विभजेरन्, तण्डुलांश्चेत्य**नेकार्थविधानाद्वाक्यभेदः स्यात्।** ननु तण्डुलविशिष्टो विभागो विधीयते कथं वाक्यभेदोऽत आह—**न च विशिष्टविधानमत्र युक्तं कल्पनागौरवभयात्। अतोऽयं** वाक्यार्थः—**विभजेत्कमित्यपेक्षायां**

१. अत–पू० मु० पाठः।
२. नैकवाक्येन–क०।
३. प्रयुक्त–क०।
४. अत्र–पू० मु० पाठः।

सामर्थ्यादेतत्प्रतीयते **संयुक्तमिति**। **किञ्च, संयुक्तमिति** प्रकृतत्वाद् **द्रव्य-देवतम्**। **केन संयुक्तम्? यागेनेति**। तेन प्रकृतेभ्यो यागेभ्यो द्रव्यदेवतं यागत्रैविध्यात् त्रेधाभूतं विभजेदिति वाक्यार्थः। **अतो विभागोत्तरकालं** [1]**शुद्धा यागा विद्यन्ते प्रकृताः**। **इदानीं निर्वपेदिति भावना** द्रव्येण देवतया तद्गुणेन च **विशिष्टा** विहिता **यागमन्तरेणानाश्रयानुपपद्यमाना-र्थाद्यागमन्यं** वा **कल्पयति, प्रकृतं वा** द्रव्यदेवताकाङ्क्षि**णमुपादत्ते**। **तत्र कल्प्यात् प्रकृतप्रत्ययो बलवान्**। तद्यथैन्द्रवायवादिवाक्येषु "सोमेन यजेत" इत्यस्मिन् साकाङ्क्षे समुपतिष्ठमाने न यागान्तरकल्पना, तथात्रापि प्रकृतानां यागानां द्रव्यदेवतापेक्षत्वात्, एतासाञ्च द्रव्यदेवतासम्बन्धभावनानां यागा-पेक्षत्वात् परस्परसम्बन्धः। पञ्चशरावे तु प्रकृतस्यानपनीतद्रव्यदेवतस्य न द्रव्य-देवतान्तरसम्बन्धभावनान्तरविधावपेक्षावशेन तावन्मिथोऽन्वयसिद्धिः। [2]यदि परं वाक्येनैव प्रकृतोद्देशेन द्रव्यदेवताविधानं स्यात्, तथा च वाक्यं भिद्येतेति युक्तं कर्मान्तरविधानम्। इह तु साकाङ्क्षत्वात् प्रकृतैरेवासामन्वयः। केन पुनर्यागेन का भावनान्वीयत इत्यत आह—**प्रकृतसम्बन्धविधानाच्च**। यथाक्रमन्यायेन **प्रथमभावनायाः प्रथमो यागः, उत्तरौ तूत्तरयोः** ॥ २ ॥

## तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥

ये मध्यमा इत्यादियच्छब्दवशात् प्रकृतगामित्वं प्रतीयते। यत्त्वने-कगुणविधानात्कर्मान्तरमिति, तत्राह—**नैवात्रानेको गुणो विधीयते**[3] कर्मोद्देशेन। **किन्तर्हि? विद्यमानस्यैव** हविषस्तण्डुलाख्यस्य यो **मध्यमविभागस्तेनाग्निना** दातृत्वेन च विशिष्टा **भावना प्रकृतयाग-सम्बद्धा विधीयते, तथोत्तरे** अपि भावने। ते एव दर्शयति–दध्ना क्षोदिष्ठेन च तण्डुलभागेन चर्वर्थेनाधारेणेन्द्रेण प्रदातृत्वेन च विशिष्टा, तथा

---

१. शुद्धयागा–पू० मु० पाठः।
२. न यदि–ख०।
३. विधातुं शक्यते–क०।

पयसा स्थविष्टेन च तण्डुलभागेन विष्णुना आदिशब्दोपात्तेन शिपिविशिष्टत्वगुणेन विशिष्टा भावना विधीयते। **मध्यमादिश्रवणाद्धे** मध्यमा इत्यादिभिर्वाक्यैरित्यर्थः। एवमपि कथमवाक्यभेदोऽत आह—**एवञ्च** भावनाविधाना**दर्थानां बहूनामविभागः**, एकेनैव विधिना विधानं सिद्ध्यतीति। एवं भावनाविधानमाश्रित्य वाक्यभेदं परिहृत्याधिकरणं नीतम्। इदानीं **भाष्यव्याचिख्यासया** यथा भाष्यकारेणाधिकरणं वर्णितं तथा **वर्ण्यते। अत्र** भाष्यकारीये मते **प्रकृतेषु यागेषु द्रव्ये[1] वाविभक्ते देवताविभागमात्रं विधीयते**। न द्रव्यस्य यागाद्विभागो विधीयते, किन्त्वपरित्यक्तयागान्वयस्यैव द्रव्यस्य देवताविभागमात्रं विभजतिना विधीयते। देवताभ्यो द्रव्यं तण्डुलादि विभजेदिति। तण्डुलग्रहणं चेदानीं न संयुक्तमात्रप्रदर्शनार्थम्; किन्तु संयुक्तहविर्मात्रप्रदर्शनार्थम्। **तथाभूतस्य च देवतान्तरं** मध्यमादिश्रवणै**र्विधीयते** मध्यमानामग्निर्दाता, क्षोदिष्ठानां दध्नश्चेन्द्रः प्रदाता, स्थविष्ठानां पयसश्च विष्णुः शिपिविष्टः। नन्वेवं देवतानां तद्गुणानां च दातृप्रदातृशिपिविष्टत्वादीनां विधानाद्भिद्येतैव वाक्यम्? न, एककारकविधानात्। ननु—

अनेकपदसम्बद्धं यद्येकमपि कारकम्।
तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते॥

इत्युक्तम्। ततश्च यथैवाग्निप्रजापत्योः प्राप्तकर्मानुवादेन नैकेन वाक्येन विधिः सम्भवति, तथैवात्रापि देवतायास्तद्गुणस्य च न विधानं सम्भवतीति। विषम उपन्यासः। तत्र हि द्वावप्यग्निप्रजापतिशब्दौ व्यधिकरणौ पृथग्भूतौ च नैकं विशिष्टं प्रतिपादयतः। अतस्तत्रोभयविधानाद्वाक्यभेदः, इह त्वग्न्यादिशब्दानां दात्रादिशब्दानां च सामानाधिकरण्यात् तत्प्रतिपादितमेकं विशिष्टं देवताकारकमेकेनैव विधिना सुविधानम्। नन्वरुणैकहायन्योरिव-लाक्षणिकसामानाधिकरण्यबाधेन कारकविभक्तिश्रुत्या द्वयोरपि क्रियया सम्बन्धान्न मिथो विशेषणविशेष्यभावसिद्धिः? उच्यते—सत्यं न विशेषणविशेष्यभावसिद्धिः, यदि लाक्षणिक-

१. चाविभक्ते—पू० मु० पाठः।

[कं]गुणमात्रवचनस्यारुणादिपदस्येवैकहायनीपदेन द्रव्यवाचिना सामानाधिकरण्यं स्यात्, इह तु दातृप्रदातृशिपिविष्टशब्दानां कृदन्तानां श्रुत्यैव क्रियाविशिष्टसन्निहिताग्न्यादिवचनत्वाच्छ्रौतमेवाग्नीन्द्रविष्णुपदैः सामानाधिकरण्यमिति पदद्वयेनापि प्रतिपादितं विशिष्टमेकं कारकमेकेन विधिना शक्यविधानमिति। एवमपि च दधि च क्षोदिष्ठांश्च तण्डुलानुद्दिश्य देवतायां विधीयमानायां प्रत्युद्देश्यं वाक्यसमाप्तिः स्यात्। नहि दधिसहितास्तण्डुला उद्देष्टुं शक्यन्ते, उद्देश्यसाहित्यस्याविवक्षितत्वात्। तस्मादेकैकमेवोद्दिश्य देवताविधानात् प्रत्युद्देश्यं वाक्यसमाप्तिः स्यादेव। सा चाङ्गीक्रियत एवेति न कश्चिद्दोषः। नन्वेवं सति चरुता सप्तम्यर्थश्च कथमन्वीयतेऽत आह भाष्यकारः—"**तत्रार्थप्राप्ता श्रपणे सति चरुता सह सप्तम्यर्थे [1]नार्थप्राप्त्यैवैतस्मिन् वाक्येऽनूद्यते**" इति। तदनुभाष्य चोदयति—**सत्यमेतत्**, श्रपणे सति चरुता प्राप्तैव; किन्तु **दध्नः श्रपणमेव न प्राप्नोति**। तदभावे च कथं तदधिकरणं चरुत्वमनुवदितुं शक्यमिति। **उच्यते—वचनाच्छ्रपणं** भविष्यति। **सह श्रपयतीत्य**भ्युदयेष्टिप्रकरणे हि सहश्रपणमेकदेवत्यानां विहितमिति। **नन्वनेन श्रमणमनूद्य सहत्वमात्रं विधीयते**। तत्कथमनेन दध्नः श्रपणप्राप्तिः? परिहरति—**लाघवादेव सहत्वं प्राप्तमेवातो** न विधेयम्। **अनेन तु** वचनेन **दध्न एव श्रपण**मन्यतोऽप्राप्तं **विधीयते**। ननु न साहित्यमर्थात् सिध्यति। कपालेषु श्रपणमौषधस्य। उखायान्तु सान्नाय्यस्य। तत्कथमर्थात्साहित्यप्राप्तिः? सत्यम्। साहित्यमपि विधीयते, न तु तन्मात्रम्, मन्दफलत्वात्। अतो दध्नोऽपि श्रपणमनेनैव भवतीति भावः। तदेतद्वक्ष्यामः। अतो**ऽर्थप्राप्ता चरुता सप्तम्यर्थश्च**। तस्मान्न कर्मान्तरम्। एवं चातञ्चनाभ्यासदर्शनमुपपन्नं भवति। एवं हि श्रूयते—"यदि बिभीयादभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत्। फलीकृतैस्तण्डुलैरुपासीत। अर्द्धं दधि हविरातञ्चनार्थं निदध्यादर्धं न यद्यभ्युदियात्तेनातच्य प्रचरेत्। यद्यू न ब्राह्मणं भोजयेत्" इति। यदि कर्मान्तरमिदं नैमित्तिकं स्यात्ततः सायंदोहस्य दर्शार्थमुपात्तस्य तत्रानुपयुक्तस्यार्ध [खं] कर्मान्तर उपयुक्तेऽपि

---

१. प्राप्तैनैवै—ख० ग०।

प्रारब्धस्य प्रयोजनस्याकृतत्वात्तदुन्मुखतयैवावस्थितस्येतरार्द्धस्यैकान्तरिताद्दर्शात्काल-वैगुण्येन प्रच्यवमानस्य 'तेनातच्य प्रचरेत्' इति वचनेन दर्शविधानं प्रतिप्रसवः स्यात्। ततश्च हविष्ट्वेनैव प्राप्नुयात्। तत्र तेनातच्य प्रचरेदित्यन्तवचनानुवादो न घटते। तत्रानेनैव वचनेन तस्य कर्मसम्बन्ध आतञ्चनद्वारसम्बन्धश्च विधीयेयाताम्। तच्चान्याय्यम्, अस्मत्पक्षे तु दर्शस्य प्रारब्धस्य तेन दध्ना कृतत्वात् कृतकरस्य दध्नोऽर्द्ध-मेकान्तरिते दर्शे विनियुक्तमिति तत्र प्रतिप्रसवत्वासम्भवाद् हविष्ट्वे चायोग्यत्वात् सामर्थ्यादेवातञ्चने प्राप्तमिति तस्य कर्मसम्बन्धोऽप्राप्तो वचनेन विधीयते। सामर्थ्य-सिद्धं त्वातञ्चनमनूद्यत इति लाघवम्। तस्मादपि न कर्मान्तरम्। यत्तु कैश्चित् प्रयोगान्तरविधानमुक्तम्, तन्नातिहृदयङ्गमम्। प्रारब्धस्यावश्यसमापनीयत्वात् प्राप्त एव प्रयोगो न विधेयः, तदनुवादेन त्वित्थं प्रयोक्तव्यमिति विशेषमात्रं विधेयम्। बहवश्च विशेषा विधीयन्त इति वाक्यभेदः। तस्माद्यथोक्तेन न्यायेन भावनान्तर-विधानं देवतान्तरमात्रविधानं वेति वक्तव्यम्। तत्रापि भावनान्तरविधौ गौरवाद्देवताविधानमेवाभिमतमिति। तस्मात् प्रकृतानि द्रव्याणि देवताभ्यो विभक्तान्युद्दिश्य देवतान्तरविधानमेवैतत् ॥ ३-८ ॥

ननु[1] न प्रकृतं शृतमस्ति, अभ्युदयकाले श्रपणस्याकृतत्वात्। अत उपादेय-मेवात्र[2] शृतं नोद्देश्यमिति। तत्रोत्तरं सूत्रम्—

## लक्षणार्था शृतश्रुतिः ॥ ९ ॥

नात्र श्रपणस्य भूतत्वं विवक्षितम्, किन्त्वितरलक्षणार्थैषा शृतश्रुतिरित्यर्थः[3]। किं पुनरनेन लक्ष्यते? तद्दर्शयति—**धर्माधिकं पयः शृतमित्युच्यते**। कैर्धर्मै-रधिकं कथं वा शृतशब्देन तल्लक्ष्यते अत आह—**श्रपणेन च सहचरिता धर्मा यस्मिन्** पयसि विद्यन्ते, तानेवाह—**वत्सापाकरणादयः** संस्कारा यस्मिन्

१. 'न' नास्ति ग०।

२. 'अत्र' नास्ति क०।

३. 'इत्यर्थः' नास्ति क०।

कृत[प्रकृत]कर्मसम्बन्धिनि विदिताः, तच्छृतमित्युच्यत इत्यन्वयः। **तदिदं** भाष्यकारेण **शृतसहचरितधर्मकं पय** इत्युक्तम्। श्रपणसहचरितधर्मकं पयः श्रृतशब्देनाभिधीयत इत्यर्थः ॥ ९ ॥

( २–उपांशुयाजेऽपि देवतापनयाधिकरणम् )

## उपांशुयाजेऽवचनाद्यथाप्रकृति ॥ १० ॥ पू०

अधिकरणारम्भमाक्षिपति—**उपांशुयाजः पौर्णमास्यामेव नामावास्यायामिति** दशमोपान्त्ये **वक्ष्यति**—"अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगात्" इति। तेनामावस्यायामुपांशुयाजस्याभावात् कथं चिन्ता। अथ कृत्वाचिन्तेत्युच्यते? तत्राह—**न च कृत्वाचिन्तेयमिति वृत्तिकारोऽभिलषति। अतोऽधिकरणारम्भो न युज्यते।** **युक्तो** वारम्भः। कथम्? **बह्वृचब्राह्मणे स्पष्टेन वाक्येनामावास्यायामपि विहितत्वादुपांशुयाजस्य। कथं तर्हि दाशमिकम्? अनपेक्ष्य वचनं न्यायमात्रमेतत्**[1]। तत्र देवतान्तरसम्बन्धावचनात् सान्नाय्यौषधयोरेव तद्वचनाद्यथाप्रकृत्येवोपांशुयाजः स्यादिति पूर्वपक्षः ॥ १० ॥

## अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥ सि०

**अकाले तन्त्रप्रवृत्तौ** निमित्ते **नैमित्तिकं** विभजनं हविषो **विधीयते विभजेदित्यनेन** वचनेन। न चात्र तण्डुलग्रहणं विवक्षितम्। हविर्मात्रोपलक्षणार्थं तदित्युक्तम्। अतोऽस्याप्यस्त्येव विभागः। यत्त्वस्य देवतान्तरसम्बन्धो नास्तीत्युक्तम्, तत्र भाष्यकारेण परिहारद्वयमुक्तम्। विभजेदिति विभागं कुर्यादित्यादिनैकः, अथवेत्यादिनाऽपरः। तत्र प्रथमाभिप्रायमाह—अत्र विभजेदिति **वीत्युपसर्गः कर्मव्यतिहारार्थीयः। अन्योन्यं देवताविशेषं प्रति द्रव्यस्य भजनं कर्तव्यमित्यर्थः।** तद्यथा "मनुः पुत्रेभ्यो दायं व्यभजत्" इत्यत्र पुत्राणामन्योन्यभजनं विभागः, तथेहापि प्राकृतीभ्यो देवताभ्यो या अन्या वक्ष्यमाणा देवतास्ताभ्यः

---

१. न्यायमात्रं तु तत्–क०।

प्रकृतं[1] हविर्विभजेदिति वैकृतीनामेव देवतानां मिथो भजनं प्रकृते द्रव्ये विभजेदिति विधीयते। प्राकृतीभ्यस्त्वपनयो द्रव्यस्यार्थसिद्धोऽस्मिन् पक्षे। नहि ताभ्योऽनपनीय देवतान्तरेभ्यः कर्तुं शक्यमिति। नन्वेवं सति विशब्दः पृथग्भाववाची लक्षणार्थः स्यादत आह—**एवं विशब्दः** कर्मव्यतिहारार्थीयः [2]**श्रुत्या** श्रुत्यर्थे वृत्तो भवति। कर्मव्यतिहारोऽपि[3] श्रुत्यर्थ[4] एवेति भावः। **धातुना च प्रत्ययस्याविप्रकर्षः** सिध्यति, भजनस्यैव कर्मव्यतिहारविशिष्टस्य विधेयत्वात्। भवत्वेवं प्रकृते तु किमायातमित्यत आह—**एवमन्योन्यसम्बन्धभजनं** वैकृतीभ्यो देवताभ्यः **कुर्यादिति सामान्यवचनेन विभाग उपांशुयाजद्रव्यस्यापि** विहितः। तेनास्त्येवास्यापि देवतान्तरसम्बन्ध इति। किमिति पुनः सामान्येनैवास्य विभागो न पुनर्विशेषेणेत्यत आह—**मध्यमादिवद्विशेषवचनाभावात्**। यथा मध्यमादितण्डुलभागानां दधिश्रृतयोश्च विभागविशेषवचनमस्तीद-मस्यै देवतायै इदमस्या इति, न तथोपांशुयाजस्य। अतो**ऽस्मिन् पक्षे चतुर्गृहीतमुपांशुयाजार्थं त्रिष्वपि यागेषु विभागेन प्रक्षेप्तव्यम्। सोऽयमस्य सामान्यविभागः**। **अथवे**त्यादि भाष्यमनुभाष्य अयमेव पक्षः पूर्वस्माच्छ्रेयानिति दर्शयति—**अस्मिन् पक्षे विभजेदिति विभागार्थीयो विशब्दः** [5]**श्रुतिवृत्तो** भविष्यति। यत्त्वितरस्मिन्नपि पक्षे [6]**श्रुतिवृत्त** एवेत्युक्तं तत्राह—कर्मव्यतिहारपक्षे **तु संयुक्तस्य कारकस्य** हविराख्यस्य **वियोगेन** पृथग्भावे-नोत्तर**संयोगं लक्षयेत्**। पृथक्कृतेन हविषा संयोगं भजेदिति हि तत्र वाक्यार्थः। ततश्च वियोगवाची विशब्दस्तत्पूर्वके संयोगे लक्षणया वर्तते, न त्वयमपि

---

१. प्राकृतम्—क०।

२. श्रुत्याश्रु—क०।

३. हारेऽपि—ख०।

४. श्रुत्य—क०।

५–६. श्रुति—क०।

[1]श्रुत्यर्थ एवेति युक्तमनेकार्थत्वस्यान्याय्यत्वात्। तस्माल्लक्षणैव। **लक्षणा च लौकिकी सत्यां गतावयुक्ता। ननु वियोगो भजनं च विरुद्धावर्थौ न शक्यौ परस्परेण विशिष्टौ विधातुम्।** अवश्यं हि धातूपसर्गयोर्मिथो विशेषणविशेष्यभावोऽङ्गीकर्तव्यः। न च श्रुत्यर्थौ[2] वियोगो भजनसंबन्धार्ह इति संयोगलक्षणा न दुष्यति। **उच्यते—विशब्दार्थं केवलं** भजत्यनुवादेन **विधास्यामः।** प्राकृतीनां देवतानां यद्भजनं तस्य वियोगं कुर्यादिति। न तु विशब्दार्थविशिष्टं धात्वर्थम्, येन लक्षणा स्यात्। **नन्वेवं वाक्यार्थो** विधेयः **स्याद्धात्वर्थेऽन्यस्य** विधानात्? **सत्यमेतत्। विशिष्टविधानात्तु लघुतरोऽसौ यो धात्वर्थे**[3] वियोगस्य विधिः। तेनायं वाक्यार्थ इत्याह— **अनपराद्धस्य** पुरुषस्य **यथाप्रकृति द्रव्यदेवताभजने प्राप्ते** कालापराधे **निमित्ते नैमित्तिको भजनवियोगः शिष्यते।** न प्रकृतैर्द्रव्यैः प्रकृता देवता भजेत; किन्तु ताभ्योऽपनयेदिति। नन्वेवमुपांशुयाजद्रव्यस्यापनीतदेवतस्य देवतान्तरसम्बन्धो न स्यात्? भवतु, न कश्चिद्दोषः। तदाह—**तत्र देवताभ्योऽपनीतेषु सर्वहविष्षु कृते नैमित्तिके यस्य द्रव्यस्य पुनः संयोगवचनमस्ति देवतान्तरेण युक्तं तद्भवति, यस्य तु नास्ति तत्प्रहीणं** भवति। **न च चतुर्गृहीतस्यो**पांशुयाजद्रव्यस्य **पुनःसंयोगोऽस्ति। तस्माद्दे**वताभावात् [4]**प्रहीणमुपांशुयाजकर्मेति**। वचनबलाच्च[5] प्रारब्धापरिसमापनमप्यदोषः ॥११॥

( ३–अनिरुप्तेऽप्यभ्युदितेष्ट्यनुष्ठानाधिकरणम् )

## निरुप्ते स्यात् तत्संयोगात् ॥ १२ ॥ पू०

ननु हविरुभयत्ववन्निर्वापस्याविवक्षा सिद्धैव। किमर्थमिदमधिकरणमत आह–

---

१. श्रुत्य–क०।

२. श्रुत्य–क०।

३. धात्वर्थो–क०।

४. प्रहीणं लुप्तम्–ग०।

५. 'लाघवात्'इत्यधिकः क०।

आर्त्यां पदान्तरगतो गुणो विचारितः संख्याख्यः। इह तु पदान्तरगता क्रिया निर्वापाख्या विचार्यते किं विवक्ष्यते नेति। एतावानेवास्यार्त्यधिकरणाद्भेदो यत्तत्र गुणो विचारित इह तु क्रियेति। चन्द्राभ्युदयो ह्यत्र निमित्तम्। तस्य चाविशिष्टस्यानिमित्तत्वाद्धविर्विशेषणमाश्रीयते। तदपि नोदासीनं सदभ्युदयं शक्नोति विशेष्टमिति या काचित्क्रियापेक्षिता। तत्र श्रुतत्वान्निर्वाप एव विशेषणं भवतीति[1] पूर्वपक्षः। हविरभ्युदेतीत्येतावतैवाप्रवृत्तस्याभ्युदयासम्भवात् प्रवृत्तं हविरित्यवगते तावतैव निमित्तस्य पूर्णत्वादनपेक्षितं निर्वपणमविवक्षितमिति सिद्धान्तः॥ १२॥

( ४—अनिरुप्तेऽप्यभ्युदये वैकृतीभ्य एव निर्वापाधिकरणम् )

## अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात्॥ १६॥ पू०

हविर्मात्रमेवाभ्युदितं निमित्तमित्युक्तम्। नैमित्तिकस्तु देवतापनयः किं तण्डुलावस्थातः प्रभृति कर्तव्य उत यदैवाभ्युदयोऽवगतस्तदैवारभ्य कर्तव्य इति चिन्त्यते। तत्र तण्डुलान्विभजेदिति तण्डुलावस्थस्यैव देवतापनयविधानात्ततः पूर्वमनपनीतत्वात् प्राकृतीभ्यः एव व्रीहिनिर्वाप इति मन्यते।

विभागमात्रस्यैवास्मिन् वाक्ये विधेयत्वात्तण्डुलग्रहणस्य च प्रकरणगतहविरुपलक्षणत्वेनातन्त्रत्वान्निर्वापात् प्रागप्यभ्युदयेऽवगते[2] सति वैकृतीभ्य एव निर्वापः कार्य इति सिद्धान्तः॥ १६॥

( ५—अर्धनिरुप्ते चन्द्राभ्युदये तूष्णीमवशिष्टनिर्वापाधिकरणम् )

## विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात्॥१८॥ पू०

चतुर्मुष्टिनिर्वापस्यैकपदार्थत्वात्, तत्र च प्राकृतीनां निविष्टत्वात्, अवशिष्टस्यापदार्थत्वेनापनयदेवतान्तरसंयोगायोग्यत्वात् शिष्टमपि प्राकृतीभ्यः निर्वप्तव्यमित्येकः

---

१. भवतु—ख०।

२. 'अपि' नास्ति ख० ग०।

पूर्वपक्षः। निमित्तमात्रापेक्षत्वादपनयनसंयोगयोः पदार्थावयवेऽपि सम्भवात् शिष्टं वैकृतीभ्य एव निर्वप्तव्यमित्यन्यः ॥ १८ ॥

सिद्धान्तमाह—

**अभावाच्चेतरस्य स्यात् ॥ २० ॥ सि०**

**तुशब्दार्थे चशब्दः।** कथमित्यत आह—**इतरथा** यदि तुशब्दार्थे न स्यात्, ततश्चशब्दः **समुच्चयं वदेत्।** वैकृतीभ्य एव परिशिष्टं निर्वप्तव्यमित्यत्रैव पूर्वोक्ते पक्षे हेत्वन्तरं समुच्चिनुयात्। **स चायुक्तः।** कथमित्याह—**नहि पूर्वोक्ते पक्षे कस्यचिदभावो हेतुत्वेन** सम्भवति। सिद्धान्ते तु[1] प्राकृतस्यार्द्धस्य देवताभिर्वैकृतीभिः संयोगाभावादवशिष्टस्य चापदार्थत्वेन संयोगानर्हत्वात् तूष्णीं निर्वाप इति संभवत्यभावस्य हेतुत्वम्। **अपि च,** समुच्चयार्थत्वे सति वैकृतीभ्यः शेषमित्ययमेव सिद्धान्तः स्यात् सूत्रान्तराभावात्। न चासौ न्याय्यः। तूष्णींभाव एव न्याय्य इति प्रतिपादयन् पूर्वौ पक्षौ दूषयति—**प्राकृतीभ्यो निर्वापपदार्थं** कृत्स्नमाश्रित्याभिसन्धाय **प्रथमे मुष्टौ संयोगो निर्वृत्तः। तस्य** च पदार्थ-स्याभ्युदयेन **निमित्तेन विभजेदिति विभाग उच्यते।** ततः किमित्यत आह—**पदार्थ इति कृत्वा** प्राकृतीभिर्देवताभिर्निर्वापः **संयुक्तः**[2]। **पूर्वं** निर्वापस्य हि देवतासंयोगो विहितो न निर्वापावयवस्य, **इदानीमेकदेशस्ताभ्यो वियोज्यते।** कथं पुनः पदार्थे संयुक्तेऽवयववियोजनमत आह—**शक्यते च वियोक्तुम्।** कथम्? **वियोगस्य संयुक्तमात्राश्रयत्वात्।** तस्मान्न तावत् प्राकृतीभ्यः शेषः। नापि वैकृतीभ्य इत्याह—**न चान्यया देवतया संयोगः शक्यते कर्तुम्,** कुतः? **पदार्थाश्रयत्वात्तस्य** संयोगस्य। प्राकृतीनां हि स्थाने वैकृत्यो विधीयन्ते। ताश्च पदार्थसंयोगिन्यो[3] न तु साक्षादवयवसंयोगिन्यः। तेन

---

१. कृतस्या—ख० ग०।

२. संयुक्तेः—ख०।

३. 'न तु' प्रभृति 'तेन' पर्यन्तं नास्ति ख० ग०।

वैकृत्योऽपि पदार्थेनैव संयोगमर्हन्ति। **मुष्टिशेषश्च पदार्थैकदेशः। तस्मात् प्रकृत**[प्राकृत]**निवृत्ते वैकृतासंयोगाच्च तूष्णीं निर्वापः।** **अन्यत्रापि बह्ववयवे पदार्थे** सामिकृतेऽयमेव **न्यायः**, अभ्युदये सति परिशिष्टं तूष्णीमिति **यथा प्रदाने।** [1]**तत्राप्यनुवचनप्रैषयाज्यादयोऽवयवाः** ॥ २० ॥

( ६—असंनयतोऽप्यभ्युदये प्रायश्चित्ताधिकरणम् )

## साान्नाय्यसंयोगान्नासंनयतः स्यात् ॥ २१ ॥ पू०

दधिश्रृतयोरधिकरणत्वेनौषधसंस्कारत्वादसन्नयतश्च तदभावात् सन्नयत एवाभ्युदयेष्टिरिति पूर्वपक्षवादी मन्यते ॥ २१ ॥

सिद्धान्तमाह—

## नातत्संस्कारत्वात् ॥ २४ ॥

अत्र भाष्यम्—न दध्यधिकरणं चरोः, किन्तु[2] यथा स्थविष्ठा इन्द्राय प्रदात्रे तथा दध्यपि देवतासम्बन्धार्थमेव विधीयते, न तु चरुसम्बन्धार्थम्। भिद्येत हि तथा वाक्यमिति। तदनुभाष्य व्याचष्टे—**स्वार्थपरार्थवद्भावापेक्षमेतदुच्यते।** कथमित्याह—**देवतासम्बन्धेऽस्य** दध्नः **स्वार्थता** स्वयमेव हविष्ट्वात्, **चरुसम्बन्धे** तु प्रणीतावत् **परार्थतेति वैरूप्याद्वाक्यभेदः।** न च देवतासम्बन्धानाश्रयणेन केवलचरु[3]संस्कारार्थता शक्या विधातुम्, प्रक्रान्तप्रदेयत्वपरित्यागासम्भवात्। तण्डुलोद्देशेन च देवताया दध्नश्च विधाने वाक्यभेदापत्तेः। तस्माद्देवतामात्रं साान्नाय्यौषधयोर्विधीयते। कथं तर्हि सप्तमी? तत्राह भाष्यकारः—**सप्तम्यर्थोऽनुवाद इति।** तत्र चोदयति—**कथमेतत्।** स एवाह—**एतत्तावद्दर्शकमेव निमित्तेऽन्यथाकारमन्यथाभूतम्।** 'अन्यथैवंकथमित्थम्' इति णमुल्। ततः किमित्यत आह—**तत्र पयः स्वैर्धर्मैरुखादिभिर्धर्मवत्।**

---

1. तस्यापीति पूनामुद्रितवार्त्तिकपाठः।
2. 'किन्तु' क० नास्ति।
3. 'चरु' क० नास्ति।

**औषधस्यापि श्रपणं स्वैरेव धर्मैः प्रणीतादिभिर्धर्मवत्। तयोश्च प्रत्यक्षेण चोदनावाक्येन भिन्नमेव श्रपणमुपदिश्यते।** कपालेष्वौषधस्य, पयसस्तूखायाम्। तत्कुतस्तयोः **साहित्यं येनार्थप्राप्तः सप्तम्यर्थो भवेत्।** तदेवं श्रप्यमाणस्यापि पयसो नास्ति साहित्यम्, दध्नस्तु श्रपणमेव नास्तीति **तस्य दूरत एव नष्टः सहभावः। अथोच्यते**–पृथगपि श्रपणे कृते **पयसः पूर्वमवदाय** पश्चात्तत्र **चर्ववदानं निक्षिप्यते। एवं कृते पयसि दधनि च चरुर्भविष्यतीति। तदपि न,** कुतः? **नह्येतदवदाने** दध्नोऽधिकरणत्वं **श्रूयते** विधीयते[1]**अभ्युदयेन निमित्तेन। किन्तर्हि?** देवता**विभागोऽभ्युदये विधीयते** विभजेदिति। मध्यमादिभिश्च वाक्यैर्देवतान्तरसंयोगमात्रं हविषा [षो] विधीयते, न त्ववदानस्य दध्यधिकरणत्वम्, वाक्यभेदप्रसङ्गात्। अथासत्यपि वचने पूर्वावत्ते सान्नाय्ये पश्चादवदीयमानश्चरुस्तदधिकरणः संपद्यत इति तदनुवादत्वमुच्यते? अत आह– **न च वचनमन्तरेण दधि पयो वा चरोः शक्यं पूर्वमवदातुम्।** ननु दधिपयःसंयुक्तानामेव तण्डुलानां देवतापनयोऽन्यदेवतासंयोगश्च चोद्यते। तेनाभ्युदयानन्तरमेव दधिपयःसंसर्गात् सहश्रपणं स्यात्? नैवम्। नहि दध्यादिसंयोगविशिष्टो देवतापनयस्तण्डुलानां विधीयते। तथा सत्यसन्नयतस्तदसम्भवात् सिद्धान्तहानिः स्यात्। **तस्मादेवमेतद्विज्ञेयम्–अभ्युदितेष्टिप्रकरणे सहश्रपणविधात् वाक्यमस्ति, सह श्रपयतीति। अतः साहित्ये** श्रपणस्य **क्रियमाणेऽर्थप्राप्तः सप्तम्यर्थोऽनुवादः।** नन्वनेन वचनेन श्रपणस्य साहित्यं विधीयते, न तु श्रपणम्, अतः कथं दध्नः श्रपणप्राप्तिः? उच्यते, साहित्यार्थमेव दध्नोऽपि श्रपणं भवति। यदा हि समानदेवत्येन हविरन्तरेण [2]सहैव श्रपणं हविषो विहितम्, तदा तण्डुलश्रपणस्य दधिसाहित्यसंपत्तये दध्नोऽपि श्रपणं भवति। एवञ्च पेषणमपि तण्डुलानां न कर्तव्यम्, सह श्रपणे पुरोडाशस्य संपादयितुमशक्यत्वात्। पुरोडाशाभावे च पेषणं निवर्तते। तस्मात् सूक्तं चरुता सह सामर्थ्येनानुवाद इति। यत्तु भावना-

१. वाभ्युद–क०।

२. 'सहैव' क० नास्ति।

न्तरविधानं वाक्यभेदपरिहारार्थमाद्येऽभिहितं तत्किमिति नाङ्गीक्रियते ? तथाहि सर्वं सुस्थं भवति । तत्राह— **विशिष्टविधानं तु** मन्दधियां **निस्सरणोपाय-मात्रत्वेन भवति, न तु न्याय्यमिति ।** विशिष्टविधानमेव दर्शयति— **स्थविष्ठा-निन्द्राय प्रदात्रे दधिनि चरुमिति पञ्चपदविशिष्टा भावना विधीयते ।** कथं तर्ह्यकर्मान्तरत्ववाचोयुक्तिरत आह— **यागस्तु धात्वर्थः सन्निहित एव** गृह्यते । **यदि हि सन्निहितो न स्यात्** ततः **कर्मान्तरं भवेत् । अस्ति तु सः ।** तस्माद्यागाभेदादकर्मान्तरत्वम् । भावनान्तरं तु विधीयत एवेत्यवाक्यभेदः । **एवं तु**[1] **भाष्यकारेण नाङ्गीकृतम् ।** किमिति नाङ्गीकृतमित्यत आह— **बह्वर्थत्वाद्वाक्यभेदसरूपमेवेति कृत्वा** नाङ्गीकृतमिति । विशिष्टविधेर्हि विशेषणेषु तात्पर्यादस्त्येव तात्पर्यनिमित्तो वाक्यभेदः । स चासत्यां गतावतिभारो-ऽप्यङ्गीक्रियते, अस्ति त्वत्र देवतामात्रविधानेन गतिरिति न विशिष्टविधानं युक्तमिति । अपि चैवं दधिशृतयोरधिकरणत्वेनौषधं प्रति विधानात्तत्संस्कारार्थता स्यात् । तस्मात् "नातत्संस्कारत्वात्" इति सूत्रं विरुध्येत । तस्मात् प्रकृतहविरुद्देशेन देवतामात्रविधानात्तत्र च हविषां साहित्यस्याविवक्षितत्वात् सान्नाय्याभावेऽप्यौषधस्य देवतान्तरसंयोगादसन्नयतोऽप्यस्त्येवाभ्युदयेष्टिरिति सिद्धम् । यत्तु भाष्यकारेणोक्त-मसन्नयन्नर्थादप्सु श्रपयिष्यतीति न तच्चरुश्रपणाभिप्रायम्, चरुत्वस्याविवक्षितत्वात् । किन्तु प्रणीताभिः पुरोडाशश्रपणं संपादयिष्यतीत्यर्थः ॥ २४ ॥

( ७–सत्राय प्रवृत्तमात्रस्य व्युत्थाने विश्वजिद्विधानाधिकरणम् )

## साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् ॥ २५ ॥ पू०

यद्यपि निमित्तं साम्युत्थानं न क्रयेण विशेष्टुं शक्यते, वाक्यभेदप्रसङ्गात् । तथापि नैमित्तिकस्य सोमविभागविशिष्टत्वात् पुनराधेयन्यायेन निमित्तमपि सोम-क्रयोत्तरकालमेव संपद्यते । नह्यन्यथा सोमं विभज्य[2] विश्वजित्कर्तुं शक्यते, तस्मात् क्रीते सोमे विश्वजिदिति । नैतदेवम् । नह्यत्र सोमविभागो विवक्षितः । कथम् ?

---

१. 'तु' क० नास्ति ।

२. विभज्य तेन वि–क० ।

न तावदक्रीतसोमस्य तद्विभागो विधातुं शक्यते, नापि क्रीतसोमस्यार्थसिद्धत्वात् तदानीं सोमविभा[ग]स्य। तस्मादुभयथापि सोमविभागविधानासम्भवाद् एकीकृतधनानां सत्रिणां प्रवृत्तानां मध्ये साम्युत्तिष्ठतां प्राप्तमेव धनविभागं सोमविभागशब्दोऽनुवदति। सोमशब्दस्तु द्रव्यमात्रोपलक्षणार्थः। तस्मात् प्रवृत्तमात्रस्योत्थाने विश्वजिदिति। किं पुनरेतस्य विश्वजितः फलमिति? तद्दर्शयति—**विश्वजिदयं सत्रफलार्थः,** तस्य सन्निहितत्वात् प्रारब्धसत्रापरिसमाप्तिनिमित्त**दोषोपघाताय च**। तदपि हि मनसि सन्निहितमपेक्षितं च। **न तु स्वर्ग**फलेन फलवान्। कुतः? **अश्रवणात्**।[१] नह्यत्र प्रतीतेऽप्रतीतं कल्पयितुं युक्तमिति ॥ २५–२७ ॥

( ८–ज्योतिष्टोमस्य एकाहादिदीक्षाविकल्पाः )

## दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥ सि०

उत्तरसूत्रेणास्य सूत्रस्यैकाधिकरणत्वमङ्गीकृत्य दीक्षापरिमाणानां विकल्पं पूर्वपक्षीकृत्य भृतिवननवाक्यस्य नित्यवदाम्नानाद् द्वादशाहपरिमाणमेव भाष्यकारः सिद्धान्तितवान्। तदाक्षिपति—**अत्रायुक्तः सिद्धान्तो वर्णितो** भाष्यकारेण। कथम्? **सत्यमत्र** सिद्धान्ते **नित्यवदाम्नानं हेतुर्न तु द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेत्यस्य वाक्यस्य। कस्य तर्हि? एका दीक्षेत्येवमादीनाम्।** विकल्प एवात्र युक्तः सिद्धान्तः। तत्र चैकादिवाक्यानां प्रकरणे नित्यवदाम्नानं हेतुः। यदि हि किञ्चिदेव नित्यवच्छ्रूयेत, इतराणि तु निमित्ते कस्मिंश्चिद्विधीयेरन्, ततो न विकल्पः सिद्ध्येत्, नित्यवत्तु सर्वाणि श्रुतानि विकल्पितुमर्हन्तीति। ततश्च नित्यवदाम्नानमात्रं सिद्धान्ते हेतुरित्येतावत् सत्यम्। भृतिवननवाक्यस्य नित्यवदाम्नानं हेतुरित्येतत्तु न सम्यक्। एवं तु वक्तव्यमेकादिपरिमाणानां नित्यवदाम्नानाद्विकल्प इति। कथमित्याह—**तानि हि नित्यवदाम्नातानि प्रकरणे।** ततः **किमित्युत्कृष्यन्ते।** ननु विरुद्धानि कथं सर्वाणि प्रकरणे निविशेरन्नत आह—**तुल्य-**

---

1. **वार्त्तिककारमते २८ सूत्रे एकमधिकरणम्; २९ सूत्रे चापरमधिकरणमिति द्रष्टव्यम्।**

१. **नह्यत्यन्ताप्रतीतम्–क०।**

**प्रमाणवतां च विकल्पः । चोदयति—आह, न तर्हि नित्यानि** पाक्षिकत्वादेतेषाम् । कथं नित्यत्वाभिधानमिति ? उच्यते—**प्रकृत्यपेक्षं नित्यत्वम्** प्रकृतौ ज्योतिष्टोमे नित्यवदाम्नातानीति कृत्वा नित्यत्वमुक्तम्, न प्रयोगापेक्षमित्यविरोधः । **यदि विकल्पन्ते कथं तर्हि भृतिवननवाक्यम्?** नह्येकाहादिपक्षे द्वादश रात्रीर्दीक्षितो[1]भृतिं वन्वीतेत्येतन्नित्यवदनुष्ठातुं शक्यम् । अतस्तत्सामर्थ्यादेकाहादीनामुत्कर्षो युक्त इति । परिहरति—**आहोत्कृष्यतामिदम्** । यद्यन्यतरोत्कर्षमन्तरेण गतिर्नास्ति, ततो भृतिवननवाक्यमेवोत्कृष्यताम् । एकग्रन्थेनाह—**को वा हेतुरत्र भवतो येन बहून्युत्कृष्यन्ते, एकं नोत्कृष्यते । वरं हि बहूनामनुत्कर्षः,** भूयसां **प्रकरणानुग्रहात्** । परमार्थतस्तु न कस्यचिदुत्कर्ष इत्याह—**अपि चैकादिवाक्यान्यपि प्रकरणाज्ज्योतिष्टोमस्य** शेषभूतानि, **भृतिवननवाक्यमपि । न च तुल्यप्रकरणेनान्यतमे**[2]**नान्यतमदु[ मु ]त्क्रष्टुं शक्यते ।** एतेन यद् भृतिवनने द्वादश रात्रीर्दीक्षितस्याधिकारावगमादधिकारस्य च [3]प्रधानत्वाद्विरुद्धानामेकाहादिपरिमाणानामुत्कर्ष एव[4] युक्त इति प्रलपितं केनापि, तदपि निरस्तम् । नहि भृतिवननाधिकारसिद्ध्यर्था दीक्षा, यतः प्रधानविरोधादुत्कर्षः स्यात् । दीक्षाः सोमस्येति हि श्रुत्या प्रधानार्था दीक्षा । भृतिवननमपि प्रकरणात् प्रधानार्थमेव । प्रधानप्रयुक्ता दीक्षा कर्त्रानुष्ठातव्या, अग्नीषोमीयपशुयागवत् । न तु तदर्था दीक्षा । यद्येकाहदीक्षो भृतिवनने नाधिक्रियते माधिकारि, विनैव भृतिवननेन ज्योतिष्टोमं करिष्यति । भृतिवननं तु द्वादशपक्षे भविष्यति ।

एवं तावत् सत्यपि विरोधे नोत्कर्ष इत्युक्तम् । इदानीं तु द्वादशरात्रीर्दीक्षित इत्यत्र दीक्षितस्य भृतिवननमात्रविधानाद् द्वादशत्वादेरनुवादत्वेनाविवक्षितत्वान्नास्त्येव विरोध इति प्रतिपादयितुमाह—**अयं चाप्यनुवाद एव द्वादशरात्रीरिति** । कथम् ?

---

१. 'दीक्षितः' क० नास्ति ।

२. 'अन्यतमेन' ख० नास्ति ।

३. प्रधानत्वात्तद्विरु–ग० ।

४. एकाहे दी–क० ।

यद्ययं विधीयेत वाक्यं भिद्येत । कथम् ? भृतिवननं द्रव्यार्जनं तावदर्थप्राप्तम् । नहि तेन विना परिक्रयः संभवतीति । तेन तत्तावन्न विधेयमर्थसिद्धत्वात् । नन्वाढ्यस्याकृत्वापि भृतिवननं परिक्रयः संभवति । तत्रास्ति [1]नियमविधेरवसरः, याच्ञयैव परिक्रयार्थं द्रव्यं प्राप्नुयादिति । सत्यम्, वननरूपो द्रव्यप्राप्त्युपायविशेषो विधेय एव, द्रव्यप्राप्तिमात्रं तु न विधेयमर्थसिद्धत्वादिति । तदुच्यते—वननं न विधेयमिति । द्रव्यप्राप्तिर्न विधेयेत्यर्थः । तथा द्वादश रात्रीरित्येतदपि दीक्षाया द्वादशाहादिपरिमाणं नैव विधेयम्[2] । कुतः ? सन्त्येव हि तस्य दीक्षितस्य द्वादश रात्रयः । कुतः ? यद्यस्माद् द्वादश दीक्षा इति वचनं नित्यवद् द्वादशरात्रय एवाश्रयितव्याः, न तु कदाचिदप्येकरात्रादय इत्येतदपि नैव विधातुं शक्यम् । कुतः ? एकादिवाक्यानर्थक्यभयात् । नहि वाचनिकं केनापि निवर्तयितुं शक्यम् । तस्माद् द्वादश रात्रीरित्येतावन्न विधानार्थम् । दीक्षितशब्दोऽपि नैव स्वार्थविधानार्थ इत्याह—दीक्षितः दीक्षास्य[3]सञ्जातेत्येतदपि नैव विधेयम् । सञ्जातैव हि तस्य दीक्षा आग्नावैष्णवादिभिः । किं तर्हि विधेयम् ? उत्तरम्—भृतिवननस्योपपदस्य च सम्बन्धो विधीयते । तत्राप्युपपदद्वये सति कस्य भृतिवननसम्बन्धो विधीयत इति चिन्त्यम् । तत्र यदि तावद्यद् भृतिवननं कुर्यात्तद् द्वादश रात्रीरिति विधीयते, ततो नित्यानित्यसंयोगः प्रसज्येत । नित्यवद्भृतिवननमनित्या द्वादश रात्रयः । अथाहर्व्युदासेन रात्रावेव भृतिवननं कस्मान्न विधीयते ? उच्यते—वाक्यं हि तदा भिद्येत, रात्रिषु भृतिवननं कुर्यात्तच्च द्वादशस्विति । अथ यद्रात्रिषु भृतिवननं तद् द्वादशस्विति विधीयते, ततो विशिष्टानुवाददोषः । एवं यद् द्वादशसु भृतिवननं तद्रात्रिष्वित्यत्रापि स एव दोषः । यदि त्वन्यः पक्षो यद्भृतिवननं कुर्यात् तद्दीक्षित इति, यत्परिक्रयार्थं द्रव्यं केनापि प्रकारेण

१. 'नियम' क० नास्ति ।

२. 'सञ्जातैव' ख० अधिकः ।

३. 'अस्य' क० नास्ति ।

प्राप्नुयात्तद्दीक्षितः [1]सन् **भृतिवननेन** प्राप्नुयादिति दीक्षितकर्तृकं भृतिवननं द्रव्यार्थं विधीयते; **ततो न कश्चिद्दोषः**। कथमित्यत आह—**विधेयं चैत-** दवश्यम्। चशब्दो हेतौ। कथम्? **तद्धि** वननं **दीक्षितस्य** वननवाक्यमन्तरेण नियमेन **न प्राप्नोति**। तस्मात्तावन्मात्रं विधेयम्। द्वादश रात्रीरित्यस्य का गतिरित्यत आह—**द्वादश रात्रीरिति चानुवादः पाक्षिकः**। अथ पाक्षिकत्वमन्याय्यम्, ततः कालमात्रलक्षणा भवतु, **दीक्षितकालसम्बन्धेन** भृतिवननं कार्यमिति। **तस्मादियमेवावधारणा दीक्षापरिमाणे यथाकामी इति**। सिद्धान्तसूत्र- मिदम्। पूर्वपक्ष उत्सूत्र उत्प्रेक्षणीयः। स चास्माभिः प्रागेव दर्शितः—[2]भृतिवनन- **वाक्य**सामर्थ्याद् द्वादशाहपरिमाणेनैव प्रकृतावधिकारः। अन्यानि तूत्कृष्टव्यानीति। तस्योत्तरं सूत्रम्—"दीक्षापरिमाणे यथाकामी स्यात्" इति। सर्वैरधिक्रियेत प्रकरणविशेषादन्यतमेनान्यतमस्योत्कर्षासम्भवादिति ॥ २८ ॥

( ९–द्वादशाहक्रतौ दीक्षाद्वादशकनियमाधिकरणम् )

## द्वादशाहस्तु लिङ्गात् स्यात् ॥ २९ ॥ सि०

इदमप्यधिकरणान्तरसिद्धान्तसूत्रम्। तत्र विषयमाह—**द्वादशाहे ज्योतिष्टो- मीयदीक्षापरिमाणे** प्रकृतितः प्राप्ते प्रकृतिवदेव **याथाकाम्यं प्राप्तम्**। तत्र **संदेहः**—किं **तथैवे**हापि स्यादुत **नियमोऽ**स्ति कश्चिदिति। **तत्राविशेषाद् यथाकामीति प्राप्तम्**। तत्रोत्तरम्—**द्वादशाहस्तु लिङ्गात् स्यात्**। **किं लिङ्गं** भवति? एवमाह—**षट्त्रिंशदहो वा एष यद् द्वादशाह इति**। तत्र ह्युपसदो द्वादश, सुत्याश्च द्वादश। तद्यदि दीक्षा अपि द्वादश स्युः, ततः षट्त्रिंशदनुवादो- ऽवकल्पते, नान्यथा[3]। तेनास्मादनन्यगतेर्लिङ्गाद् द्वादशत्वमेव नियम्यते। ननु वचनमेवैतन्न तु लिङ्गमात्रम्। अतो वचने सति पूर्वपक्षाभावात् किमर्थमधिकरणम्? अत आह—**न चायं विधिरन्यस्तुतित्वात्**। वचनान्तरं तु द्वादश रात्रीर्दीक्षितः

---

१. तस्य वचनमन्तरेण नि—ख०।

२. 'वाक्य' क० नास्ति।

३. 'नान्यथा' क० नास्ति।

स्यादित्येतन्नास्तीति कृत्वाचिन्तेत्यभिप्रायः । ननु [1]लिङ्गमात्रमसाधकमत आह— **अपि च द्वादशाहप्रकरणे दीक्षावाक्ये** "अभीन्धत एव दीक्षाभिरात्मानम्" इत्यत्र चोदकान्नियमेनाप्राप्तं दीक्षाबहुत्वं विदधाने **द्वाभ्यां लोमावद्यति**[न्ति]द्वाभ्यां त्वचं द्वाभ्यामसृग् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानम्" इति **षड्द्विकाननुक्रम्य द्वादशत्वं स्तौति । तस्माद्वाक्यशेषाद् द्वादशैव द्वादशाहे दीक्षाः** ॥२९॥

(१०–माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गावामयनिकदीक्षाविधानाधिकरणम्)

## पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥ पू०

वाक्यशेषाच्चैत्री प्रतीयते, क्रयसंपत्तिवचनात्तु माघी । तयोः कस्यानुग्रहः कस्य वा बाध इति विशेषाग्रहणादुभयोः परस्परव्याघातेनासाधकत्वादनियम इति या काचित् पौर्णमासीति; द्वयोरपि वा पाक्षिकानुग्रहार्थं माघी वा चैत्री वाऽनियमेन भवेदिति सूत्रार्थः ॥३०॥ [2]एकवाक्यस्था चैत्री वाक्यान्तरस्थक्रयसंपत्तिबलावगताया माघ्या बलीयसी । तस्मात् सैव ग्रहीतव्येत्यपरः पक्षः । सिद्धान्तस्तु "तेषामेकाष्टकायां क्रयः" इति विधानादवश्यमेकाष्टकायामेव सोमक्रयः कार्यः । न च चैत्र्यां दीक्षितेन तथा कर्तुं शक्यते । तस्माद्वाचनिकक्रयसामर्थ्याद्वाक्यशेषस्था चैत्रीस्तुतिः माघी-स्तुतिपरत्वेन व्याख्येया । उक्तं ह्येतदर्थवादाधिकरणे विधिप्रतिषेधयोः प्रक्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति । नहि स्तुतिनिन्दे नाम व्यवस्थिते इति । तेन चैत्र्या न कश्चिद्दोषः । ततोऽपि श्रेयसी माघीत्येवं व्याख्यानं कृत्वा माघ्येव ग्राह्येति ॥ ३०–३७ ॥

( ११–दीक्षाकालोत्कर्षेऽग्निहोत्रादीनामुत्कर्षाधिकरणम् )

## दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥ पू०

यावन्तं कालं शास्त्रवशेन दीक्षानुवर्तते तावन्तं कालं न होमादि कुर्यादिति शास्त्रार्थं मन्वानस्ततः परं दैवादुत्कृष्टेऽप्यवभृथेऽग्निहोत्रादि कर्तव्यमित्याह ॥३८॥

---

१. 'मन्त्र सा'–क० ।

२. एकं फलम्–ख० ।

सिद्धान्तस्तु श्रुत्यर्थत्यागेन काललक्षणायां प्रमाणाभावाद् दीक्षायुक्तस्यानधिकार इति शास्त्रार्थः। दीक्षा चाऽऽवभृथादनुवर्तते। तस्माद्यावदवभृथमग्निहोत्रादिभिर्नाधिक्रियते ॥ ३९ ॥

( १२–ज्योतिष्टोमोत्कर्षे प्रतिहोमाननुष्ठानाधिकरणम् )

## तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥ सि०

यद्यप्यावभृथादनधिकारस्तथापि न शास्त्रकृतोऽसावनधिकारः, किन्त्वपराधायत्तः; तस्मादपराधातिपन्नानां प्रतिहोमः कर्तव्य इति मन्यते। यथा तथा वा भवत्वनधिकारः, सर्वथा तावदनधिकृतोऽसौ। न चानधिकृतस्य होमादि कर्तव्यं भवति। कर्तव्यस्य चाकरणे प्रतिहोमः, तस्मान्नात्र प्रतिहोम इति सिद्धान्तः ॥ ४० ॥

( १३–उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम् )

## प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥

कृतावभृथस्योन्मुक्तदीक्षत्वादुदवसानीयायाः प्रागप्यस्त्येवाग्निहोत्रादावधिकारः। तेन कर्तव्या होमा यदि केनचित्कारणेनाकृताः स्युस्ततः प्रतिहोमः कर्तव्यः। एतया पुनराधेयसम्मितयेष्ट्वेष्ट्वाग्निहोत्रं होतव्यमित्येतत्तु न प्रागग्निहोत्रं प्रतिषेद्धुमर्हति, परिसंख्यादोषत्रयापातात्। तस्मात् प्रतिहोमः कर्तव्य इति प्राप्ते ब्रूमः—सत्यं नायं प्रतिषेधः। तथापि दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवदुदवसानीयोत्तरकालमग्निहोत्राधिकारं प्रतिपादयति, अन्यथा वचनानर्थक्यप्रसङ्गात्। तस्मात्ततः प्रागधिकाराभावान्नाग्निहोत्रं होतव्यमिति प्रतिहोमोऽपि न कर्तव्यः ॥ ४२ ॥

( १४–प्रतिहोमपक्षे सायमग्निहोत्रप्रभृत्यनुष्ठानाधिकरणम् )

## प्रतिहोमश्चेत् सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥४३॥

---

१. होमाः–क० ख० ग० ।

( १५-षोडशिनि प्रातरग्निहोत्रप्रभृति प्रतिहोमाधिकरणम् )

## प्रातस्तु षोडशिनि ॥४४॥ सि०

युगपदुपस्थितानां तु प्रतिहोमानां न किञ्चित् क्रमनियमे प्रमाणमस्ति। अस्तीति ब्रूमः। अतिपत्तिसमाधानं हि यथातिपत्त्यैव युक्तम्। तस्माद्येषामहरवभृथस्तेषु सायमग्निहोत्रप्रभृति प्रतिहोमाः। षोडशिनस्तु सायमवभृथत्वात् प्रातःप्रभृति प्रतिहोमा इति ॥४३-४४॥

( १६-भेदनादिनिमित्तकहोमानां दर्शपूर्णमासमात्राङ्गत्वाधिकरणम् )

## प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥४५॥ पू०

भिन्ने जुहोतीति निमित्तस्याविशेषाद् यावन्निमित्तं नैमित्तिकं वाक्येनावगम्यमानं न शक्यते प्रकरणानुरोधेन बाधितुम्। अनैमित्तिकानि तु वाक्याविरोधात् प्रकरणेनाङ्गं भवन्ति। नैमित्तिकानि तु यत्र यत्र निमित्तं तत्र तत्र कर्तव्यानि प्रकरणं बाधित्वेति पूर्वः पक्षः। सिद्धान्तस्तु नैमित्तिकस्यापि तावत्फलेनावश्यं भवितव्यम्। नहि फलमन्तरेण कस्यचिदपि विधिः संभवति। तत्रात्यन्ताप्रतिपन्नकल्पनातः प्रकृतैकवाक्यतैव लघीयसीति प्रकरणाधीतानां नैमित्तिकानामपि प्रकृतक्रत्वङ्गत्वाद् दर्शपूर्णमासाधिकृतस्यैव भेदनहोमाधिकारः। यदि हि फलानपेक्षः कार्यरूपो विध्यर्थोऽधिकारमात्रापेक्षः स्यात्ततः प्रयाजादीनामपि तावन्नाङ्गत्वसिद्धिः, कार्यस्य कार्यान्तरानपेक्षणात्। यागमात्रस्य च श्रुत्यैव समानपदस्थकार्यार्थतयावगतस्य कार्यान्तराङ्गत्वासम्भवात् नतरां नैमित्तिकानाम्। तत्र हि प्रतीयमानमेव निमित्तमधिकारिविशेषणत्वादृते निमित्तत्वासंभवादन्तर्गर्भिताधिकारिविशेषणत्वेनैव प्रतीतमिति द्वयोः साधिकारयोः समानत्वान्न परस्पराङ्गत्वसिद्धिः। अस्मत्पक्षे तु नायं दोष इति सिद्धम् ॥४५॥

( १७-व्यापन्नशब्दार्थनिर्णयाधिकरणम् )

## व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥४८॥ सि०

प्रायश्चित्तप्रसङ्गात् "व्यापन्नमप्सु प्रहरति" इत्येतद् हृदयमागतम्। तत्र

व्यापन्नशब्देन किमुच्यत इति प्रश्नेनैवोपक्रमः। [1]तदुच्यते—यदभोज्यमार्याणां नित्यमभोज्यं केशकीटावपन्नमित्यादि प्रसिद्धम्, तद्व्यापन्नमुच्यते ॥४८॥

( १८–अपच्छेदयौगपद्येऽपि प्रायश्चित्तविधानाधिकरणम् )

## विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥४९॥ पू०

बहिष्पवमानस्तुत्यर्थं प्रस्तोतृप्रतिहर्तारौ प्रतिहर्त्रुद्गातारौ च समन्वारब्धाः प्रसर्पन्ति। तत्र विभागे प्रायश्चित्तं श्रुतम्। "यदि प्रस्तोतापच्छिद्येत ब्रह्मणे वरं दद्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यद्युद्गातापच्छिद्येतादक्षिणः [2]स यज्ञः संस्थाप्यः। तेन पुनर्यजेत तत्र तद्दद्यात् [3]पूर्वस्मिन् दास्यन् स्यात्"इति। क्रियाजन्यो विभागोऽपच्छेदशब्देनोच्यते। स चोभयसमवेतोऽपि यद्गतया क्रियया जन्यते [4]तत्कर्तृकत्वेन व्यपदिश्यते। तत्र यदा पुरुषद्वयसमवेताभ्यां द्वाभ्यां क्रियाभ्यां[5] विभागो जन्यते, तदा तत्रैकस्मिन् विभागे द्वयोर्निरपेक्षयोः कर्तृत्वानुपपत्तेः, सापेक्षपुरुषद्वयकर्तृके चैकस्य कर्तृत्वव्यपदेशासंभवादुद्गात्रादिकर्तृकेऽपच्छेदे श्रुतं प्रायश्चित्तं न यौगपद्ये भवितुमर्हतीति पूर्वः पक्षः। सिद्धान्तस्तु क्रियाद्वयं तावद् द्वयोरपि पुरुषयोः प्रत्यक्षमवगम्यते। क्रिया च संयोगविभागयोरनपेक्षं कारणम्। तेन द्वावपि पुरुषौ स्वीयया क्रियया मिथो विभागमेककालीनमारभेते। तेन यौगपद्येऽप्येकैकस्य कर्तृत्वादस्त्येव प्रायश्चित्तम् ॥४९॥

( १९–अपच्छेदयौगपद्येऽदाक्षिण्यसर्वस्वदक्षिणयोर्विकल्पाधिकरणम् )

## तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥५१॥

यौगपद्येऽप्यस्ति प्रायश्चित्तमिति स्थिते चिन्त्यते—तत्र पूर्वपक्षवाद्युद्गात्रपच्छेदे

---

१. क्रमात्–क० ।

२. 'स यज्ञः'–ख० नास्ति ।

३. पूर्वम्–क० ।

४. कर्तृत्वेन–क० ।

५. क्रियावि–क० ।

पुनस्तन्त्रविधानाददाक्षिण्यसर्ववेदसयोः प्रयोगद्वयेनानुग्रहसम्भवात्, सत्यां च गतावष्टविधदोषनिदानविकल्पानङ्गीकरणात् समुच्चय इति मन्यते। सिद्धान्तवादी तु यस्मिन्नेव प्रयोगे प्रतिहर्त्रपच्छेदस्तस्मिन्नेव तन्निमित्तं प्रायश्चित्तं सर्वस्वदानं कर्तव्यमित्यवगमान्न प्रयोगान्तरेण तदनुग्रहसम्भवः। किञ्च, यत्पूर्वस्मिन् दातव्यं तदेव पुनः क्रतौ देयं नान्यत्। तद्यदि पूर्वस्मिन्न सर्वस्वं दातव्यम्, ततस्तस्य पुनः क्रतावपि न दानसम्भवः। अथ दातव्यम्, ततस्तुल्यत्वान्नादाक्षिण्येन बाधसम्भवः। तस्माद्युगपदुपनिपातात् परस्परविरुद्धं नैमित्तिकद्वयं विकल्पितुमर्हतीति सिद्धान्तितवान्॥ ५१॥

( २०–अपच्छेदपौर्वापर्ये परनिमित्तप्रायश्चित्तानुष्ठानाधिकरणम् )

## पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्॥ ५४॥ सि०

स्थितमपौर्वापर्ये विकल्प इति। इदानीन्तु किं पौर्वापर्येऽपि तद्वदेव विकल्पः उत बाध इति चिन्त्यते। पूर्वपक्षमाह—**पौर्वापर्येणोत्पत्तावपि निमित्तयो**-रुद्गातृप्रतिहर्त्रपच्छेदयोस्तन्नै**मित्तिकप्राप्तौ** सत्यां **पूर्वेण न्यायेन विकल्प इति पूर्वः पक्षः।**

अयमभिप्रायः—न तावदत्र सामान्यविशेषनित्यनैमित्तिकक्रत्वर्थपुरुषार्थाल्पभूयस्त्वसावकाशनिरवकाशत्वाङ्गप्रधानतद्धर्मत्वलक्षणः कश्चिदपि शास्त्रद्वयस्य मिथो बाधहेतुरस्ति। नापि प्रमाणतदाभासवत् पौर्वापर्येण बाधः, शास्त्रार्थावधारणवेलायां पौर्वापर्यविशेषाभावात्। प्रयोगस्थं तु पौर्वापर्यमतन्त्रं न शास्त्रार्थावधारणायालम्। नहि प्रयोगाधीनं शास्त्रार्थावधारणम्, तदवधारणोत्तरकालत्वात् प्रयोगस्य। किञ्च, यः पूर्वस्य परेण बाधमिच्छति, तेन तावदुत्पन्नस्योत्पत्तिनिरोधलक्षणबाधासम्भवाद् मिथ्यात्वलक्षणो बाधो वक्तव्यः। न च नाम शास्त्रस्य मिथ्यात्वसम्भवः। सामान्यशास्त्रादेर्हि विशेषशास्त्रादिवशात्तद्व्यतिरिक्तविषयपरिकल्पनान्न मिथ्यात्वप्रसक्तिः। इह त्वस्मिन्नेव प्रयोगे शास्त्रेणोत्पन्नं नैमित्तिकविज्ञानमित्यविवादम्। न तद्विषयान्तरं व्याख्यातुं शक्यम्। तत्र तद्बाधे शास्त्रस्य प्रामाण्यबाधप्रसङ्गः। किञ्च, मिथ्यात्वं विद्यमानमेव बाधकेन बोध्यते,

न तु तद्वशेन मिथ्यात्वं जन्यते। न चात्र पूर्वज्ञानस्य मिथ्यात्वमस्त्यदुष्टकरणजन्यत्वात्। न चामिथ्याभूतस्य बाधसम्भवः। तस्मात् पौर्वापर्योत्पत्तावपि येन केनचित् कल्पेन क्रतावधिक्रियेतेति। **अत्र पूर्वबलीयस्त्वेन पक्षान्तरम्।** पूर्वं ह्यसञ्जातविरोधित्वान्निर्विघ्नमुत्पद्यते, परन्तु सञ्जातविरोधं नोत्पत्तुमर्हतीति श्रुतिलिङ्गादिवत् पूर्वबलीयस्त्वमिति। **ततस्तद्दौर्बल्यात् परबलीयस्त्वमिति सिद्धान्तः।** कथं परबलीयस्त्वमित्यत आह—**यद्वत् पूर्वं नित्यं** द्वादशशतविज्ञानं **परेण नैमित्ति**केनादाक्षिण्यविज्ञानेन सर्ववेदसज्ञानेन च **बाध्यते, तद्वन्नैमित्तिकविज्ञानम**पि पूर्वं **परेण नैमित्तिकविज्ञानेन बाध्यते,** परत्वाविशेषात्। **अत इहोत्पन्नस्य पूर्वनै**मित्तिक**विज्ञानस्य** बाधो भवतीति वक्ष्यमाणेन सम्बन्धः। कथं शास्त्रीयस्य ज्ञानस्य बाध इत्यत आह—**विद्यमानशब्दस्यैव** सत **उत्तरेण विज्ञानेन** बाध इति। केन प्रकारेण बाध इति तं दर्शयति—**स्मृत्या प्रत्यवमृश्य विरुध्यमानस्य चतुर्थे क्षणे बाधो भवति।** उत्तरविज्ञानं तावदेकस्मिन् क्षणे जायते। द्वितीये क्षणे पूर्वं विज्ञानं स्मृत्या परामृश्यते। तृतीये च क्षणे तस्य सम्प्रतितनेन विज्ञानेन विरोधः प्रतीयते। विरुद्ध्यमानस्य तस्य चतुर्थे क्षणो बाधो भवति। कथमित्याह—**यथा शक्त्यनुबन्धादाख्याते।** विदधदेव हि स्वार्थमाख्यातप्रत्ययो विरुद्धमर्थान्तरमबाधित्वा स्वार्थं बोधयितुमशक्नुवन् पूर्वविज्ञानं बाधते। किमिति पुनः पूर्वस्यैव बाधः, पूर्वेणैव तु परं किमिति न बाध्यतेऽत आह—**परं तु** पूर्वविज्ञानसमये**ऽनुत्पन्नत्वेनासत्त्वादपर्यालोच्यत्वादविरुद्धत्वादबा**ध्यम्। नह्यसतो बाधः सम्भवति।

इदमत्राकूतम्—आगन्तुकनिमित्तसम्बन्धेन नैमित्तिके क्रतोर्विकारविशेषे विधीय[1]**मानेऽयमर्थो**ऽवगम्यते प्रागन्यादृशोऽपि क्रतुः फलसाधकः सन्नस्मिन् निमित्ते संजाते सत्यन्यादृशः फलं साधयतीति। ततश्च यथा द्वादशशतदक्षिणः फलसाधकः सन् क्रतुरुद्गात्रपच्छेदे सञ्जाते सत्यदक्षिणः पुनरावृत्तिधर्मकश्च फलसाधनम्, प्रति-

---

१. ने यथार्थः—क०।

हत्रपच्छेदे च सर्ववेदसदक्षिणः, तथा द्वयोर्निमित्तयोरन्यतरेण पूर्वोत्पन्नेनादक्षिणस्य सर्ववेदसदक्षिणस्य वा सतः पाश्चात्त्येन निमित्तान्तरेण सामर्थ्यान्तरमेव कृतोर्जातमिति पूर्वस्य परेण बाधः। स चायं शास्त्रार्थावधारणवेलायामेव प्रायोगिकेण पौर्वापर्येण शास्त्रयोर्मिथो बाधोऽवगम्यत इति न प्रयोगोत्तरकालं शास्त्रार्थावधारणापत्तिः, न च शास्त्रस्याप्रामाण्यप्रसङ्गः। यत्र पाश्चात्त्यं निमित्तान्तर बाधकं नास्ति, तद्विषयत्वेन शास्त्रस्य व्याख्यानात् प्रकृतिवच्छब्दस्येव लुप्तार्थादि व्यतिरिक्तविषयतया। एतेन यदुक्तं कारणदोषाभावान्नाप्रामाण्यं सम्भवतीति, तदपि परिहृतम्, शास्त्रस्यान्यविषयत्वेनाप्रामाण्यानङ्गीकरणात्। यत्तु—न्यायाभासात् शास्त्रस्य सर्वविषयतया बाधकविषयेऽपि प्रवृत्तिपरिकल्पनभ्रान्तिः, सात्र बाध्यते। सा च न्यायाभासजनितत्वादेव युक्ता [1]**बाधितुम्**। तस्मात् पूर्वस्य परेण बाध इति। नन्वेवं सति श्रुतिलिङ्गादिष्वपि परबलीयस्त्वं कस्मान्न भवति? अथ तत्र पूर्वबलीयस्त्वमिहापि तथैव स्यात्, वक्तव्यो वा विशेषोऽत आह—**इहैवंलक्षणः** पौर्वापर्यवशेन विद्यमानस्यैव शास्त्रस्य शास्त्रान्तरेण विषयान्तरपरिकल्पनया एतद्विषयत्वपरिकल्पनस्य[2] मिथ्यात्वकरणं **बाधः**, न त्वनुत्पत्तिलक्षणः, क्लृप्तकारणत्वादुत्तरस्योत्पत्तिनिरोधासम्भवात्। **श्रुतिलिङ्गादिविरोधे तु प्रमाणानुत्पत्तिलक्षणो बाधः। उपक्रमवशेनोपसंहारशब्दार्थपरिकल्पनायां तु लक्षणापरिग्रहेण शब्दार्थविज्ञानस्य** [3]**धर्मबाधः**। यत्र वेदोपक्रमवशादुपसंहारस्थस्वर्गादिशब्दस्यार्थो **वर्ण्यते**[4], तत्र तस्य लक्षणया वेदपरत्वं परिगृह्य श्रुत्यर्थपरत्वस्य बाधः। **नित्यनैमित्तिकयोः** पाञ्चदश्यसाप्तदश्ययोर्**नित्यकाम्ययोः** पाञ्चदश्यैकविंशत्यनुवचनयोः **प्राकृतवैकृतयोश्च** कुशशरयोः **पौर्वापर्यनैमित्तिकन्यायेन** पूर्वस्य विद्यमानशास्त्रस्यैव

---

१. बाधयितुम्—क०।

२. 'परिकल्पनस्य' क० नास्ति।

३. अधर्म—ख०।

४. वार्यते—ग०।

बाधः। सामान्यविशेषेषु सामान्याश्रयस्य शास्त्रस्य विशेषे लक्षणया कार्यप्राप्तिः, सामान्यस्य साक्षात्कार्यान्वयाभावात्। विशेषाश्रयस्य तु श्रुत्या कार्यप्राप्तिः, श्रुत्या च लक्षणाप्राप्तं बाध्यते। तत्र वाच्यसम्बन्ध-निमित्तस्य विज्ञानस्य लक्षणाजनितस्य श्रौतेन विज्ञानेन बाधः। वैकल्पिक-योस्त्वेकनिमित्ताश्रयणादितरेतरबाधनमिति वक्ष्यमाणेन सम्बन्धः। कथमेक-निमित्ताश्रयणम्? नहि व्रीहियवयोर्निमित्तमस्ति, नित्यत्वात्। अत आह— अपूर्वं हि धर्माणां प्रयोजकं निमित्तं च, नवमाद्यन्यायादिति हेतोः पौर्वापर्यस्य चाभावात् तुल्यबलत्वेनेतरेतरबाधनम्। एवं प्रसङ्गाद्बाध-[1] प्रकारान् प्रदर्श्यैदानीं प्रकृतमुपसंहरति—इह तु पौर्वापर्ये पूर्वदौर्बल्य-मिति ॥ ५४ ॥

( २१–उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानाधिकरणम् )

**यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन् ॥ ५५ ॥ सिं०**

यत्पूर्वस्मिन् दास्यन् स्यादिति यदेव क्रतौ स्वभावतो देयं द्वादशशतं तदेव पुनर्देयं प्रतीयते। तस्मादुद्गातरि जघन्येऽपच्छिन्ने द्वादशशतमेव देयमित्येकः पक्षः। तत्र द्वादशशतस्य सर्ववेदसेन बाधितत्वान्न तद्दास्यन् भवति। यच्च पूर्वं दास्यन् भवति तत्पुनः क्रतौ देयम्। तस्मात् सर्वस्वमेव देयमित्युक्त्वा भाष्यकारः पुनः पूर्वपक्षान्तरम् ननु सर्वस्वं विप्रतिषिद्धमित्यादिना दर्शितवान्। तद्व्याचष्टे— द्वादशशतं सर्ववेदसेन बाधितम्। अतो न तत्र तद्दास्यन् भवति। सर्व-वेदसमप्यदाक्षिण्येन पाश्चात्त्येन प्रतिषिद्धम्, अतस्तदपि वा दास्यन्न भवतीति बाधितस्यैव पुनः क्रतौ विधिरित्युभयोरपि विकल्प एव युक्त इति। तत्र सिद्धान्तभाष्यम्—नेत्याहेत्यादि। तद्व्याचष्टे—सामान्ये[2] तुल्यत्वे परिचोदिते

१. प्रसङ्गान्—क०।

२. साम्ये—मुद्रितवार्त्तिकपाठः।

**परिह्रियते**-न सर्वस्वदानं बाधितमिति । कथम्? **बाधो हि परिमाणान्तरोपदेशेन प्रतिषेधेन वा सम्भवति** । तदिह **न** च तावत्परिमाणान्तरं सर्ववेदसविरुद्धमुद्गात्रपच्छेदे **चोद्यते,** यथा प्रतिहर्त्रपच्छेदे सर्ववेदसं दद्यादिति द्वादशशतविरुद्धपरिमाणान्तरविधानाद् द्वादशशतस्य बाधः । न त्वेवमिह परिमाणान्तरमस्ति । यतोऽर्थात् सर्ववेदसं निवर्तेत । **न चाहत्य सर्ववेदसं प्रतिषिध्यते** । **नन्वदक्षिणः संस्थाप्य इति दक्षिणाप्रतिषेधः** श्रुत एव । **नायं** प्रतिषेधः । **यथा न गृह्णाति षोडशिनमिति** वैधर्म्यदृष्टान्तः । किं तर्ह्य**दक्षिणस्य संस्थापनं निर्वृत्तिः कथ्यमानान्यथा** दक्षिणादाने सति **न** सम्भवतीत्यर्थाद्दक्षिणा**निवृत्तिः कल्प्यते न तु शब्दात्**, न [1]दद्याद्दक्षिणामित्येवं शब्दाभावात् । भवत्वर्थान्निवृत्तिः, तथापि किमित्यत आह—**साभ्यासत्वाच्च क्रतोरुभयं सम्भवति** । **तस्मान्नार्थात् सर्ववेदस**[2]**निवृत्तिरिति** । **अनिवृत्तौ** तु सत्यां **प्रतिहर्त्रपच्छेदात् सर्ववेदसं दास्यन्** भवत्येव । ननु यस्मिन्नेव पूर्वप्रयोगे प्रतिहर्त्रपच्छेदस्तस्मिन्नेव सर्वस्वं दातव्यम्, न प्रयोगान्तरे तस्यानुग्रहः सम्भवति । तस्मिंश्च प्रयोगेऽदक्षिणसंस्थापनविधानाद् बाधितमेव सर्वस्वदानं तुल्यं द्वादशशतेन, अत आह—**तस्य** सर्वस्वदानस्य पूर्वस्मिन् प्रयोगे कर्तव्यत्वेन प्राप्तस्य वचनेन **प्रयोगान्तरे निक्षेपः** क्रियते, न तु [3]स्वरूपमेव बाध्यते । अयमभिप्रायः—सत्यं पूर्वस्मिन्नेव प्रयोगे सर्वस्वं दातव्यम्, प्रयोगान्तरे च न तस्यानुग्रहः सम्भवति, वचनात्तु प्रयोगान्तरे निक्षिप्यते । इदं हि वचनं यत्पूर्वस्मिन् प्रयोगे दातव्यं प्राप्तं तत्तत आच्छिद्य प्रयोगान्तरे निक्षिपति, न तु स्वरूपमेव बाधते । तेन द्वादशशतं सर्वस्वदानेन बाधितम् । सर्वस्वदानं च तत्प्रयोगादाच्छिद्य प्रयोगान्तरे नीतमिति सर्वस्वदानेनैव पुनः क्रतावधिकार इति ॥ ५५ ॥

---

१. 'दद्यात्' ख० नास्ति ।

२. निर्वृत्ति–क० ख० ।

२. स्वयमेव–क० ।

( २२–अहर्गणे उद्गातुरपच्छेदवदहरावृत्त्यधिकरणम् )

**अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥५६॥ सि०**

गणस्य संहत्यसाधनत्वात् साधननिवेशित्वाच्च धर्माणाम्, गणस्यैवादक्षिणसंस्थापनं पुनः प्रयोगश्च, मैवम्। यदि साधनत्वमेषामह्नां व्यासक्तं स्यात्ततः स्यादेवम्। प्रत्येकमेव त्वेषां साधनत्वमवान्तरव्यापाररूपाणामपूर्वाणां प्रत्येकमेव भेदेन विद्यमानत्वात्, इतरथा ह्येककर्म्यमेव स्यात्। फलभेदाभेदनिमित्तौ हि क्रियाभेदाभेदौ, स्वरूपेण प्रतिक्षणं भिन्नत्वात्। तेन कर्मभेदादेवावान्तरकार्याणामपूर्वाणां भिन्नत्वात्, प्रत्येकमेषां साधनत्वम्। नन्वेवमेकैकस्मादेवेतरानपेक्षात् फलं सिद्ध्येत्। नैष दोषः, बहुसाधनसाध्यत्वात् फलस्य। फलं प्रति हि तेषामुपादीयमानानां विवक्षितं साहित्यमिति। कर्तव्यतां तु प्रत्युद्देश्यत्वादविवक्षितसाहित्या यागाः प्रत्येकमेव सगुणा भूत्वा संहत्य फलं साधयन्ति। तेन यस्मिन्नहन्युद्गात्रपच्छेदस्तस्यावृत्तिसगुणस्येतरैरनावृत्तिसगुणैः संहत्यकारित्वमिति।

तस्मात् प्रतीक्षमाणेषु यागेष्वन्येष्वयं परम्।
याग आवर्ततेऽन्येषां नावृत्तिः स्यादिति स्थितम् ॥ ५६ ॥

॥ इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
षष्ठस्य पञ्चमः पादः ॥



( १–सत्रेषु समानकल्पानामेवाधिकाराधिकरणम् )

## सन्निपातेऽवैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥१॥ सि०

सिद्धान्तोपक्रममेतदधिकरणम् । भिन्नकल्पानामधिकारोऽस्तीति **पूर्वः पक्षः** । कुतः ? **एवंकामाः सत्रमासीरन्निति सामान्यवचनेन प्राप्तेः** । [1]ननु वसिष्ठानां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषाम् । तत्र भिन्नकल्पेषु सह निविष्टेष्वन्यतरप्रयाजाश्रयणे सत्यन्येषां वैगुण्यात् फलं न सिद्ध्येत् । न च वचनबलेन बाधः, वचनस्य समानकल्पेषु चरितार्थत्वेन बाधकत्वासम्भवादिति दर्शितं भाष्ये । न च वसिष्ठादिश्रवणमधिकृतमात्रोपलक्षणतया पाक्षिकानुवादमात्रमिति युक्तं वक्तुम्, विधित्वे सम्भवति पाक्षिकानुवादत्वानर्थक्ययोरनाशङ्कनीयत्वात् । अत आह–**वसिष्ठादीनां कर्तॄणां नाराशंसो द्वितीयः प्रयाज इति पूर्वपक्षवाद्यभिप्रायः** । षष्ठी हि सम्बन्धमात्रवाचिनी स्वामित्वमिव कर्तृत्वमपि शक्नोत्येव प्रतिपादयितुम् । तत्र पुरुषप्राधान्ये फलकल्पनाप्रसङ्गात् प्रकरणबाधाच्च क्रतोरेव वसिष्ठादि[१]कर्तृकत्वेन निमित्तेन नराशंसो विधीयते । [2]वसिष्ठानामिति कर्तृसम्बन्धवाचिनी क्रतुव्यतिरेकजनिता षष्ठी । ततः किमित्यत आह–तत्र वसिष्ठानामन्येषाञ्च कर्तृत्व**सन्निपाते** सत्यतत्कर्तृत्वादवासिष्ठकर्तृत्वात् क्रतो**र्निमित्तविघातादनङ्गं नाराशंसः** । नह्यसति निमित्ते नैमित्तिकानामङ्गत्वं भवति । [२]अनङ्गे च लुप्ते नास्ति वैगुण्यम् । एतच्चान्वाचयमात्रम्, सत्रिणां कर्मणि प्रत्येकमेव कर्तृत्वस्य स्थापितत्वात् । अनुपातत्वाच्च [अनुपात्तत्वाच्च] क्रतोर्न

---

1. अस्मिन्नधिकरणे सर्वत्र वसिष्ठादीनामिति स्थाने 'वासिष्ठादीनाम्' इति, तथा 'नराशंस' इति स्थाने 'नाराशंस' इति च ध्येयम् ।
2. 'वासिष्ठानामिति सम्बन्धवाचिनी क्रतुकर्तृत्वव्यतिकरजनिता' इति पाठः उन्नीयते ।

१. कर्तृत्वेन–क० ।
२. अनङ्गत्वे–ख० ।

तदपेक्षा षष्ठी व्याख्यातुं युक्ता । अतः पक्षान्तरमाह—**तत्कर्तृत्वाद्वा नाराशंसकर्तृत्वाद्वासिष्ठानां तैरपि क्रियमाणेन नराशंसेनेतरेषां** कल्पसिद्धिः[1] कार्यसिद्धिरिति पूर्वः पक्षः । वसिष्ठा हि कर्तारो नराशंसाङ्गम्, इतरे तु तनूनपातः । उभयकर्तृसन्निपाते तु द्वयोरपि कार्त्स्न्येन कर्तृत्वान्नाराशंसोऽपि तावद्वसिष्ठेन क्रियत एवेति नास्ति वैगुण्यम् । एवं तनूनपादप्यविगुण एवेति येन केनापि सगुणः क्रतुः सर्वेषां फलसाधनमेवेति । सिद्धान्तस्तु—वसिष्ठानामिति षष्ठी स्वस्वामिलक्षणार्था । अतो येषां स्वं नराशंसस्तेषामेव कर्मसिद्धिं करोति नेतरेषाम् । नहि नराशंसे वसिष्ठकर्तृविधिः, परपदार्थविधानदोषात् । न च वसिष्ठकर्तृकस्य क्रतोर्नराशंसोऽङ्गम्, अनुपात्तक्रत्वपेक्षषष्ठीव्याख्यानस्यान्याय्यत्वात् । तस्माद्वसिष्ठानां स्वामिनां नराशंसः स्वं विधीयते । केन तूपकारेण तेषां स स्वमिति ? प्रकरणात् क्रतूपकार एवेति विज्ञायते । तदयमर्थः सम्पद्यते—वसिष्ठानां नराशंस एव यज्ञाङ्गम् । तद्युक्त एव क्रतुस्तेषां फलसिद्ध्यै पर्याप्नोतीति[१] । यावदेवं तनूनपाद्युक्त एवेतरेषामिति न भिन्नकल्पानामधिकारः । **अत्रासत्राण्यप्यनेककर्तृकाण्युदाहरणमेव** तुल्यन्यायत्वात् । प्रदर्शनार्थं तु भाष्ये सत्रग्रहणमिति ॥१-११॥

( २–कुलाययज्ञे भिन्नकल्पयोरप्यधिकाराधिकरणम् )

## वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥१२॥ पू०

**अभिन्नकल्पानामधिकार इति पूर्वत्र स्थितम् । इह तु राजपुरोहिताविति भिन्नकल्पयो** राज्ञः पुरोहितस्य वा**धिकार** [ चाधिकारः ] **इति प्रतिपादयितुं** पूर्वाधिकरणापवादार्थ[२]**मधिकरणम्** । तत्र **राजपुरोहिताविति किमयं षष्ठीतत्पुरुषैकशेषः**—राज्ञः पुरोहितो राजपुरोहितः, राजपुरोहितश्च राजपुरोहितश्च

1. कार्यसिद्धिरिति व्याख्यानात् कल्पसिद्धिरिति व्याख्येयपदं मूलेऽवश्यंभावि; परन्तु पूनामुद्रितमूलपुस्तके तन्न दृश्यते ।

१. 'इति' क० नास्ति ।

२. मिदमधि—क० ।

राजपुरोहिताविति। **उत कृतैकशेषेणोत्तरपदेन तत्पुरुषः**, पुरोहितश्च पुरोहितश्च पुरोहितौ राज्ञः पुरोहितौ राजपुरोहिताविति। **उत समानाधिकरणैकशेषः**, राजा चासौ पुरोहितश्च [ राजपुरोहितः] राजपुरोहितश्च राजपुरोहितश्चेति तौ द्वाविति। **उत द्वन्द्वः**–राजा च पुरोहितश्च राजपुरोहिताविति **संशयः**। तत्र "युगपदधिकरणवचनतायां द्वन्द्वः" इति द्वयोरपि पदयोरितरेतरसहितस्वार्थलक्षणापत्तेर्द्वन्द्वस्तावदन्याय्यः। तत्पुरुषे तु पूर्वपदस्यैव लक्षणा, उत्तरपदं तु श्रुतिवृत्तमेव भवति। तस्मात्तत्पुरुषः। तेन च राजविशिष्टः पुरोहितोऽभिधीयते। अतः समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह। तस्माद्राजद्वयसम्बन्धिनौ पुरोहिताविति एकः पक्षः। यद्वा पुरोहितद्वित्वावगमात्तस्यैवैकशेषः कल्पयितुं शक्यते न राजपदस्य। तस्मादेकराजसंबन्धिनौ द्वौ पुरोहिताविति पक्षान्तरम्। अथवा कर्मधारयबलीयस्त्वाद्राजात्मकौ पुरोहिताविति त्रयः पूर्वपक्षाः। तत्र प्रथमपक्षं दूषयति—**तत्र न तावत् कृतसमासस्यैकशेषः**। कुतः? तत्र मूलकारणमाह—**राजशब्दानर्थक्यात्**। **राज्ञ एव स** पुरोहितो **भवति** नान्यस्य। तत्र पुरोहिताविल्येव वक्तव्यम्; न राज्ञा विशेषणं सम्भवति व्यभिचाराभावाद् राजद्वयसम्बन्धिनोश्च पुरोहितयोः सायुज्यकामत्वासम्भवादित्युक्तमन्वाचयकारणं भाष्ये। द्वितीयं पक्षं दूषयति–**न च कृतैकशेषेणोत्तरपदेन** तत्पुरुष **इति भाष्य एवोक्तम्**। एकस्य राज्ञः पुरोहितद्वयासम्भवादुपादीयमानत्वात्पुरोहितस्य विवक्षितैकसंख्यत्वात्। तृतीयं पक्षं दूषयति—**न च समानाधिकरणैकशेषः**। कुतः? **राज्ञोऽपुरोहितत्वात्**। ब्राह्मण एव पुरोहितत्वेन वरीतव्यः [ वरयितव्यः ] श्रुतो नान्य इति। पारिशेष्याद् **द्वन्द्वोऽस्त्विति सिद्धान्तः**। नन्वेवं पदद्वयमपि लक्षणावृत्तं स्यात्। यद्यप्येवं तथापि मुख्यासम्भवे लक्षणावृत्तिरप्यदोषः। किञ्च, द्वन्द्वे न कस्यचिदपि लक्षणा युगपदधिकरणवचनत्वस्याप्रमाणकत्वादिति प्रदर्शितमेतदस्माभिः। समाहारद्वन्द्वे तु सर्वपदानां लक्षणापरत्वात् श्रुतिवृत्तिर्हीयते। तत्परत्वे चैकवचनानुपपत्तिः प्रमाणम्। स्वार्थपरत्वे तेषामनेकत्वादेकसंख्यान्वयानुपपत्तेः। इतरेतरयोगद्वन्द्वे तु न कस्यचिल्लक्षणा। तत्रापीतरेतरयोगो लक्ष्यत इति चेन्न, अर्थसिद्धत्वात्तस्य शब्देनाप्रति-

पादनात्। धवखदिरावुभावपि ह्येकेन विभक्त्यर्थेनान्वितौ तन्मुखेन सहितावेव पश्चात् क्रियान्वयमनुभवतः। तेनैकविभक्त्यर्थान्वयादेवेतरेतरयोगसिद्धेर्न शब्दस्य तत्प्रतिपादकत्वम्, येन लक्षणा स्यात्। तस्मादितरेतरयोगद्वन्द्वे न कस्यचिल्लक्षणा। षष्ठीतत्पुरुषे तु पूर्वपदलक्षणापत्तेर्दौर्बल्यम्। समाहारद्वन्द्वस्तु पदद्वयस्यापि लक्षणापत्तेस्ततोऽपि दुर्बल इति। तस्माद्भिन्नकल्पयो राजपुरोहितयोरिह कुलाययज्ञेऽधिकार इति ॥१२॥

( ३—सत्रेषु ब्राह्मणानामेवाधिकाराधिकरणम् )

## सत्राणि सर्ववर्णानामविशेषात् ॥ १९ ॥ पू०

## न, स्वामित्वं हि विधीयते ॥ २० ॥ सि०

पूर्वपक्षसिद्धान्तसूत्रे सह पठिते। भाष्यकारीयस्य सन्देहस्य कारणसन्देहं किमार्त्विज्यं प्रधानं किं यजमाना इत्येवं दर्शयन्, नन्वार्त्विज्यमिहानुपात्तम्, कथं तस्य गुणत्वप्रधानत्वचिन्तेत्याशङ्क्य, ऋत्विक्शब्दस्तल्लक्षणार्थं इति दर्शयितुमाह—**ये यजमानास्त ऋत्विज इत्येवं यदानुपूर्व्यम्। तत्र यजमानर्त्विक्शब्दयोः पृथगर्थत्वेन सिद्धयोः सामानाधिकरण्यानुपपत्त्यैकेन लक्षणार्थेन भवितव्यम्। तत्र मुख्यत्वाद्यजमानशब्दः श्रुतिवृत्तः। जघन्यत्वादृत्विक्शब्दः कार्यलक्षणार्थः**। ननु ऋत्विक्शब्दस्य ऋतुयजननिमित्तत्वाद्यजमानशब्देन मुख्यमेव सामानाधिकरण्यं सम्भवति। तथा च "स्वामिसप्तदशाः कर्मसामान्यात्" इत्युक्तम्। सत्यमेतत्; किन्त्वस्मिन् वाक्ये नर्तुयजनकर्तृत्वमात्रपरमृत्विक्पदं वचनानर्थक्यात्। सिद्धमेव हि यजमानानामृतौ यदृष्टं यजनम्। तन्न विधातव्यम्। तेन ये परार्थमृतौ यजन्त्यध्वर्य्वादयस्तत्प्रतिपादकमृत्विक्पदमस्मिन् वाक्ये। तस्य च स्वामिवचनेन यजमानपदेन मुख्यसामाधिकरण्यासम्भवात् कार्यलक्षणा भवति। तदयमर्थः—ये परिक्रीतकर्तृत्वेन प्रकृतितः प्राप्ताः पदार्थास्तेषु यजमानाः कर्तारः स्युरिति। न चैवमृत्विक्कार्येऽनृत्विग्विधिरिति शङ्कनीयम्, यजमानानामेव कर्तॄणां मुख्यर्त्विक्त्वोपपत्तेः। नहि वरणभरणजन्यमदृष्टं ऋत्वि-

त्त्वम्, आनमनार्थत्वाद्वरणभरणयोः । अदृष्टार्थत्वे तु सति ऋतुयाज्यावरणवत् सत्रेऽपि कर्तव्ये स्याताम् । तस्मान्न वरणभरणजन्यमृत्विक्त्वम् । ऋतुयजननिमित्तं तु तत् । अतः सत्रेऽपि सन्त्येवर्त्विजः । तद्विशेषाश्चाध्वर्य्वादयः सन्त्येव । ते तु यजमाना एव नान्ये। वचनेन हि परकर्तृत्वेन प्राप्तानां पदार्थानां यजमानकर्तृकत्व-मनेन विधीयते । **यच्छब्दतच्छब्दौ** यथाक्रममुद्देशकप्रतिनिर्देशकाविति स्थिते **को वाक्यार्थ इति चिन्त्यते**। तत्र सर्ववर्णानां **यजमानानां** [1]**निर्दिष्टप्रतिनिर्दिष्टानामार्त्विज्यं विधीयते** संस्कारत्वेनेति **पूर्वः पक्षः**। प्रधानं ह्युद्देश्यं भवति। यच्छब्दयुक्ताश्च[2] यजमाना [3]उद्देश्या इति तेषामेव प्राधान्यम् । तेन यथा ब्राह्मणानां यजमानानामेव सतां वचनप्रामाण्यादार्त्विज्यम्, एवमितरयोरपि वर्णयोरिति । **सिद्धान्तस्तु**—सत्यम्, **सर्वे वर्णा उद्दिष्ट-प्रतिनिर्दिष्टाः** सत्रमासीरन्निति विशेषाश्रवणात् सर्वे वर्णा यजमानत्वेन प्राप्ताः। ये यजमानास्त ऋत्विज इत्यत्राप्युद्दिष्टप्रतिनिर्दिष्टा आपाततोऽवभान्ति; किन्त्विह **यजमानास्त्वार्त्विज्यस्य कर्तृत्वेन विधीयन्ते**। तदिह **प्रधान**मितरथा ह्यप्राकृती पुरुषसंस्कारार्थता पदार्थानां स्यात्, सा चान्याय्या । तस्मात् पदार्था-नामङ्गत्वेन यजमाना विधीयन्ते। ततः किमित्यत आह—**तस्य च द्वौ धर्मौ** प्रकृतितः प्राप्तौ-**अन्यकर्तृकता ब्राह्मणकर्तृकता च**। **तत्रान्यकर्तृकता** वचनेन **व्यावर्त्यते, ब्राह्मणकर्तृकता** तु **स्वधर्मं** वचनाभावात् **कर्तॄणां यजमानानां** गुणभूतानां सत्रमासीरन्निति ब्राह्मणमात्रचरितार्थसामान्यवचन-मात्रप्राप्त**धर्मवशेन त्रैवर्णिकत्वेन न जहाति**। तदुक्तम्—"**अङ्गगुणविरोधे च तादर्थ्यात्**" इति । ये त्वदृष्टमृत्विक्त्वम्, तच्च सत्रे नास्ति, तदुत्पत्त्युपयोगि च ब्राह्मण्यमिति वदन्ति, ते कथमिव राजन्यवैश्ययोः सत्रेऽधिकारं निराकुर्वीरन्।

---

१. उद्दिष्टेति पूनामुद्रितवार्त्तिकपाठः।

२. 'च' क० नास्ति।

३. नानुद्दे-ख०।

नहि ऋत्विक्त्वनिवृत्तौ तदुत्पत्त्युपयोगि ब्राह्मण्यमवतिष्ठते, पिण्डनिवृत्ताविव चरुपुपेषणसंयवनादयः । तस्मात् पदार्थाङ्गं ब्राह्मण्यं सत्रेऽपि प्राप्तमिति तद्बाधार्थं ब्राह्मणानामेव सत्रेऽधिकार इति सिद्धम् ॥ २० ॥

( ४–सत्रे वैश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम् )

## वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥ पू०

"वासिष्ठो ब्रह्मा" इति वचनाद् ब्रह्मत्वं वासिष्ठेन कर्तव्यम्, हौत्रं तु वैश्वामित्रेण । तयोश्च भिन्नकल्पत्वान्न सहाधिकारसम्भवः । तस्माद्वत्यभावात् सत्रे वासिष्ठं ब्रह्माणमाश्रित्य हौत्रस्य वैश्वामित्रकर्तृकतां बाधित्वा वसिष्ठेन तत्समानकल्पेन वा केनचिद्धौत्रं कर्तव्यम्, वैश्वामित्रं वा होतारमङ्गीकृत्य ब्रह्मत्वमपि वसिष्ठकर्तृकत्वबाधेन वैश्वामित्रेण तत्समानकल्पेन वा कर्तव्यमिति । ब्राह्मणमात्रस्याधिकार इति । अयमेव साक्षात् पूर्वः पक्षः। वासिष्ठानामेवाधिकार इत्येतत्तु प्रक्रममात्रम् ।

सिद्धान्तस्तु "य एव कश्चित् स्तोमभागानधीयीत" इति वचनात्, अवासिष्ठेनापि क्रियमाणं ब्रह्मत्वं न विगुणं भवति, हौत्रं तु वैश्वामित्रेण विना विगुणं स्यात् । तस्माद् वैश्वामित्रतत्समानकल्पानामेवाधिकारो नान्येषामिति ॥ २४ ॥

( ५–सारस्वतभिन्नसत्रेष्वाहिताग्नीनामेवाधिकाराधिकरणम् )

## विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥ पू०

सारस्वते सिद्धवदनाहिताग्न्यधिकारावगमात्, अन्याग्निसंसर्गे च प्रायश्चित्तविधानात्, येन केनाग्निना सर्वेषां क्रतुसिद्धेरनाहिताग्नेरपि सत्रेषु अधिकार इति यो मन्यते, तस्य बुद्धिं व्यावर्तयितुमिदमधिकरणम् । "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यस्य प्रकृतितः प्राप्तेः, "य एतेनानिष्ट्वा" इति वचनाच्चाकृतदर्शपूर्णमासज्योतिष्टोमानामनाहिताग्नीनां नास्ति सत्रेष्वधिकारः । तथाग्नयोऽप्याधानगतादात्मनेपदादनाधातॄणां न कार्यसिद्ध्यै पर्याप्नुवन्तीत्यनाहिताग्नीनामनधिकारः ॥ २७–३२ ॥

अस्मिन्नवसरे पूर्वोक्तव्यतिरेकरूपेण पूर्वपक्षस्य सुवचनत्वाच्चिन्तान्तरमारभ्यते—

( ६–सत्रे साधारणपात्राणामधिकाराधिकरणम् )

**जुह्वादीनामप्रयुक्तत्वात् संदेहे यथाकामी प्रतीयेत ॥ ३३ ॥**

यद्युपग्रहविशेषादग्नयः स्वार्थतयोपात्ता एव कार्यं साधयन्ति न परकीयाः, तथा सति जुह्वादिपात्राणां स्वार्थानामेव प्रयुक्त्यभावात्, विध्यभावादित्यर्थः, यस्य कस्यचित् पात्रैः सर्वेषां कार्यसिद्धेर्न साधारणान्युत्पादयितव्यानि ।

सत्यम्, विप्रतिषेधात्तु साधारणान्युत्पाद्यन्ते । यदि हि कस्यचिद्यजमानस्य पात्रैः प्रयोग आरभ्यते, ततो मरणस्यानियतत्वात् कदाचित्तस्य मरणं स्यात् । तत्र यदि पात्राणि परिधानीये न प्रक्षिप्येरन्, ततस्तेषां प्रतिपत्तिलोपः स्यात् । प्रतिपत्तिरपि धारणस्य प्रयोजिकेत्यसकृदुक्तम् । तस्मात् प्रतिपत्त्यलोपाय स्वीयानि पात्राणि निधाय साधारणान्युत्पाद्य सत्रमारभेरन्निति ॥ ३३-३४ ॥

इदानीन्तु पूर्वाधिकरणशेषमुच्यते—

**प्रायश्चित्तमापदि स्यादिति ॥ ३५ ॥**

यत्सारस्वतेऽनाहिताग्निदर्शनम्, तद्वृत्त्यभावाद्वचनं भविष्यति ॥ ३५ ॥

( ७–श्रुतसाप्तदश्यासु विकृतिषु वर्णत्रयाधिकाराधिकरणम् )

**पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन्नधिकारः स्यात् ॥ ३६ ॥ पू०**

"सप्तदश वैश्यस्यानुब्रूयात्" इत्यनेन साप्तदश्ये वैश्यः कर्ता विधीयत इति पूर्वपक्षवाद्यभिप्रायः । ततश्च साप्तदश्यस्य वैश्येन विना विगुणत्वात् तद्वन्ति वैश्यकर्तृकसाप्तदश्यवन्ति, अध्वरकल्पादीनि न वैश्यादन्यः शक्नोति कर्तुमिति वैश्यस्यैव तेष्वधिकारो वैश्यस्तोमवदिति ॥ ३६-३७ ॥

## न वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ सि०

वैश्यस्य साप्तदश्यमुपकारकमनेन विधीयते, न तु यत्रतत्रस्थस्य साप्तदश्यस्य वैश्यकर्तृकता प्रकरणबाधप्रसङ्गादिति सिद्धान्तः। नहि दर्शपूर्णमासप्रकरणे साप्तदश्यमन्येन विहितमस्ति यस्यानेन वैश्यकर्तृकत्वं विधीयेत। न च दर्शपूर्णमासप्रकरणाधीतेन वाक्येनाध्वरकल्पादिगतसाप्तदश्यानुवादो युक्तः। तस्माद्वैश्योद्देशेन साप्तदश्यमनेन विधीयते। तेन साप्तदश्यं वैश्यस्य दर्शपूर्णमासोपकारं जनयति, न पाञ्चदश्यमिति वाक्यार्थः। अध्वरकल्पादिप्रकरणाधीतेन तु वाक्येन [1]नैमित्तिकं साप्तदश्यं क्रत्वर्थतया विधीयते, न तस्य वैश्येन [वैश्येन विना] वैगुण्यमस्ति। तस्मात् सर्वेषामधिकारः। स्थिते चास्मिन् प्रकरणवशाद् वैश्यस्योद्देश्यत्वे "वसिष्ठानां नराशंसः" इत्यत्र प्रकरणविरोधाभावाद्वासिष्ठाः कर्तृत्वेन नराशंसस्य विधीयन्तामित्याशङ्का धात्वर्थविधिबलीयस्त्वेन निराकृतेत्यपुनरुक्तता।

तस्मादध्वरकल्पादौ सर्वेषां स्यादधिक्रिया।
नहि वैश्यादृते किञ्चिद्वैगुण्यं तत्र विद्यते ॥३८-३९॥

॥ इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने
षष्ठस्याध्यायस्य षष्ठः पादः ॥



1. अनैमित्तिकम्—ख० ग०

( १–विश्वजिति सर्वस्वदाने पित्रादीनामदेयत्वाधिकरणम् )

## स्वदाने सर्वमविशेषात् ॥ १ ॥ पू०

ज्ञातीनामपि स्वशब्दवाच्यत्वाविशेषाद् दानम्। अथवा स्वशब्दोऽयमात्मीयवचनो न धनवचनः, धनादन्यत्रात्मीये प्रयोगात्, धनेऽपि चात्मीयत्वादेव प्रयोगोपपत्तेः। अथापि नाम परकीयेऽपि धने प्रयोगाद्धनरूपस्यापि वाचकः स्वशब्दः स्यात्, तथापि धनमात्रस्य दानासम्भवादवश्यमात्मीयमेव ददातिसमभिव्याहृतेन [1]स्वशब्देन प्रतिपादनीयम्। आत्मीयता च पित्रादीनामप्यविशिष्टेति तेऽपि देयाः। नैवम्। यथैव धनमात्रं न दातुं शक्यते, तथैवात्मीयमात्रमपि न दातुं शक्यम्। स्वत्व[स्वस्वत्व]त्यागपूर्वकं हि परस्वत्वापादनं दानम्। न च पित्रादयः कथञ्चिद[2]प्यस्वपित्रादयः कर्तुं शक्यन्ते। नापि परस्य पित्रादयोऽपित्रादयो भवन्ति। यत्तु स्मृतिषु पुत्रदानं चोद्यते तत्र गौणो ददातिः। पितुरिव परस्यापि पिण्डदाता रिक्थभाक् च[3] भवतीत्यर्थः। न त्वत्र गौणत्वे प्रमाणमस्ति, धने मुख्यस्वत्वत्यागपरस्वत्वापादनयोः सम्भवात्। तस्मादात्मीयधनवचनोऽत्र स्वशब्दः। अतश्चैवम्, प्रकृतितः प्राप्तस्य हि धनदानस्य द्वादशशतपरिमाणबाधेन सर्वता विधीयते। तस्माद्धनदानेनैव विश्वजित्यधिकारः। एवञ्च शाखान्तरीयेण "सर्ववेदसं ददाति" इत्यनेन निःसन्दिग्धधनदानविधानेनैकार्थ्यं भविष्यतीति ॥ १–२ ॥

( २–विश्वजिति भूमेरदेयत्वाधिकरणम् )

## न भूमिः स्यात् सर्वान् प्रत्यविशिष्टत्वात् ॥३॥ सि०

यदिदं भूगोलकं महाद्रव्यं तत्सार्वभौमस्य स्वमिति मन्यमानस्तस्यापि दानमाह। नैतत् कस्यचिदपि स्वम्, सार्वभौमोऽपि तत्र पालनभृतिमात्रं कर्षकेभ्यः

---

१. 'स्व' क० नास्ति।

२. दपि स्व०–ख०।

३. 'च' क० नास्ति।

समश्नुवानस्तावन्मात्रस्यैवेष्टे, न भूमिस्तस्य स्वम्। तस्माद्भूमिर्न देया, वास्तुक्षेत्रादिकं तु देयमेवेति मन्तव्यम् ॥ ३ ॥

(३—विश्वजित्यश्वादीनामदेयत्वाधिकरणम्)

## अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥ सि०

ननु विश्वजित्येवाहत्याश्वादीनां प्रतिषेधे श्रूयमाणे कथं पूर्वः पक्षः? विहितप्रतिषेधाद्विकल्पं मन्यते। ननु सामान्यविशेषविषयत्वाद् विधिप्रतिषेधयोरतुल्य[1]बलत्वादयुक्तो विकल्पः। न, सामान्यरूपस्यापि विधेस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलत्वात्। पर्युदासस्तर्हि भवतु? न, सर्वशब्दावगतकार्त्स्न्यबाधायोगात्। तस्मात् प्रतिषेधः। ततश्च विकल्प इति पूर्वः पक्षः। विकल्पस्याप्यष्टदोषदुष्टत्वाद् अश्वादिवर्जितापेक्षया च कार्त्स्न्योपपत्तेः पर्युदास एवायमिति सिद्धान्तः ॥ ४ ॥

(४—विश्वजिति विद्यमानस्यैव स्वत्ववतः सर्वस्य दानाधिकरणम्)

## नित्यत्वाच्चानित्यैर्नास्ति संबन्धः ॥ ५ ॥ सि०

स्वशब्दस्य धनवाचित्वात् पुरुषस्योपभोग्यं यत्सर्वस्वं यानासना[आसन]-शयनादि तद्दातव्यमिति वचोभङ्गिं मन्यमानो यस्यापि सर्वं नास्ति तत् सोऽप्यर्जयित्वा दद्यादिति पूर्वपक्षयति। सिद्धान्तस्तु यद्यपि तावदेषा वचनव्यक्तिः स्याद् यत्सर्वस्वं तद्देयमिति, तथापि धनमात्रस्य दानासम्भवाद् अवश्यमेवं वक्तव्यं यदात्मीयं सर्वं धनमिति। ततश्च सिद्धात्मीयेनोपपन्नो विधिर्नाविद्यमानमर्जयितुं प्रभवति। अर्ज्यमानं च कदाचिन्न लभ्येत। तत्र पक्षे सर्वस्वदानं न नित्यवदनुष्ठीयेत। यदा लभ्येत तदा दद्यादित्याश्रीयमाणे नैमित्तिकं सर्वस्वदानं स्यात् नित्यं चेदं निमित्ताश्रवणान्न नैमित्तिकं भवितुमर्हति। न चेयं वचनव्यक्तिर्यत्सर्वस्वं तद्देयमिति। दानस्य चोदकेन प्राप्तत्वात्तदनुवादेन सर्वता विधीयते। विद्यमानस्य च दानं प्राप्तमिति तस्यैवेयं सर्वता विधीयते ॥ ५ ॥

---

1. बलवत्त्वात्—क०।

( ५–विश्वजिति धर्मार्थसेवकशूद्रस्यादेयत्वाधिकरणम् )

## शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥ सि०

धर्मोपनतोऽप्यसौ विधेयत्वात् शक्यते परस्मै दातुमिति मन्यते। स्वत्वाभावान्नासौ देयः। न चासावत्यन्तविधेयः। धर्मार्थं खल्वसावुपनतः परस्मै दीयमानो नेच्छेदपि। तस्माद्धर्मार्थं शुश्रूषुरुपनतो न देयः। दासस्तु देय एवेति द्रष्टव्यम् ॥ ६ ॥

( ६–विश्वजिति दक्षिणादानकाले विद्यमानस्वत्ववतामेव देयताधिकरणम् )

## दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥

दक्षिणाकालात् प्रागेवारभ्य सर्वस्वं धारयित्वा दातव्यम्, न तु किञ्चिदपि कार्यान्तरे विनियोक्तव्यम्। तथा यद्भविष्यतीति निश्चितं केनापि प्रमाणेन तदपि दक्षिणाकाले देयम्। एवं सर्वशब्दः समर्थितो भवतीति प्राप्तेऽभिधीयते। स्वस्यात्र दानमनूद्य साकल्यं विधीयते। दक्षिणाकालीनमेव च स्वं देयत्वेन प्राप्तम्। तस्यैव च साकल्ये सर्वशब्दोऽर्थवान् भवति, न तु प्रागारभ्य धारणे किञ्चन प्रमाणमस्ति। भविष्यतश्च तदानीं स्वत्वमेव नास्तीति तस्य दूरभ्रष्टं दानम्। तस्माद्यद्दक्षिणाकाले सर्वस्वं तद्द्यादिति ॥ ७ ॥

( ७–विश्वजिति दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य देयत्वाधिकरणम् )

## अशेषत्वात् तदन्तः स्यात् कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥

यद्यपि प्रकृतौ त्रेधा निर्देशो विहितः। तथापीह प्रत्यक्षवचनेन सर्वदानस्य विहितत्वात् क्रत्वर्थं भुक्त्यर्थमानत्यर्थं च सर्वमेव देयम्। दत्ते च तस्मिन् यदि कर्मशेषं द्रव्यार्जनेन सम्पादयितुं शक्यते, ततस्तथा संपादनीयम्[१]। अथार्ज्यमानं न[२] लभ्यते, ततस्तदन्तमेवोत्स्रष्टव्यम्। सर्वथा सर्वस्वं देयमिति पूर्वः पक्षः। आचार्यदेशीयस्त्वाह—क्रतोः प्रधानत्वात्तदनुरोधेनाङ्गभूतं सर्व-

१. तथाप्यसंपादनीयम्–क०।

२. 'न' क० नास्ति।

स्वदानं वर्णयितव्यम् । आतिदेशिकमपि हि क्रतुशेषं प्रधानत्वाद् बलवत् । दक्षिणादानन्तु प्रत्यक्षविहितमप्यङ्गत्वाद् दुर्बलम् । उक्तं ह्येतत्—यत्र प्रमाणबलाबलस्य प्रमेयबलाबलस्य च विसंवादो भवति, तत्र यथाप्रमेयबलाबलमेव निर्णय इति । तस्माद्यावता विना क्रतुशेषं न समाप्यते, तावच्छेषयित्वा परिशिष्टं देयमिति । सिद्धान्तस्तु—यद्देयं तस्य सर्वतात्र विधीयते लाघवात् । अतस्त्रेधा विभक्ते द्रव्ये यद्दानार्थं विहितं तत्सर्वं देयम् । इतरेण क्रतुसमाप्तिरिति ॥ ८-१३ ॥

( ८—अष्टरात्रान्तर्गतेऽपि विश्वजिति सर्वस्वदानाधिकरणम् )

## अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात् ॥१४॥ सि.

गणस्य द्वादशाहप्रकृतित्वात् तद्गतस्य विश्वजितोऽपि तत्रत्यमेव द्वादशशतादिदक्षिणादानं युक्तमिति पूर्वपक्षमभिधाय नामधेयातिदेशस्य चोदनालिङ्गातिदेशाद्बलीयस्त्वस्य सप्तमे वक्ष्यमाणत्वादेकाहकाण्डपठितविश्वजिद्धर्माणामेव गणान्तःपातिन्यपि विश्वजिति प्राप्तेः सर्वस्वदानमेवेति सिद्धान्त उक्तः । तमाक्षिपति—**अस्मिन्नधिकरणे सिद्धान्तस्य दूषणमुच्यते । नह्यहर्गणगतो विश्वजिद्प्राकृतैकाहकाण्डपठिताद् विश्वजितश्चोदकेन [1]नामधेयेन वा धर्मान् गृह्णाति** । धर्मशब्देन दक्षिणैवोच्यते न धर्मान्तराणि । तेषामिष्ट एव नाम्नातिदेशः । किमिति न गृह्णातीत्यत आह—**यत्कारणम्**, यस्मात् कारणादित्यर्थः । **प्रयोगाङ्गं हि दक्षिणा** । केन द्वारेण प्रयोगाङ्गतेत्याह—**कर्त्रानतिद्वारेण** । किमेतावता प्रयोगाङ्गता भवति ? बाढमित्याह—**चिकीर्षितप्रयोगार्थं च कर्तार उपादीयन्ते । यच्च फलवत्तच्चिकीर्षितम्** । **अहर्गणश्च फलवान् न केवलो विश्वजित्** । ततश्च गणस्यैकप्रयोगत्वात्तदर्थानतिरप्येकेति तदर्था दक्षिणाप्येकैव । **तस्मान्न पृथक्त्वेन समुदायिभिर्दक्षिणा अपेक्ष्यन्ते** । तदेतद्दशमे वक्ष्यते "परिक्रयाविभागाद्वा समस्तस्याविभागः स्यात्" इत्यत्र । यद्यप्येका गणस्य दक्षिणा, तथापि या विश्वजितः प्राप्ता सर्वस्वदक्षिणा सैव तु

---

१. नामधेयत्वेन—क०

कृत्स्नस्य गणस्य भवत्विति चेत्तत्राह—**प्रत्यक्षवचनविहिता द्वादशाहे बहवः कल्पाः "सहस्रं प्राक् चतूरात्रेभ्यः" इत्येवमादयः** । आदिशब्देन "अन्वहं द्वादशशतं ददाति" इत्यादीनां ग्रहणम्। अतश्चास्मिन्नष्टरात्रे बहूनामह्नां **द्वादशाहप्रकृतित्वात्तद्दक्षिणा प्राप्नोति** । ननु मुख्यत्वाद्विश्वजितस्तद्दक्षिणयैव भवितव्यम्? नैवम्, मुख्यादपि भूयसां जघन्यानामपि बलीयस्त्वात् । अत एव पञ्चदशरात्रे मुख्याग्निष्टुद्धर्मभूतामाग्नेयीं सुब्रह्मण्यां बाधित्वा भूयसां साधर्म्यार्थमैन्द्री समाश्रीयते । ऐकाधिकरण्यं तु "तत्रैके मन्यन्ते" इति वचनात् परमतमेवेति वक्ष्यते । तस्मान्नात्र सर्वस्वदानमिति । अधिकरणं त्विदं मुख्यस्य भूयोभ्योऽपि बलीयस्त्वं कृत्वा चिन्त्यत एवं [ ते इत्येवं ] नेतव्यमिति भावः। तत्र गणार्थत्वाद् दक्षिणाया गणस्य च द्वादशाहप्रकृतित्वेन तद्दक्षिणा प्राप्तेति तदन्तःपातिनो विश्वजितोऽपि सैव युक्तेति पूर्वः पक्षः। प्रतिकर्मावसायित्वाच्चोदकानां विश्वजिदिति च नाम्ना सर्वस्वदानप्राप्तेर्मुख्यबलीयस्त्वे सति सर्वस्वदक्षिणैव देयेति सिद्धान्तः ॥ १४–१७ ॥

( ९–विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् )

## विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥ पू०

एकाहकाण्डपठित एव विश्वजिज्ज्योतिष्टोमविकारभूत उदाहरणम्। तत्र "सर्वस्वं ददाति" इति श्रुत्यर्थस्य द्वादशाच्छतान्न्यूनेनाऽपि[1] स्वेन सम्पादयितुं शक्यत्वादूनधनस्याप्यस्त्येवाधिकारः । नैतदेवम् । कुतः? ज्योतिष्टोमे हि द्वादशशतं विधाय "अपि सर्वस्वेनानमयेद्[2] ऋत्विजः" इति द्वादशशतादधिकमेव सर्वस्वं विहितम् । तस्य चोदकेनानियमे प्राप्ते नियममात्रमनेन विधीयते, [3]न त्वपूर्वं सर्वस्वदानं विधीयते। **तस्मात्ततोऽधिकमेवात्र** दातव्यम्। यत्तु भाष्यकारेण

---

१. न्यूनेऽपि स्थितेन—क० ।

२. नानेयाः—ख० ग० ।

३. 'न' प्रभृति 'विधीयते' पर्यन्त क० नास्ति ।

द्वादशशतं वा ततोऽधिकं वेत्युक्तम्, तन्न्यूननिराकरणपरतया। परमार्थस्तु द्वादशशतेनापि [१]धनेन नास्त्येवाधिकारः, किन्तु ततोऽधिकधनस्यैवेति ॥१८-२०॥

( १०—आधानेऽपरिमितवाक्येन संख्यान्तरसाधनकदानविधानाधिकरणम् )

## अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥२१॥ पू०

अपरिमितशब्देनावयवव्युत्पत्त्या यस्य परिमाणं नास्ति तदभिधीयते। न च तस्य दानं सम्भवति। दीयमानं ह्यवश्यं परिमितमेवेति। [२]तेनापरिमितं देयमिति प्रकृतापेक्षया पूर्वोक्तैकादिपरिमाणप्रतिषेध एवात्र क्रियत इत्याश्रीयते। ननु रूढ्या [३]बह्वर्थत्वावगमादवयवप्रसिद्धिर्बाध्यते ? नैतदेवम्, लब्धात्मिका हि समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते। न चात्र तदात्मलाभः, बहुत्वेप्यवयवव्युत्पत्त्यैव प्रयोगोपपत्तेरज्ञेयपरिमाणमपरिमितमिति। तस्मात् पूर्वोक्तपरिमाणशून्यं[४] दातव्यमिति परिमाणप्रतिषेध एव क्रियते, न तु संख्यान्तरं विधीयत इति। उच्यते—संख्यान्तरविशिष्टमनेन दानं चोद्यते, रूढ्या बहुसंख्यावगमात्, तस्याश्चावयवप्रसिद्धितो बलीयस्त्वात्। न चेयमलब्धात्मिका, सुज्ञानपरिमाणेऽपि वस्तुनि बहुत्वमात्रेणापरिमितशब्दप्रयोगात्, अनेकस्मिन्नपि वा शक्यपरिमाणे सति तन्मध्ये बहुत्वापेक्षया प्रयोगात्। अतोऽनेनापि संख्यान्तरविशिष्टं दानं विधीयते। एवं च[५] पूर्ववाक्यैरवैरूप्यं[६] भविष्यतीति ॥ २१-२२ ॥

---

१. धने नास्त्ये–क० ।

२. 'ते' ख० नास्ति ।

३. बह्वन्वर्थ–ख० ।

४. 'शून्यं दातव्यमिति परिमाण' ख० नास्ति ।

५. 'च' क० नास्ति ।

६. अपूर्वं–क० ।

( ११–आधाने सहस्राधिकस्यापरिमितत्वाधिकरणम् )

**अनियमोऽविशेषात् ॥ २३ ॥ पू०**

सहस्रादधिके न्यूने च बहुत्वस्याविशेषादनियमः। नैवम्, आपेक्षिकं हि बहुत्वम्। यदेव बुद्धौ सन्निहितं तदपेक्षमवगम्यते। सहस्रं चानन्तरवाक्यनिर्दिष्टं सन्निहितमिति तदपेक्षमेव बहुत्वम्। अतः सहस्राधिकमपरिमितं न न्यूनमिति ॥ २३–२५ ॥

( १२–परकृतिपुराकल्पानामर्थवादत्वाधिकरणम् )

**परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥**

एककर्तृकमुपाख्यानं परकृतिः। बहुकर्तृकं पुराकल्पः। एवंजातीयकानामर्थवादत्वमौदुम्बराधिकरणे साधितमिति न तदर्थमिदमधिकरणम्, किन्तु तदीयपूर्वपक्षं कृत्वाधिकारविशेषश्चिन्त्यते—किं तद्गोत्राणामुत सर्वपुंसामिति। तत्राद्येन सूत्रद्वयेन तदीयमेव पूर्वपक्षं स्मारयित्वा "निर्देशाद्वा तद्धर्मः स्यात्" इत्येतदधिकरणपूर्वपक्षोपन्यासः कृतः। वृष्णिकर्तृको ह्यत्र माषपाकः स्तूयते। तस्मात्तद्गोत्रैरेव कर्तव्य इति। सिद्धान्तस्तु माषपाक एवात्र स्तूयते वृष्णिकर्तृकत्वेन कारणेन, न तु वृष्णिकर्तृको माषपाकोऽन्यस्य पदान्तरस्य स्तावकस्याभावात्। स्तुत्यस्य च विधिकल्पना न स्तावकस्य। तस्मान्माषपाकमात्रं विधीयते। तच्चाविशेषात् सर्वपुंसां धर्म इति। "अर्थवादो वा विधिशेषत्वात्" इति कृत्वाचिन्ताविवरणमिति ॥ २६–३० ॥

( १३–विश्वसृजामयने संवत्सरशब्दस्य दिवसपरत्वेन मनुष्याधिकाराधिकरणम् )

**सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु ॥३१॥ पू०**

किमयं संवत्सरशब्दो मुख्य उत गौणः? यदापि मुख्यस्तदापि किं गन्धर्वादीनामधिकारः, उत मनुष्याणामेव रसायनसंपादितसहस्रायुषाम्। अथवा कुलकल्पः, अथवा विश्वसृजामयनं कुर्वतां सहस्रायुष्ट्वम्, अथवार्द्धतृतीयशतानां कुलानामधिकार इति पक्षाः। तथा यदापि गौणोऽयम्, तदापि किं

मासेषु, उत द्वादशरात्रिषु, उत दिवसेष्विति पक्षाः। ननु त्रिवृच्छन्दस्याहर्वाचित्वात्, तस्य च मुख्यत्वात्, तदनुरोधेन जघन्यस्य संवत्सरशब्दस्य गुणवृत्त्या दिवसपरत्वं युक्तम्। अतः कथं पक्षान्तरोत्थानम्। उच्यते, नैव त्रिवृच्छब्दोऽहर्वाची। स्तोत्रीयसंख्यावचनो ह्ययम्, तत्संबन्धाद् बहिष्व[अहर्वृ]त्तिः। तत्संबन्धश्चाहःसमुदायस्यापि संभवतीति संवत्सरशब्दानुगुण्यात् संवत्सरपरिमितोऽहःसंघस्त्रिवृच्छब्देनोच्यते। तथाविधश्च पञ्चसंख्यावच्छिन्नया पञ्चाशत्संख्यया विशेष्यत इति। इदं त्विह वक्तव्यम्—किमयं पञ्चाशच्छब्दः संख्येयप्रधानः, उत संख्याप्रधान इति। किञ्चातः? यदि तावत्संख्येयप्रधानस्तथा[1] सति पञ्चशब्दोऽनर्थकः स्यात्। नहि पञ्चाशत्संख्यावच्छिन्नानामर्थानां[2] पञ्चसंख्यासंभवः। संख्याप्राधान्ये तु सति सैव पञ्चसंख्यया विशेष्यत इति युक्तः पञ्चशब्दः। किन्तु तथा सति संवत्सरादिशब्देन संख्येयवचनेन सामानाधिकरण्यं न स्यात्। वैयधिकरण्यञ्च षष्ठीं विना न संभवतीति पञ्चपञ्चाशतस्त्रिवृतां संवत्सराणामिति वक्तव्यम्। सत्यम्। किन्त्विह लक्षणया संख्येयवचनस्य शब्दस्य संख्यावाचिना सामानाधिकरण्यं भविष्यति। यथा यदैकत्वादयो विभक्त्यर्थास्तदा कर्मादयो विशेषणत्वेनेत्यस्मिन्पक्षे सप्तम्यन्तस्य कर्मादिशब्दस्य द्व्येकयोरित्यनेन संख्याप्रधानेन सामानाधिकरण्यं लक्षणया भवति, तद्वदत्रापीति निर्दोषम्। तत्र मनुष्याणामल्पायुष्ट्वाद् गन्धर्वाद्यधिकारमिदम्। अथवा मनुष्याधिकारत्वात् शास्त्रस्य, अन्येषामग्न्याद्युपसंहारसामर्थ्याभावेनाधिकाराभावात्, अन्यनिरपेक्षाच्चाम्नायादेव सहस्रसंवत्सरविधायिनः संभविष्यति रसायनादिभिः सहस्रायुष्ट्वमिति परिकल्पनात्, मनुष्याणामेव द्राघिष्ठकालजीविनामधिकारः। न त्वेतदपि युक्तम्। नह्येतावदायुः कस्यचिदपि भवति। रसायनमप्यारोग्यमात्रहेतुत्वान्नैतावदायुःसंपादनसमर्थम्। न चागमबलादेवायमर्थः कल्पयितुं शक्यते, "शतायुर्वै पुरुषः" इति श्रुत्यैवोक्तत्वात्। अपि च, पदार्थयोग्यताधीनागमप्रवृत्तिः।

१. तथापि—क०।

२. ख्याव—ख० ग०।

सहस्रसंवत्सरस्य च कर्मणो मनुष्याधिकारेण विधिना नान्वययोग्यत्वमिति । एतेन सत्रारम्भादेवायुर्वृद्धिपरिकल्पनं प्रत्युक्तम् । अतोऽत्र गत्यभावात् कुलकल्पः कल्प्यते । सोऽपि च "शास्त्रफलं प्रयोक्तरि" इति न्यायबाधप्रसङ्गादयुक्तः। एवं तर्हि पञ्च पञ्चाशत इत्यधिकारिविशेषणम्, पञ्च पञ्चाशतो ये यजमानाः, ते त्रिवृत्पञ्चदश-सप्तदशैकविंशस्तोमकान् संवत्सरानुपेयुरिति । चतुर्भिर्वर्षैः समाप्यते सत्रम् । अथवा बहुवचनान्तस्य संवत्सरशब्दस्य त्रिवृदादिभिश्चतुर्भिः प्रत्येकं संबन्धाद् द्वादशभिर्वर्षैः समाप्यते । भाष्ये तूपलक्षणार्थं चतुर्वर्षग्रहणम् । सर्वथा तावत् पञ्च पञ्चाशत इत्यधिकारिविशेषणम्, न संवत्सरशब्देन संभन्त्स्यत इति । एतदपि न युक्तम्, अनुपात्तयजमानसंबन्धापत्तेः, चतुर्विंशतिपरमाः सत्रमासीरन्निति विहितपरिमाण-बाधप्रसङ्गात् । तस्मात्संख्यासंवत्सरशब्दयोरेव संबन्धः । तयोर्यथाश्रुतयोरेक-वाक्यत्वानुपपत्तेः, वाक्यभेदे चोभयोः साकांक्षत्वेनाप्रामाण्यप्रसङ्गाद् अन्यतरस्य गौणत्वं कल्प्यम् । तत्रापि मुख्यत्वात् संख्याशब्दं समञ्जसमङ्गीकृत्य संवत्सरशब्दं जघन्यत्वाद्विचालितत्वाच्च गौणमङ्गीकरिष्यामः । संवत्सरशब्दो हि विविधे चलति । कदाचित् सावने गणितदिवससंख्ये वर्तते षष्टिः त्रीणि च शतानि दिनानां संवत्सर इति । [1]कदाचित्तु तान्येवार्द्ध[2]नाडिकाधिकपञ्चदशनाडिकाधिकैः पञ्चभिर्दिनैः सहितानि सूर्यगत्यपेक्षया संवत्सरशब्देनोच्यन्ते । तथा चान्द्रमसोऽपि भवति संवत्सरो द्वादशभिः सितैरसितैश्च पक्षैः । तथा नाक्षत्रोऽपि भवति चन्द्रस्य सप्तविंशतिनक्षत्रभोगैः द्वादशभिः । तेनेयमव्यवस्थिता संवत्सरशब्दवृत्तिः साधारणीव नारी पुरुषान्तरम्,अर्थान्तरं गच्छन्ती नातीव दुष्यति । 'पञ्च पञ्चशतः' इत्यस्य तु एकार्थनियता वृत्तिः कुलीनेव नान्यत्र नेतुं युक्ता । किञ्चायं संवत्सर-शब्दो बह्वर्थत्वान्न ज्ञायते किंपरोऽत्र प्रयुक्त इति । तस्मात् संख्याशब्दं स्वार्थ-वृत्तमङ्गीकृत्य तदन्वयार्हे क्वचिदर्थे संवत्सरशब्दो वर्तयितव्यः । तत्र "यो वै मासः

---

१. 'कदाचित्तु' इत्यारभ्य 'संवत्सरशब्देनोच्यते' इत्यन्तं नास्ति-ख० ।

२. 'नाडिकाधिकपञ्चदश' नास्ति-क० ।

स संवत्सरः" इत्यर्थवादाद् गवामयनाच्च मासानामेव संख्येयानां प्राप्तत्वादिहापि मासपरत्वमेव युक्तम्। तत्रापि त्वशक्तितादवस्थ्यम्। नहि ज्योतिष्टोमोत्तरकालं माससहस्रजीवित्वं संभवति। तस्मात् "संवत्सरप्रतिमा वै द्वादश रात्रयः" इत्युपचाराद् द्वादशाहः[ह]परत्वमध्यवसीयते। सिद्धान्तस्तु नात्र संवत्सरशब्दस्य द्वादशरात्रीषु प्रयोगः। स हि प्रतिमाशब्दस्य विशेषणम्। प्रतिमाशब्दस्तु द्वादशरात्रिभिः संबध्यते। अवश्यंभाविनि गौणत्वे दिवसपरत्वं त्रिवृदादिशब्दानुगुण्यात्। ते हि स्तोत्रीयासंख्यावचनाः[1]। तत्संबन्धिन्यहनि शक्नुवन्ति लक्षणया वर्तितुम्। अहः-संघाते लक्षितलक्षणया वर्तेरन्, द्वादशाहे वाहःसु दृष्टप्रयोगात् [गाः] त्रिवृदादि-शब्दाः। तस्माद्दिवसपरः संवत्सरशब्दः। तत्रापि चार्थवादोदितं प्रवृत्तिनिमित्तमस्त्येव। श्रूयते हि—"आदित्यो वाव सर्वऋतवः। स यदैवोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदाऽस्तमेत्यथ हेमन्त-[2]शिशिरौ" इति। सर्वर्तुसमवायात् शक्यते दिवसः संवत्सरशब्देनाभिधातुम्। ग्रन्थार्थस्त्वत्र भाष्यकारेण न मनुष्याणामेतावदायुः संभवति शतायुर्वै पुरुष इति श्रुत्यनुवादादित्युक्तम्। तत्र **शतान्यायुरस्येति विग्रहीष्याम इति** चोद्य **उक्ते नैवम्, संख्याशब्दानां समास इष्यत** इत्युत्तरमुक्तम्। तस्यार्थः—**यौ द्विवचनबहुवचनान्तौ संख्याशब्दौ ताभ्यां न समास इष्यते**। **कयोप-पत्त्या? द्विवचनबहुवचनयोः प्रमाणाभावात्**। कथं प्रमाणाभावोऽत आह—**राजपुरुष इति ह्युक्ते न राजशब्दात् परं द्विवचनं बहुवचनं वा श्रूयते**। तेन वृत्तिस्थानां पदानां द्विवचनबहुवचनप्रत्यायकताया असामर्थ्याद् द्विवचनबहुवचनान्तानामसमासः। **नन्वेवमेकत्वेऽपि प्रमाणं नास्ति, एक-वचनस्याप्यश्रवणात्। अतस्तेन वा कथं विग्रहः? उच्यते। एकत्वं जात्य-पेक्षम्।** प्रातिपदिकाभिहिता जातिरेकेति। यद्वा जातिराश्रयमन्तरेणानुपपद्यमानैकं

---

१. स्तोत्रीयसं—क०।

२. 'शिशिरौ' नास्ति—ख० ग०।

तावदाश्रयमाक्षिपतीत्येकत्वप्रत्ययसिद्धिः । लिङ्गस्य तर्हि कथं सिद्धिरत आह—**लिङ्गमपि यत्किञ्चिदर्थप्राप्तं व्यक्त्यपेक्षं** गम्यते । **तस्मादेकवचनात्तेनान्यतमलिङ्गयुक्तेन विग्रहो भवति** । नन्वेवं चित्रगुरित्यत्रापि चित्रा गावो यस्येति बहुवचनेन विग्रहो न स्यात्, समासे बहुवचनाभावात् । अत आह—**चित्रगुरित्यत्र चित्रा गावो यस्येति** बहुवचनान्तेन **विग्रहे प्रयोगस्मृतिर्व्याकरणस्मृतिः प्रमाणम्, भूमादिष्वर्थेषु मतुवादय इति स्मरणात्** । मत्वर्थे हि बहुव्रीहिः । भूम्नि च मतुप् स्मर्यते । तेनासत्यपि बहुवचने बहुव्रीहिरेव भूमानं गमयतीति युक्तो बहुवचनेन विग्रहः । यत्रापि तु भूमव्यतिरिक्तेषु प्रशंसादिषु मत्वर्थेषु बहुव्रीहिः, यथा सत्पुत्रो देवदत्त इत्यादिषु । तत्र न [1]**प्रमाणान्तरमन्तरेण** द्वित्वबहुत्वे सिद्ध्यतः । "शतायुर्वै पुरुष" इत्यस्तित्वमात्रविवक्षायां बहुव्रीहिरित्येकवचनेन विग्रह इति मनुष्याणामेतावदायुः ॥३१॥

दिवसेषु भवेदेषा तस्मात् संवत्सराभिधा ।
मनुष्याणामतः सत्रे भवेदस्मिन्नधिक्रिया ॥

**इति श्रीपार्थसारथिमिश्रविरचिते तन्त्ररत्ने**
**षष्ठस्य सप्तमः पादः ॥**



( १—चतुर्होतृहोमेष्वनाहिताग्नेरेवाधिकाराधिकरणम् )

## इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ पू०

"एषा वा अनाहिताग्नेरिष्टिः" इति येयमनाहिताग्नेश्चतुर्होतृगोचरा क्रिया जपात्मिका सेष्टिरित्येवं वचनव्यक्तिं [2]मन्वानोऽर्थवादमात्रत्वादस्य वचनस्यानाहिताग्न्यधिकारप्रतिपादनपरत्वाभावाच्चतुर्होतृहोमेष्वप्याहवनीयस्याङ्गत्वादाहि -

---

१. प्रमाणान्तरेण—ख० ।

२. मत्वा—ख०

ताग्नेरेवाधिकार इत्याह। अपरस्त्वाह—सत्यमाहिताग्नेरधिकारः, अनाहिताग्नेरपि त्वस्ति वचनात् "एषा वाऽनाहिताग्नेरिष्टिः" इति। एषा ह्यत्र वचनव्यक्तिः—येयं चतुर्होतृहोमरूपेष्टिरेषाऽनाहिताग्नेरिति। तथा च वचनमर्थवद् भवति। [1]इतरथाऽर्थवादमात्रं विध्यन्तराशेषभूतमनर्थकं स्यात्। होमे तु सादृश्यादिष्ट्युपचारो युक्तो न तु जपे, अत्यन्तवैसादृश्यात्। अतोऽनेन वचनेनानाहिताग्नेरधिकारः, सामर्थ्यादेव त्वाहिताग्नेरित्युभयोरप्यधिकारः पितृयज्ञवदिति। सिद्धान्तस्तु—वाचनिकेऽनाहिताग्नावधिकारिणि सति न सामर्थ्यमात्रादाहिताग्न्यधिकारः कल्पयितुं शक्यते। पितृयज्ञे तु "अप्यनाहिताग्निना कार्यम्" इत्यन्वाचयावगमाद् युक्त उभयोरधिकारः, न त्विहैवमस्ति। तस्मादक्रतुशेषेषु चतुर्होतृहोमेष्वनाहिताग्नेरेवाधिकारः। ये तु क्रतुशेषाः[2] "ग्रहान् गृहीत्वा सप्तहोतारं जुहोति" इत्यादयः, ये वा पुरुषार्था एव वचनात् क्रत्वन्तःपातिनः, यथा "यः स्वर्गकामः स्यात् स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात्" इत्येवमादयः, तेष्वाहिताग्नेरेवाधिकारो नान्यस्य क्रत्वभावादिति ॥ १ ॥

( २—उपनयनाङ्गहोमानां लौकिकाग्नावनुष्ठानाधिकरणम् )

## उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ पू०

होममात्रोद्देशेनाहवनीयो विहित उपनयनाङ्गभूतेष्वपि प्राप्नोति। न चानाहिताग्नेराहवनीयः संभवति। न चाकृतदारस्याधानसंभवः। तस्मात् पदार्थस्याहवनीयस्यानुग्रहाय "स्नात्वा भार्यामधिगच्छेत्" इति क्रमं पदार्थधर्मं बाधित्वानुपनीत एवोपनयनाधिकारसिद्ध्यर्थं माणवको दारानुपायम्य [उपयम्य] अग्नींश्चोत्पाद्य लब्धाहवनीयः पश्चादुपनयनेऽधिक्रियेतेति पूर्वः पक्षः। सिद्धान्तस्तु नानुपनीतस्याहवनीयः सम्भवति, अनाहिताग्नित्वादिति। कथमनाहिताग्नित्वम्? अविद्यत्वादपत्नीकत्वाच्च। यत्त्वाधानसिद्ध्यर्थमनुपनीत एव दारान् गृह्णातीत्युक्तम्; तन्न, अप्रयोजकत्वात्। नह्याधानं दारसङ्ग्रहस्य प्रयोजकम्, "स्नात्वा भार्यामधिगच्छेत्"

---

१. था वाद—ख० ग०

२. शेषान्—क०

इति वचनविहितदारसङ्ग्रहलाभेन कर्मणामप्रयोजकत्वात्। नन्विदं वचनं न दारसङ्ग्रहस्य विधायकम्, किन्तु रतिधर्मप्रजाभिः प्राप्तस्य दारसङ्ग्रहस्य क्रममात्रविधायकम्। यद्येवं सुतरां तर्हि नानुपनीतस्य दारसङ्ग्रहः सिध्येत्, वाचनिककालबाधप्रसङ्गात्। ननु वाचनिकमपि क्रमं दुर्बलत्वादनादृत्याहवनीयसिद्ध्यर्थमाधित्सुर्दारसङ्ग्रहं करोत्वित्युक्तम्। नैवं युक्तम्। एवं हि स्नात्वा भार्यामधिगच्छेदिति वचनमप्रमाणमित्युपगम्येत। तच्चायुक्तम्। एवं हि श्रुतिलिङ्गाधिकरणे वर्णितम्—दुर्बलस्यापि प्रमाणस्य बाधे यदि किञ्चिदनर्थकं भवति, तदा विपरीतो बाधो भवतीति। तेन क्रममप्यनन्यगतिवचनविहितमनुगृह्य होमान्तरेषु सावकाशमाहवनीय[1]मुपनयहोमेषु बाधामहे। न च द्वे दारकर्मणी स्तः, कर्मार्थं प्रजार्थञ्च। तत्र कर्मार्थं प्रागेवोपनयनाद्भवति, प्रजार्थस्य तु स्नात्वा भार्यामधिगच्छेदिति क्रमविधानम्। अतो नेदमपि वचनमनवकाशमिति वाच्यम्, पूर्वाधिगतानामेव दाराणां प्रजार्थत्वेनापि सम्भवादित्यादि भाष्य एव प्रपञ्चितम्। तस्मादुपनयनाङ्गभूतानां माणवककर्तृकाणामाचार्यकर्तृकाणाञ्च सर्वेषां होमानामुपनयनद्वारेण विद्यार्थतया माणवकाधिकारित्वात् तस्य चाहवनीयाभावादनाहवनीये प्रवृत्तिरिति सिद्धम्। येषां तूपनयनमाचार्याधिकारम्, तेषां ये माणवकहोमास्तेऽपि स्वयमफलत्वात् फलवदुपनयनसंयोगाच्च तदङ्गभूता आचार्यकार्या इत्याचार्यस्य त्रेताग्नौ होतव्या इत्यधिकरणं निर्विषयं स्यात्। अपि च, तेषु यद्यपि नाहवनीयः प्राप्नुयात्तथाप्याचार्यकर्तृकास्तावदाहवनीय एव प्राप्नुयुः। तत्र सकलाचारविरोधः स्यादित्यास्तां तावत्॥ ११॥

( ३—स्थपतीष्टेर्लौकिकाग्निष्वनुष्ठानाधिकरणम् )

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २० ॥ पू०**

भाष्यकारेण चोदकसामर्थ्यादाहवनीयं प्रयुङ्क्ते स्थपतीष्टिरित्युक्तम्। अत्र केचिच्चोदयन्ति—चोदकेनाग्नयः संस्कृताः तस्यां प्राप्येर-

1. 'उपनय' नास्ति—ख०, उपनयद्धो—क०, उपययेद्धो—ग०

मित्युक्तं [1]भाष्यकारेण । **स च**[2] चोदको **यत्तस्यामिष्टौ न विद्यते** नोपदिश्यते, **तदेव प्रापयति । विद्यन्ते च तत्रोपदेशेनैवाग्नयः** । सर्वार्था ह्यग्नयो न तु केवलप्रकृत्यर्था इत्युक्तम् "अग्नयश्च स्वकालत्वात्" इत्यत्र । अतश्चोदकसामर्थ्या-दित्ययुक्तं भाष्यमिति । परिहरति—**यदाहवनीये** जुहोतीत्य**नारभ्यवादः प्रकृ-त्यर्थः । खादिरवन्न तु सर्वार्थः** । खादिरस्य कथं प्रकृत्यर्थतेत्यत आह—**खादि-रता हि स्रुवस्य विधीयते** । स्रुवश्च प्रकृतावेवोपदिष्टः । विकृतिषु यावदतिदेशेन स्रुवः प्राप्यते तावत् खादिरतापि प्राप्तैवेति नार्थः पुनरुपदेशेन । एवमाहवनीयोऽपि होमोद्देशेन विधीयमानः प्रकृतावेव "चतुरवत्तं जुहोति", "यद्ग्रहान् जुहोति" इति होमश्रवणात् प्रकृत्यर्थ एव दर्शपूर्णमासज्योतिष्टोमविकृतिषु [1]यजतिचोदनो-त्पत्तिष्वतिदेशेनैव होमसमकालमेवाहवनीयप्राप्तेर्नोपदेशसम्भवः । जुहोतिचोदनो-त्पत्त्यभिप्रायं तु "अग्नयश्च स्वकालत्वात्" इति तत्रैव व्याख्यातम् । स्थपतीष्टिश्च यजत्युत्पत्तिरिति चोदकेनैवाग्निप्राप्तिरिति युक्तमेव भाष्यमिति । कथं पुनरत्र पूर्वः पक्षो यावता क्रतुविधयो नाग्न्यर्जनं प्रयुञ्जते । वसन्तादिविधिप्रयुक्तार्जनोप-जीविनस्त इत्युक्तं द्वितीयेऽध्याये । न च स्थपतेर्वसन्तादिविधिप्रयुक्ताग्निमत्ता[3] सम्भवतीति कथं तत्कर्माहवनीयादिषु प्रवर्तेत ? अत आह—[4]**त्रैवर्णिकानां येषु कर्मस्वधि**[5]**कारो न तेष्वाहवनीयादिविधिप्रयुक्तिः** । त्रैवर्णिकाधि-

---

1. यजतिचोदनोत्पत्तिष्विति । यजिधातुघटितविधिवाक्यविहितेष्वित्यर्थः । एवमुत्तरत्र 'यजत्युत्पत्तिः' इत्यत्रापि यजिधातुघटितवाक्योत्पन्न इत्यर्थोऽवसेयः ।

१. भाष्ये-ख०, भाष्यम्-ग० ।

२. 'च' नास्ति-ख० ।

३. सत्ता-ग० ।

४. तत्रैव-क० ख० ग० ।

५. कारोप्रभृति त्रैवर्णिपर्यन्तं नास्ति-ख० ।

कारैरेव कर्मभिरग्न्यर्जनं न प्रयुज्यते; स्थपतीष्ट्या तु प्रयुज्यत एवेति भावः। **कस्मात्** पुनर्न तैः प्रयुज्यते? **अग्निमत्त्वात्तेषां** त्रैवर्णिकानाम्। विनैव क्रतुप्रयुक्त्या कुतोऽग्निमत्त्वमित्याह—**सामर्थ्यादग्निमत्त्वम्**। शक्नुवन्ति हि ते वसन्तादिवाक्यविहितमाधानं कर्तुमिति तैरेव वाक्यैस्तेषामग्निमत्त्वं सिद्धमिति। तथापि किमिति न प्रयुञ्जते? तत्राह—**कामश्रुतयो हि तेषामाधानश्रुति**मन्यथानुपपत्त्या **कल्पयन्ति**, न तु श्रुत्याधानं विदधति। भवतु कल्पना, अत आह—**विद्यन्ते हि तेषामाधानश्रुतयः** "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादयः[1] प्रत्यक्षश्रुताः, याभिरन्यथानुपपत्तिः क्षीयते। श्रुतमप्याधानं क्रतुभिरेव प्रयुज्येत प्रयाजादिवद्यदि क्रत्वर्थं स्यात्, न तु तदस्तीत्याह—तच्चाग्निप्रयुक्तं द्वितीयाश्रुत्या तादर्थ्यावगमात्। **न तु कर्मप्रयुक्तं** तादर्थ्ये श्रुत्यादीनामन्यतमस्याप्यभावादिति। स्थपतीष्टौ तु नैवं वक्तुं शक्यमित्याह—**एवं तु** सति यदाधानप्रयुक्तिसमर्था एव क्रतवः परप्रयुक्तलाभान्न प्रयुञ्जते न त्वशक्त्या, तदा स्थपतीष्टिर्विध्यन्तरसंपादि**ताग्निमतो निषादस्थपतेरभावा**दन्यथानुपपत्तेरक्षीणत्वात् स्वयं **चाग्निसाध्यत्वादग्निं प्रयुङ्क्ते। अग्नयोऽप्याधानं सामर्थ्या**दनुपपत्तेः प्रयुञ्जते। नह्याधानेन विनाग्नयः सम्भवन्तीति। तदेवं स्थपतीष्टिरप्यन्यथानुपपत्त्या वसन्तादिवाक्यविहिताधानव्यतिरिक्तमाधानान्तरं स्वार्थमेव प्रयुङ्क्त इति। तादर्थ्याच्चापवृज्येतेति सूत्रम्। तत्र कथं तादर्थ्यम्? कथं चापवर्गः? इति द्वयमपि दर्शयति—यत एवमियमग्निद्वारेण स्वयमाधानं प्रयुङ्क्ते, **अत इदमाधानं स्थपतीष्टिप्रयुक्तम्। अतश्च तदर्थम्**, न त्वग्निमात्रार्थम्। ततः सा **तेन स्वार्थेनाधानेन** तज्जनितै**श्चाग्निभिस्तद्व**त्याधानाग्निमती। तदर्थमाधानमग्निश्चेत्यर्थः। नन्वेवं वसन्तादिवाक्यविहितमप्याधानं किमिति कर्माङ्गं न भवतीत्यत्राह[2]—इतरेण त्वाधानेनानारभ्याधीतवाक्यविहितेन क्रतुविधिभिरप्रयुक्तेन केवलं **ब्राह्मणादयो नित्यमग्नि-**

---

१. 'आदि' नास्ति—क०।

२. अत्राहेत्यारभ्य अत आह इत्यन्तं नास्ति—ख०।

मन्तो जाताः, न तु तत्क्रत्वर्थमिति । स्थपत्याधानन्तु [1]क्रतुप्रयुक्तं क्रत्वर्थम्, अतस्तदपवर्गेऽपवृज्येत । किमर्थं पुनरपवर्गाभिधानमित्यत आह—यदि तादर्थ्यान्नापवृज्येत, ततोऽग्निमत्त्वात् समर्थ इतीतरैरपि कर्मभिरधिकारः स्यात् । सम्भावने लिङ् । मन्दधियः केचिदविद्वत्त्वादनधिकारं निश्चेतुमनीशानाः कर्मान्तरेष्वग्निमत्त्वादधिकारं मन्वीरन्निति तद्भ्रमापनुत्तयेऽपवर्गाभिधानमिति ॥ २० ॥

**अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥ सि०**

आधानं दर्शपूर्णमासानङ्गत्वान्न चोदकेनास्यां प्राप्यते । न च स्थपतीष्टिप्रकरणे आम्नायते, अतो नेदमौपदेशिकमङ्गं नाप्यातिदेशिकम् । अनङ्गञ्च न प्रयोक्तुं शक्यते । न चाङ्गभूताग्निद्वारेणापि प्रयुक्तिसम्भवः, अग्नीनामलौकिकत्वेनानिर्ज्ञातोपायत्वात् । नहि स्थपतिकर्तृकमाधानं तदुत्पादकं भवतीति किञ्चन प्रमाणमस्ति । शास्त्रैकगम्यं ह्येतदाधानेनाग्नयो निष्पद्यन्त इति । नात्र प्रमाणान्तरमस्ति । शास्त्रञ्च ब्राह्मणादिकर्तृकमेवाधानं तदुत्पादकतया प्रतिपादयतीति कुतो निषादकर्तृकस्य तदुत्पादकत्वम् । अनुत्पादकस्य च कथमाक्षेपः । तस्मान्नात्राहवनीयादयोऽङ्गम् । **लौकिकस्त्वग्निस्तदङ्गं** भवति । कुतः ? **स चाचारतः प्राप्नोति** । चशब्दो हेतौ "तस्मिन् गृह्याणि" इति गौतमस्मरणात् । नन्विदं न गृह्यकर्म, तत्कथमत्र लौकिकाग्निप्राप्तिरत आह—**तस्मिन् गृह्याणि, गृहाय हितानीत्यर्थः** । नहीदं केषुचिदेव रूढं गृह्यपदम्; किन्त्ववयवव्युत्पत्त्या गृहाय हितं गृह्यम् । गृहशब्दश्च दम्पत्योर्वर्तत इतः [ इत्यतः ] तदधिकारं कर्म गृह्यमित्युच्यते । तत्र येषु नाहवनीयस्तेषु सर्वेषु लौकिकोऽग्निरङ्गमिति ॥ २१ ॥

( ४—लौकिकाग्नावक्वीर्णिपशुयागानुष्ठानाधिकरणम् )

**अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥ सि०**

त्रैवर्णिकत्वादवकीर्णिनः संभवत्याधानेनाग्निमत्त्वम्, न स्थपतितुल्यता । न

---

1. 'क्रतु' नास्ति—ग० ।

चानुपनीतवदविद्वत्ता, ब्रह्मचारिणो विद्यासम्भवात् । न चापत्नीकत्वेनाधानासम्भवः, स्नात्वा भार्यामधिगम्याधानसम्भवात् । अथवा सैव भार्या भवतु ययाऽसाववकीर्णीति विशेषाशङ्कायामतिदेशः क्रियते—अवकीर्णिपशुरपि लौकिकेनाग्नौ[ केऽग्नौ ] स्यादिति ।

नह्यस्याधानं सम्भवति, अपत्नीकत्वात् । न च स्नात्वा भार्यामधिगम्याधानसम्भवः, "अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्" इति वचनात् । अवकीर्णे च ब्रह्मचर्यविप्लवात्तत्प्रतिसमाधानात् प्राग् गार्हस्थ्यप्रवेशासम्भवात् । न च सैव भार्या भवत्विति युक्तम्, निवृत्तस्य पापात् [1]प्रायश्चित्तस्मरणात् । तस्यामपरित्यक्तायां प्रायश्चित्ताधिकाराभावात् । किञ्च, न सर्वा भार्या भवति, किन्तु[2] येन यैव पाणिग्रहणसंस्कृता सैव तस्य भार्या भवति । तस्मादवकीर्णिपशुरपि लौकिकेऽग्नाविति सिद्धम् ॥ २२ ॥

( ५–दैवकर्मणामुदगयनादिकालनियमाधिकरणम् )

## उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥ सि०

भाष्यकारेणोपनयनप्रभृतीन्युदाहरणमिति वदता न सर्वाणि दैवान्युदाहरणमिति दर्शितम् । तत्राभिप्रायमाह—"य इष्ट्या पशुना वा" इति वचनात् । इतिकरणः[3] प्रभृत्यर्थः । सायं जुहोति प्रातर्जुहोतीति वचनाच्च सर्वत्र पौर्णमास्याममावास्यायां वा, तथा सायंप्रातःकालयोर्नियतं ग्रहणमनुष्ठानमग्निहोत्रादेः पक्षनिष्ठत्वात् । नहि शुक्लपक्षे पुण्याहादौ चाग्निहोत्राद्यनुष्ठानमिष्टम्, अहरहरनुष्ठातव्यत्वात् । अत उपनयनचूडाकरणादीनि तूदाहरणम् । तुशब्दोऽवधारणे । तत्राविशेषश्रवणादनियम इति पूर्वः पक्षः ।

---

१. 'प्रायश्चित्तस्मरणात्' नास्ति–ख० ।

२. 'किन्तु' नास्ति–क० ।

३. करणात्–क० ।

सिद्धान्तमाह—अत्र **सूत्रोपात्तेषूदगयनादिषु सर्वेषु समुचितेषु कालेषू**-पनयनादीनि कर्तव्यानि। **अन्यानि** तु येषु न समुच्चयः सम्भवति, तानि **यथा-सम्भवमे**तेषु कर्तव्यानि। यथा सर्पबलिः, अनाहिताग्न्याग्रयणम् इत्यादीन्युद-गयनमनादृत्य पूर्वपक्षाद्यादरेण क्रियन्ते, स्मृतिप्रामाण्यादविशेषश्रुतान्यप्येतानि यथास्मृति कर्तव्यानीति ॥ २३ ॥

अतः परम्—

## अहनि च कर्मसाकल्यम् ॥ २४ ॥

## इतरेषु तु पित्र्याणि ॥ २५ ॥

इति च सूत्रद्वयं भाष्यकारेण न व्याख्यातम्। तत्राभिप्रायमाह—**उत्तर-सूत्रद्वयं न व्याख्यातं निष्प्रयोजनत्वात्**, मन्दयुक्तिकत्वाद् गतार्थत्वाच्च निष्प्रयोजनत्वम्। तत्र प्रथमसूत्रस्य मन्दयुक्तिकतां दर्शयति—**अहनि रात्रौ वा कर्मसाकल्यं भवत्येव,** दैवान्यहरेवेत्यत्र ह्येषान्वाचययुक्तिः। अहनि प्रकाशितं समग्रं कर्मानुष्ठातुं शक्यं न रात्राविति। सा च नातीव युक्ता, रात्रावपि दीपवशेन साकल्यसम्भवादिति ॥ २४ ॥

( ६—पित्र्यकर्मणामपरपक्षादिकालनियमाधिकरणम् )

## इतरेषु तु पित्र्याणि ॥२५॥

इति सूत्रमधिकरणान्तरम्। पित्र्याणि कर्माण्यविशेषाद् यत्र क्वचन काले कर्तव्यानीत्याशङ्क्य दैवकालेभ्य इतरेष्वपरपक्षापराह्णादिषु कार्याणि स्मृति-प्रामाण्यात्। एवंरूपार्थवादश्च भवति—"एतद्धि वै देवानां रूपं यदुदगयनं पूर्वपक्षोऽहः" इत्युक्त्वा "इतोऽपरथा पितॄणाम्" इत्युक्तम्। तथान्यार्थदर्शन-मपि भवति—"पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणाम्" इति। तदेतत्पूर्वाधिकरणेनैव तुल्यन्यायत्वाद् गतार्थमिति न व्याख्यातम्।

अत्रापि न पित्र्यमात्रमुदाहरणमित्याह—**पित्र्याण्येतानि**। यान्येतानि वक्ष्यमाणानि तानि न नियोगत इतरेष्विति परेण सम्बन्धः। तान्येव दर्शयति—**उदकतर्पणमहरहः** कार्यं न दक्षिणायनादिकं कालविशेषमपेक्षते। तथा **पिण्डपितृयज्ञोऽमावास्यायां** सर्वस्यां कर्तव्यो न दक्षिणायनमपेक्षते। **तथोभयोरपि पक्षयोः** श्राद्धम्। चन्द्रसूर्योपरागादिनिमित्तम्, नित्यं च द्रव्यदेशब्राह्मणसन्निधानवशाद्विहितमिति तत्रापरपक्षकालानादरः। **पित्र्या** या **चातुर्मास्यकाला** क्रिया महापितृयज्ञाख्या, सापि साकमेधकाले **पूर्णमास्यामेव** कर्तव्येति नापरपक्षकालत्वसम्भवः। तेन **तानि न नियोगत इतरेषु**। यथासम्भवं त्वितरेषु तेषु च कर्तव्यानीति। अन्यानि तु दैवकालादितरेषु कालेषु कर्तव्यानीति ॥ २५ ॥

( ७–ज्योतिष्टोमे भृतिवननसोमक्रययोर्नियतताधिकरणम् )

## याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥ पू०

**"यैस्तु द्रव्यं चिकीर्ष्यते"** इत्यनेन न्यायेन द्रव्योपादानार्थत्वाद् याच्ञाक्रयणस्य **द्रव्यमनेन चिकीर्षितम्**। अतस्तत्तत्प्रयुक्तं तन्निमित्तं चेति **पूर्वपक्षः**। निर्वापाभिषवादयः संस्कारार्था न द्रव्योत्पादनार्था इति युक्तम्, यन्नियमेनानुष्ठीयन्ते। याच्ञाक्रयणन्तु द्रव्यार्जनाङ्गत्वाद्यदा द्रव्यमर्जयितव्यं तदैव कर्तव्यम्, द्रव्याभावे च तदर्जनं प्राप्तं न सर्वदेति, असत्यपि निमित्तश्रवणे प्रयोजनवशाद् द्रव्यार्जनप्राप्तौ सत्यामेव याच्ञाक्रयणं नान्यथेति ॥ २६ ॥

## नियतं वार्थवत्त्वात् स्यात् ॥ २७ ॥ सि०

**क्रतुप्रकरणाम्नानात्** क्रत्वपूर्वप्रयुक्तं **तन्निमित्तं चेत्युत्तरः** पक्षः। प्रकरणे हि निमित्तासंयोगेन श्रुतमेतन्नित्यवत् क्रतुना प्रयुज्यते। सम्भवति च प्रयोजनं द्रव्यान्तरे सत्यप्येवमर्जितं द्रव्यमपूर्वं साधयतीति कल्पनात्। यच्च प्रयोजकं तदेवानुष्ठानहेतुत्वान्निमित्तमित्यपूर्वमेवास्य प्रयोजकं निमित्तं च। अतो यदाऽपूर्वं कर्तव्यम्, तदा सर्वदा याच्ञाक्रयणं कर्तव्यमिति ॥ २७ ॥

( ८-ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् )

## तथा भक्षप्रैपाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २८ ॥

पयोव्रतादीनां पुरुषार्थत्वादन्येनापि तत्संस्कारसिद्धौ न नियमेनानुष्ठानम् । संज्ञप्तहोमस्यापि मन्त्रलिङ्गान्मायुकरणादिजनितदोषनिर्घातार्थत्वात् तदभावे निष्प्रयोजनत्वान्नानुष्ठानम्। "योऽस्मान् द्वेष्टि" इति च मन्त्रवचन[नं] लिङ्गादेव भ्रातृव्योपद्रवार्थमिति, अविद्यमानभ्रातृव्यस्य न कर्तव्यमित्येतावता विशेषेणातुल्याशङ्कायामतिदेशः क्रियते । क्रतुप्रयुक्तत्वादेषामपि नित्यमनुष्ठानं पयोव्रतादिसंस्कृत एव क्रतोरङ्गं भवति पुरुषो नान्यथा । तथा संज्ञप्तहोमोऽपि नित्यवच्छ्रुतो नानित्यं दोषनिर्घातद्वारमाश्रयितुमर्हति । तथा योऽस्मान् द्वेष्टीति मन्त्रवचनमित्येषामपि नित्यमनुष्ठानमिति ॥ २८ ॥

( ९-अपररात्रे व्रतस्यानित्यताधिकरणम् )

## अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥ सि०

पूर्वेण न्यायेन नित्यानुष्ठाने प्राप्तेऽपवादः कथ्यते । यदानुष्ठीयमानं व्रतं पुरुषस्य न जीर्यतीति शङ्क्यते, तदा प्रधानविरोधान्नानुष्ठेयम् । सम्भवति कार्ये न श्रुतस्याक्रिया युक्तेति नियमेन पयोव्रतादि कार्यम्, असम्भवति त्वानर्थक्यादक्रियेति विवेकः ॥ २९ ॥

( १०-अग्नीषोमीयपशुयागे छागवत एवाधिकाराधिकरणम् )

## पशुचोदनायामनियमोऽविशेषात् ॥ ३० ॥

किं पुनरत्र संदेहकारणम् ? [1]तत्राह भाष्यकारः—वक्ष्यमाणेनाभिप्रायेण संशय इति । तस्याभिप्रायमाह—**पशुमालभेतेति नोभयथा प्रतिभातो वाक्यात् संशयः**, किन्तु **वक्ष्यमाणेन कारणेन** । तदेव कारणं दर्शयति—**मन्त्रवर्णात्**। कथमित्यत्राह—**यदि नियतो मन्त्रवर्णः**,ततश्छाग **एवालम्भनीयः**, **अथ तु पाक्षिको** मन्त्रवर्णः, ततो यः **कश्चित्** पशुरालम्भनीय इति। कथं पुनरत्र

---

१. तदाह-ख० ।

पूर्वः पक्षः—यावतौपाधिकश्चोदनागतः पशुशब्दो व्यक्तिवचनो मन्त्रवर्णसन्निधापितं छागमेव वदति, न पश्वन्तरम्। तत्राह—**गोऽश्वादीनां पशुत्वं सामान्यमत्र सूत्रे पश्वर्थः**। नह्ययं व्यक्तिवचनः पशुशब्दः, एकखण्डेषु शब्देषु व्यक्तीनामानन्त्यव्यभिचाराभ्यामाकृत्यधिकरणे वाच्यत्वस्य निराकृतत्वात्। पाचकादयो हि सभागाः, युक्तं यत् पाकाद्युपाधीकृत्य व्यक्तौ वर्तन्ते। शक्नोति हि तत्र प्रकृत्यभिहितः पाकः प्रत्ययार्थस्य विशेषणपर्यायमुपाधित्वं प्रतिपत्तुम्। निर्भागस्तु पशुशब्दः। नात्र केनचिदुपाधिभूतानां पुच्छवत्त्वादीनामभिधानमस्ति। न चाप्रतिपन्ने विशेषणे शक्यं विशेष्यं प्रतिपत्तुम्। तत्रानेनैव विशेषणाभिधानपुरःसरं विशेष्येऽभिधीयमाने गौरवं स्यात्। तस्मात् सामान्यमेव पशुत्वं पशुशब्दार्थः। ततश्च तावन्मात्रस्याङ्गत्वात् पश्वन्तरेऽपि तस्याविकलत्वात् सर्वपशूनामनियमेनालम्भ इति ॥ ३० ॥

## छागो वा मन्त्रवर्णात् ॥ ३१ ॥ सि०

इति निगदेनैव व्याख्यातम्। तस्य चायमर्थः—यथैव विधिस्तुल्योः समानविषयत्वाद् निःसन्दिग्धघृतादिविषयार्थवादवशेन सामान्यवृत्तिरप्यञ्जनादिविधिर्विशेषे स्थाप्यते, तथैव विधिमन्त्रयोरेकविषयत्वान्मन्त्रशब्देन चोदनार्थनिर्णयो युक्त इति ॥ ३१ ॥

## न चोदनाविरोधात् ॥ ३२ ॥

**नहि विधायकाविधायकगतयोः** पशुछागशब्दयोर्विशेषणविशेष्य**भावेनैकवाक्यता**ऽवकल्पते, **"छागस्य वपाया** मेदसः" इत्यत्र मन्त्रे **वपाया विशेषणं छागशब्दः**, तदेकवाक्यत्वस्य प्रत्यक्षत्वात्। विधिगतपशुशब्दविशेषणता तु नास्य घटते। तस्माद्विशेषणत्वाभावाच्चोदनया पशुत्वमात्रं विधाय पर्यवसितव्यापारया पश्वन्तराणामप्यङ्गत्वमवगमितं मन्त्रवर्णेन [1]व्यावर्तयतश्चोदनाविरोधः

---

१. पशुशब्देषु—क०।

२. 'यतः' इत्यारभ्य षट्त्रिंशसूत्रस्थम् 'उपाधेर्विशेषणादव्यतिरेकात्' इत्यन्तं ग्रन्थं यावद् नास्ति—ख०।

स्यात् । विध्यर्थवादयोस्त्वेकवाक्यत्वात् सामान्येनोपक्रान्तो विधिः प्रागर्थवादादपर्यवस्यंस्तदेकवाक्यत्ववशेनाङ्गीकृतघृताञ्जन एव पर्यवस्यतीति वैषम्यम् ॥ ३२ ॥

अत्र सिद्धान्तवादिनश्चोद्यम्—

## आर्षेयवदिति चेत् ॥ ३३ ॥

इति । तस्य चायमर्थः—यथैवार्षेयवरणं वाक्यान्तरगतेनापि त्रित्वेन विशेष्यते, तथैव मन्त्रगतेन छागशब्देन पशुशब्दस्य विशेषणं युक्तमिति ॥ ३३ ॥

तस्योत्तरसूत्रम्—

## न तत्र ह्यचोदितत्वात् ॥ ३४ ॥

इति । तद्व्याचष्टे—आर्षेयवरणे तूभौ विधी विद्येते । तत्रैकेन विधिना वरणं विधीयते । अपरेण त्वेकं वृणीत इत्यादिनावयवसंख्यास्तुतिमता वाक्येन वरणे त्रित्वं विधीयते । तेन तत्र विधिबलाद्युक्तस्त्रित्वनियमः । न त्विहैवं केनचिच्छागो विहितश्चोदनायाः पशुमात्रगोचरत्वात्, मन्त्रस्य चाविधायकत्वात् । तस्मात् पशुमात्रोपादानम् । मन्त्रस्तु यदा छागस्तदा भविष्यति चोदनानुरोधित्वात्तस्य । अथवा यदेव चोदितं तदेव स्मारयितव्यमिति रूढिं परित्यज्य छिदेर्गमेश्च छागशब्दं व्युत्पाद्य छिन्नगमनयोगाद्विहितपुंस्त्वोऽश्वादिः छाग इत्युच्यते । वयोवचनत्वाद्वाश्वादिष्वप्यविरोधः । अथवा "अक्षर(वर्ण)साम्यान्निर्ब्रूयात्" इति नैरुक्तवचनादश्वादिशब्दानामेव वर्णागमलोपविकारविपर्यासादिभिः छागशब्दो विकारो भविष्यति ॥ ३४ ॥

## नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३५ ॥

सिद्धान्तैकदेशिवचनम् । तद्व्याचष्टे—अत्र सूत्रे पशुशब्दः छागाश्वादीनां विशेषाणां वाचकः । नहि पशुत्वं नाम सामान्यमस्ति, प्रत्यभिज्ञालक्षणं हि तत् । न च छागे कुञ्जरे च प्रत्यभिज्ञास्ति, यतः सामान्यमङ्गीक्रियेत । असतश्च नाभिधेयत्वं सम्भवतीति नानाव्यक्तीनामेव पुच्छवत्त्वाद्युप-

लक्षणीकृत्य पशुशब्दो वाचकः। यत्तूपाधिमनभिधाय नोपाधिमदभिधानं संभवतीत्युक्तम्, [1]तत्र विशेषणत्वे सत्येवं[2] स्यात्। न चैवं पुच्छवत्त्वादि विशेषणमुपाधिमात्रत्वात्। त एव ह्युपाधयो येऽभिधानाननुप्रवेशिनस्तटस्था एव सन्तः [3]विषये प्रवृत्तिमुपपादयन्ति, यथा दृतिहरिशब्दस्य पशुत्वम्, यथा च पङ्कजशब्दस्य पद्मत्वम्, यथा च सत्ताशब्दस्य शब्दशब्दस्य च प्रामाण्य[प्रमाण]ग्राह्यत्वं श्रोत्रग्राह्यत्वं च। उपाधिमनभिधायापि तत्तदुपहितवस्त्वभिधायित्वं न विरुध्यते। तथा पशुशब्दस्यापि भविष्यति। किमिति पुनरेवं व्यक्तिवचनत्वमभ्युपगम्यते यावता सामान्यवाचित्वेऽपि मन्त्रवर्णाच्छागनियमः शक्यत एव वक्तुम्? अत आह— **पूर्वस्मिन्** पूर्वपक्षवाद्युक्ते सामान्ये **शब्दार्थे**ऽभ्युपगम्यमाने सति **शक्नोति विशेष्टुं मन्त्रवर्णः स्वार्थेऽपि**। यदापि तावद्रूढिबलादजवचन एव मन्त्रवर्णः, तदापि न चोदनां नियन्तुमर्हति। स्वयमेव तु पाक्षिकः स्यात्, किमुत यदा स्वार्थं परित्यज्यावयवव्युत्पत्त्याश्वादावेव वर्तत इत्यपिशब्दार्थः। ननु व्यक्तिवचनत्वेऽप्ययं तुल्यो दोषः, तदापि हि व्यक्त्यन्तराणामपि साधारणः पशुशब्दः। कथं मन्त्रवर्णाच्छागो नियम्येतात आह—**व्यक्तिवचनत्वे तु** सति **मन्त्रगतो**ऽपि छागशब्दः **सन्निधानात्** पशुशब्दं छागविषयं **करोति**। नहि तदा रूढिपरित्यागे प्रमाणमस्ति। चोदनेति चेन्न,[4] तस्या अपि व्यक्तिविषयत्वेन मन्त्रवर्णसन्निधापितच्छागातिक्रमेण पश्वन्तरविषयत्वानुपपत्तेः। तस्माच्छागोपादानमिति ॥ ३५ ॥

तदिदं सिद्धान्तैकदेशिमतं पूर्वपक्षवादी दूषयति—

**अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥३६॥**

इति। तद्व्याचष्टे—**छागादीनां सामान्यं** पशुत्वाख्यं **पशुशब्देनोच्यत इति हेतोः स एव शब्दार्थो न छागत्वादी**ति। अयमभिप्रायः—

१. तत्र–ग०।

२. सत्येव–ग०।

३. विषयविशेषे–ग०।

४. 'न' नास्ति–ग०।

नौपाधिकः पशुशब्दो गौरवात्, तथाह्युपाध्यप्रतीतावुपाधिमत्प्रतीत्ययोगाद् अन्यस्य च तत्प्रतिपत्तिहेतोरभावात् पशुशब्दः स्वयमेव तदभिधानपुरःसरमुपहितमभिदधातीति कल्पने गौरवं स्यात्। ननु विशेषणत्वे सत्येवं स्यादुपाधिमात्रत्वे तु नायं प्रसङ्ग इत्युक्तम्। सत्यमुक्तम्। तत्त्वयुक्तम्, उपाधेर्विशेषणादव्यतिरेकात्। उपलक्षणमात्रमुपाधिरिति चेत्? न, उपलक्षणस्याप्यनवगतस्योपलक्ष्यप्रतीतिहेतुत्वासम्भवात्। काकादयो हि प्रत्यक्षप्रतिपन्ना युक्तं यद्देवदत्तगृहं शब्दानभिहिता अप्युपलक्षयन्ति; न त्विहैवं किञ्चित् पुच्छवत्त्वादीनां प्रत्यायकान्तरमस्ति, यतः स्वयं पशुशब्दो नायस्येत्। तस्माद्गौरवं स्यात्। एतेन सत्तादिशब्दानामप्यौपाधिकत्वं निरस्तम्। यत्तु प्रत्यभिज्ञाभावेन सामान्यमपह्नुतम्, तत्प्रतीतिविरुद्धम्। अस्ति खलु पुच्छवत्त्वाद्युपाधिनिरपेक्षमेव पशुत्वावभासं विज्ञानं गवाश्वादिषु। तथा च सहसैव विस्फारिताक्षस्य प्रमाणग्राह्यतापरामर्शानपेक्षः सत्प्रत्ययः, श्रोत्रग्राह्यतापरामर्शानपेक्षश्च शब्दप्रत्ययः। कान्तारे खलु गच्छन्तोऽश्रुतपूर्वसिंहादिशब्दं श्रुत्वा शब्दमात्रं विनिश्चित्य कस्यस्विदयं सत्त्वस्य शब्द इति विमृशन्तः कथमिव शब्दत्वमपह्नुवीरन्, नह्यननुभूतपूर्वस्य शब्दविशेषस्य शब्दत्वप्रत्यभिज्ञामन्तरेण श्रोत्रग्राह्यताध्यवसातुं शक्यते। नहि प्रत्यक्षग्राह्या श्रावणता। शब्दत्वेनैव प्रत्यभिज्ञासिद्धेर्न सानुमातव्या। तस्मादस्त्येवात्रापि गवादिवत् प्रत्यभिज्ञा। गवादिषु सामान्यानां भूयस्त्वाद्विशेषाणां चाल्पत्वादैकरूप्यमाविर्भूतं प्रकाशते। शब्दादौ तु सामान्यानामल्पतया नाविर्भूतमैकरूप्यमित्येतावान् भेदः। न त्वेतावता नास्तीति भ्रमितव्यम्। श्रोत्रग्राह्यतोपाधिके च शब्दशब्दे कालस्यापि तद्वाच्यता स्यात्। प्रत्यक्षं हि कालविशिष्टं शब्दं गृह्णाति। अथ श्रोत्रैकगोचरत्वमुपाधिः, कालस्त्विन्द्रियान्तरैरपि गृह्यत इति न वाच्यत्वप्रसङ्ग इत्युच्यते, एवमपि ध्वनिधर्माणां स्वरविशेषाणामुदात्तादीनां शुकशारिकामनुष्येषु भेदानुवर्तिनां तत्रापि प्रतिव्यक्ति भिन्नानां (स्वरविशेषाणां) शब्दशब्दवाच्यत्वं स्यात्, तेषामपि श्रोत्रैकगोचरत्वात्। तस्माच्छब्दत्वं नाम सामान्यं [1]शब्दशब्दवाच्यमित्यभ्युपगन्त-

---

१. शब्दवाच्य-ख०।

व्यम् । तथा सच्छब्दोऽपि सामान्यवचन एव । प्रमाणग्राह्यतोपाधिके हि सच्छब्दे यावत्प्रमाणमेव भावानां [1]सत्त्वं स्यात् । अथ तद्योग्यतेत्युच्यते, तथापि तदयोग्यानां सत्त्वं न स्यात् । सन्ति हि तदयोग्या अपि भावाः, यथा घटारम्भकाणां परमाणूनामियत्ताविशेषः । स च सन्नपि न कस्यचिदपि प्रमाणस्य गोचरः । न चासौ नास्त्येवेति शक्यं वक्तुम् । अवश्यंभावी हि परिमाणविशेषः, तेषामपरिमितत्वे हि सत्येकेनैव घटेन जगत्पूर्येत । तस्मादस्ति परिमाणविशेषः । स च सन्नपि न प्रमाणयोग्य इति सामान्यमेव [2]सत्त्वं शब्दार्थः । तथा पशुशब्दोऽपि सामान्यवचनो न छागाश्वादिविशेषवचनः । तच्च पश्वन्तराणामविशिष्टमिति तेषामपि युक्त एवालम्भ इति ॥ ३६ ॥

इदानीमेवमेव पूर्वपक्षवाद्युक्तेन न्यायेन सामान्ये शब्दार्थेऽवस्थिते—

## न वा प्रयोगसमवायित्वात् ॥ ३७ ॥

इत्यनेन सिद्धान्तसूत्रेण **प्रयोगवचनोपसङ्ग्रहार्थं छागनियमो**ऽभिधीयते । इदञ्च सूत्रं भाष्यकारेणादृष्टोत्सूत्रिका पक्षव्यावृत्तिरित्युक्तम् । वार्त्तिककारेणानपभ्रष्टेषु पुस्तकेषु दृष्ट्वा पठितमिति वेदितव्यम् । तदयमर्थः—प्रयोगवचनेन नित्यवन्मन्त्रस्योपसङ्ग्रहः । स मा बाधीति छाग एव नियम्यते । नहि मन्त्रस्य नित्यवदाम्नातस्य पाक्षिकत्वम्, छागपदस्य वा रूढिपरित्यागेन यौगिकत्वं विना कारणेनाश्रयितुं युक्तम्, चोदनायाश्छागसङ्ग्रहेऽप्यविरोधात् । ननु पश्वन्तराण्यपि तया प्राप्यन्ते ? न, [3]अशब्दार्थत्वात्तेषाम् । पशुत्वं जातिर्हि श्रुत्याङ्गत्वेन चोदिता । सा च छागेऽप्युपादीयमाने निरवशेषोपात्ता भवत्येव, तस्याः प्रतिपिण्डसमाप्तित्वात् । पश्वन्तराणि तु न केनचिदपि प्रमाणेन विनियुक्तानि, येन मन्त्रवर्णो बाध्येत । यत्तु विधायकाविधायकगतयोः पशुछागशब्दयोर्न विशेषणविशेष्यभावेनैक-

---

१. सत्त्वे–क० ।

२. सच्छब्दा–क० ।

३. शब्दा–ग० ।

वाक्यता सम्भवतीत्युक्तम्, तत्राह—**एवमुक्तेन** न्यायेन प्रयोगवचनोपसङ्ग्रहादेव छागपशुशब्दयोर्विशेषणविशेष्यभावः। ननु नायं प्रकारोऽन्यत्र दृष्टोऽत आह—**विशेषणविशेष्यभावो हि नैकविधः। स हि पदेऽप्येकस्मिन् प्रकृतिप्रत्यययोर्भवति,** यथा अश्व इति प्रकृतिप्रत्ययाभ्यां जातिलिङ्गसंख्याविशिष्टैकद्रव्यप्रतीतिः। तथा **वाक्ये द्वयोः पदयोरपि भवति,** यथा शुक्लः पट इति। तथा **वाक्यान्तरस्थयोरपि शब्दयोर्भवति, यथा "आर्षेयं वृणीते त्रीन् वृणीते" इति। तेनेहापि प्रकरणवशेन प्रयोगवचनवशेन वा** विशेषणविशेष्यभावो युक्त **इति।** यदा व्यक्तिवचनः पशुशब्दस्तदापि सन्निधिलक्षणप्रकरणवशेन मन्त्रगतश्छागशब्दः पशुशब्दाभिधानमर्थान्तरेभ्यो व्यावर्त्य छागे नियच्छति। अभिधानविशेषणमपि विशेषणमेवेत्युक्तम्—

"उक्ते विशेषणं किञ्चिदुच्यमानं विशेषणम्" इति।

यदा तु जातिवचनः, तदा प्रयोगवचनेन पशुं साधनत्वेन मन्त्रञ्च प्रकाशकत्वेन स्वीकुर्वता सामर्थ्यादनेन मन्त्रेण प्रकाशितं पशुमालभेतेति विहितं भवति। न च पश्वन्तरोपादाने तथानुष्ठातुं शक्यत इत्यर्थाच्छागेन पशुना यजेतेति छागपशुशब्दयोर्विशेषणविशेष्यभावः सिद्धो भवति ॥ ३७ ॥

पश्वन्तरानुपादाने चोदना न विरुद्ध्यते।
सामान्यं हि विधत्ते सा छागेऽप्यविकलं च तत् ॥
मन्त्रवर्णवशात्तेन छागस्यैवोपसङ्ग्रहः।
छागेनैवाधिकारोऽतः पशुबन्ध इति स्थितम् ॥

**इति [1]श्रीमहामहोपाध्यायपार्थसारथिमिश्रविरचिते तन्त्ररत्ने षष्ठस्याध्यायस्याष्टमः पादः ॥**

**समाप्तश्च षष्ठाध्यायः ॥**

---

**१. महो—क०।**

# अकारादिक्रमेण सूत्रसूची

# अकारादिक्रमेणोद्धारस्थलसूची

---

# संकेतसूची

| | |
|---|---|
| आप. ध. | आपस्तम्बधर्मसूत्रम् । |
| आप. श्रौ. | आपस्तम्बश्रौतसूत्रम् । |
| आश्व. श्रौ. | आश्वलायनश्रौतसूत्रम् । |
| ऋ. सं. | ऋग्वेदसंहिता । |
| का. सं. | काठकसंहिता । |
| ग. सू. | गणसूत्रम् । |
| गौ. ध. <br> गौ. ध. सू <br> गौ. सू | गौतमधर्मसूत्रम् । |
| जै. सू. | जैमिनीयसूत्रम् । |
| तन्त्र. तद्भू. | तन्त्रवार्त्तिकतद्भूताधिकरणम् । |
| तं. वा. | तन्त्रवार्त्तिकम् । |
| ता. ब्रा. | ताण्ड्यमहाब्राह्मणम् । |
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् । |
| तै. सं. | तैत्तिरीयसंहिता । |
| निरुक्तम् | |
| पा. सू. | पाणिनिसूत्रम् । |
| बृहट्टीका | |
| मनुः | मनुस्मृतिः । |
| महाभाष्यम् | |
| मै. सं. | मैत्रायणीयसंहिता । |
| याज्ञ. स्मृ. | याज्ञवल्क्यस्मृतिः । |
| वै. शे. | वैशेषिकसूत्रम् । |
| शत. ब्रा. | शतपथब्राह्मणम् । |
| श्लो. वा. | श्लोकवार्त्तिकम् । |